Pāraskara-Gṛhyasūtra

With the commentaries of

Karka, Jayarāma,

Harihara and Gadādhara

Benares, Samvat 1952

= 1895 A.D.

(श्रीः)

# पारस्करगृह्यसूत्रम्।

श्रीकर्कोपाध्याय-जयरामाचार्य्य-हरिहराचार्य-गदाधर-दीक्षित-प्रणीत-भाष्यचतुष्टयेन समलङ्कृतम्॥

---




श्रीमद्देवदीक्षितकृतभाष्यसहिता

## परिशिष्टकण्डिका च।

---

अथ शौचसूत्रं मूलं, हरिहरभाष्योपेतं स्नानसूत्रम्, कर्क-गदाधर-भाष्ययुतं श्राद्धसूत्रं, मूलं भोजनसूत्रञ्च।

---

**श्रीमन्महाराज-सर-कृष्णप्रतापवर्म्मसाहीवीरपुङ्गव-(के सी आइ ई) हथुआधीशस्याज्ञया**

द्विवेदपण्डित-हनुमद्दत्तशर्मणा साहाय्येन अग्निमूर्त्तिद्विवेद-पं० देवनाथशर्म-चातुर्मास्ययाजिना तथा वेदमूर्त्ति-पं० बालमुकुन्दशर्मभट्टेनाप्युभाभ्यां च परिशोध्य लोकोपकृतये केवलमधिकारिजनेभ्यो वितरीतुमेव मुद्रयित्वा प्रकाशितानि।

काश्यां मेडिकलहालाख्ययन्त्रालये

सं० १९५२

(श्रीः)

# अथ प्रस्तावना।

यद्भासा प्रविभाति विश्वमिदमत्याश्चर्य्यमुच्चावचं
नो यद्भासयितुं क्षमन्त इतरज्योतींषि यच्छाश्वतम्।
सूयन्ते यत उद्भवस्थितिलया ब्रह्मेति जेगीयते
वेदैस्तज्जगतोऽखिलस्य तमसः पारं परं भातु नः ॥ १ ॥

दृप्यद्घोरपराक्रमोरुबलवद्दैत्येन्द्रवक्षःस्थल-
क्षोभोत्क्षिप्तदन्तपाटलसटादंष्ट्राकरालाननः।
श्रीमान्मोहमतङ्गजान्दलयितुं सोऽस्मन्मनःस्तम्भतः
प्रोद्भूयात् प्रणतार्तितापशमनो-मायामृगेन्द्रो-हरिः ॥ २ ॥

कौवेर्य्यां दिशि काशिकाह्वनगराद्दूरे श्रियामास्पदं
धन्या श्री-'हथुआ' इति स्तुतगुणश्री-राजधानी चिरात्।
जाजागर्त्यनिशं समस्तवसुधालङ्कार-रत्नायिता
वेल्लन्मत्तकरीन्द्रसुन्दरघटाघण्टारवैः पूरिता ॥ ३ ॥

उच्चैरम्बरचुम्बिचारुसुषमासस्मेरसौधावली-
लग्नस्तम्भगवाक्षजालविजितस्वर्गीयशोभाग्रहा।
उद्यानोपवनोपकण्ठविलसद्गम्भीरनीराशय-
स्फारश्रीभि-रसौ तनोति मिषतामन्तः सदाऽऽनन्दथुम् ॥ ४ ॥

यस्यां राजपथाश्चकासतितरामाराममालाकुलाः
माद्यद्दन्तिमदप्रवाहसलिलप्रक्लिन्नसीमान्तराः।
आकीर्णा नरपुङ्गवैः प्रविलसत्पण्यै रगण्यैश्चते
केषां न स्पृहणीयतामुपगताः स्वान्तोत्सवं तन्वते ॥ ५ ॥

स्पर्द्धामद्य कुतो निलिम्पनगरी सार्द्धं दधात्वेतया
यस्याः स्तव्यगुणालयो विजयते कृष्णप्रतापः प्रभुः।
यस्यास्तिक्यलवप्रवर्तितसदायज्ञाहुतिप्रोत्थितै-
र्यस्मान्नव्यसुधारसैर्दिविषदामीशोऽपि कुक्षिम्भरिः ॥ ६ ॥

नानाशिल्पविकल्पिताश्मविशदप्रासादसत्कुट्टिम-
प्रान्तोत्फुल्लनिकुञ्जमञ्जुलसरस्सुस्मेरलीलावनम् ।
उच्चैर्गोपुरयामतूर्य्यरवभृत्सङ्गीतनृत्योल्लस-
*च्छ्रीगोपालनिकेतनं विजयतेऽस्यां नित्यनूत्नोत्सवम् ॥ ७ ॥

नीलाम्भोदाच्छकान्तिच्छुरितमृदुतडिद्दामशोभाभिरामं
मूर्त्तं तद्धाम राधान्वितमतिमधुरं दैन्यहृद्दीनकानाम् ।
कृष्णाख्यं भक्तवृन्दोन्मदविमलतरप्रेमपीयूषतृप्तं
नित्यं तत्रैव वृन्दावन इव रमते घूर्णमानं रसेन ॥ ८ ॥

दुर्गान्तर्ध्वनयन् स्वमन्द्रविसरेणापूरयन्नम्बरम्
कार्यव्यापृतचेतसां प्रतिदिशं स्यातुं क्षणं सूचयन् ।
मध्याह्नं प्रतिबोधयन् प्रथयते राज्ञः प्रतापस्वनम्
नित्यं यत्र शतघ्निकापृथुमुखोच्चैरुच्चर-द्धांध्वनिः ॥ ९ ॥

सद्वृत्तस्य निकेतनं, प्रतिभटक्षोणीभृतां दुर्गमम्
स्थानं सद्गुणगौरवस्य महतो, वीरश्रियां जीवितम् ।
कल्याणं कलिताकृति, श्रुतवतां कीर्तिप्रकाशास्पदं
धत्तेऽस्याः परितोऽपि राष्ट्रवलयं केषां न हर्षोदयम् ॥ १० ॥

आसीद् यत्सविधेषु कृत्स्ननिगमाकूपारमन्थाचलः
सद्योगीश्वरवृन्दवन्दितपदः श्रीयाज्ञवल्क्यो मुनिः ।
स्वाध्यायाध्ययनावबोधविहितानुष्ठाननिष्ठावतां
विप्राणामधुनाऽपि बिभ्रति धुरं धर्म्मस्य यत्राश्रमाः ॥ ११ ॥

ब्रह्मानन्दपथाध्वनीनपरिषद्वन्द्यः समस्तागम-
ज्ञानार्कोदयलीनदीनजगदज्ञानान्धकारोद्गमः ।
आवेलं नरभृत्किरीटकिरणैर्नीराजिताङ्घ्रिद्वयो-
यत्प्रान्तादुदगाद् यतिर्भुवि महादेवाश्रमाख्यो हरिः ॥ १२ ॥

आसीदस्य पितामहो बुधवरो यस्याः सदेशे पुरा
धन्यो रामधनः स मिश्रपदभाक् साङ्गत्रयीमार्मिकः ।
दुर्वारोपसरद्भवार्त्तिहुतभुक्संतापनिर्वापण-
श्रीमद्रामकथामृतोर्मिसुहितो वेदान्तशान्ताशयः ॥ १३ ॥

* श्रीगोपालमन्दिरमिदं हथुवायामतिरमणीयं प्रसिद्ध स्थानं निर्माय चैतत् श्रीमहाराजकृष्णप्रतापजननी परया श्रद्धया श्रीराधाकृष्णकिशोरमूर्तिमत्रप्रातिष्ठिपत् ।

नित्यानन्दघनं जगत्प्रसवितुर्ज्योतिर्वरेण्यं चिरा-
द्ध्यायन्नात्मकुलेऽभ्यलभ्यदयतां विष्णोर्जगत्पावनीम् ।
भूतिं द्रष्टुमसीमधीगुणजुषं स्वप्नादवेदीदसौ
पौत्रं भाविनमीश्वरांशकलयैषा किं वदन्ती स्थितिः ॥ १४ ॥

यज्ञे तत्तनयो गुणैकनिलयो धर्मार्थकर्मोन्नति-
ब्राह्मीविभ्रमरङ्गभूर्बुधजनैर्गीतावदानस्तुतिः ।
श्रीमद्रामपदाब्जचिन्तनसमनुप्राप्तो मिलिन्दश्रियं
ज्येष्ठः शिष्टवरिष्ठधीर्हरपुरो नारायणाख्यः कृती ॥ १५ ॥

एतस्माद्घृतकौशिकान्वयसुधासिन्धौ द्विजेन्द्रोऽपरः
पुष्णन्सर्वकला दिशः सितयशोज्योत्स्नाभिरापूरयन् ।
लोकेशेन धृतः सदा स्वशिरसा सन्मार्गमुद्द्योतयन्
धीरो रामनिरञ्जनोऽजनि बुधश्रेणीशिरोभूषणम् ॥ १६ ॥

हेलाभ्यस्तसमस्तशास्त्रगहनो यो बाल्य एवाचिरात्
जातस्तर्कवितर्ककर्कशमतिः साङ्गत्रयीपारगः ।
लोकान्तस्तिमिरावलीं कवलयन् ज्ञानप्रभां वर्द्धय-
न्नामोदं स तदा विदामजनयद्भूपण्डिताखण्डलः ॥ १७ ॥

व्याकृत्यर्णवमन्दरः स्वयमसावान्वीक्षिकीप्रक्रपा-
न्मीमांसास्वतिजैमिनिः कपिलवागान्दोलने कोविदः ।
योगे पारगतिः श्रुतिस्मृतिकथाधौरन्धरीगीष्पतिः
वेदान्ते तु विवेद तत्त्वविषयं यत्प्राप्य नाप्यं परम् ॥ १८ ॥

विन्दन्नास्तिकनास्तिकोभयविधे तन्त्रे स्वतन्त्रस्थितिं
तत्तन्नूतनकल्पनाकुमुदिनीपूर्णेन्दुरुद्यद्द्युतिः ।
व्यातेनेऽत्र समुद्रमुद्रितमहीपृष्ठे सुधास्यन्दिनीं
कीर्त्तिं योऽखिलशास्त्रसर्वविषयां शिष्यौघमध्यापयन् ॥ १९ ॥

प्रालेयाद्रिविजृम्भितामरधुनीधाराभिरामेऽस्यवा-
ग्गुम्फे भिन्नसमग्रशास्त्रगहनग्रन्थ्युन्नतिं बिभ्रति ।
विद्वांसः खलु केन जातपुलकाश्चित्रीयमाणा भृशं
यस्मिन्कर्णपथातिथावगमयन्नास्पन्दशून्यं मनः ॥ २० ॥

येन प्रावृडनर्गलामरनदीरंहःप्रतिस्पर्द्धिभि-
र्वाक्पीयूषभरैः सुसिक्तहृदयच्छात्रालवालस्थले ।
विद्याकल्पलतास्त्वलौकिकचमत्कृत्युक्तिभिः पुष्पिताः
हृद्योपासनवल्लरीषु कलिताः स्वानन्दकन्दैः फलैः ॥ २१ ॥

यद्वक्तृत्वविलासलुब्धहृदयैस्तत्त्वावमर्शोत्सुकैः
नानादेशसमागतैः शमदमप्रष्ठैः सुविद्यार्थिभिः ।
तत्रत्यैरपि धर्मकर्मनिरतै-र्विज्ञानशीलैर्जनैः
स्थित्या तस्यविदस्तपोवनमिवाकीर्णा तदाभूरभूत् ॥ २२ ॥

शास्त्राण्याकलयन्स नित्यविहिताचारांश्च निर्वर्त्तयन्
भक्त्या श्रीहयुग्रावनीन्द्रविदुषा स्वाराध्यमानोऽनिशम् ।
एतद्विश्वपथं विचिन्त्य वितथं निर्विद्य देशात्ततः
काश्यां तत्समये द्युसिन्धुपुलिने संन्यासमेवाकरोत् ॥ २३ ॥

आरब्धं न परेण केनचिदहो स्वाज्ञानतो विस्तृतम्
स्वस्मिन्नेव निरूप्य फल्गुविषयान् वन्धान्विधत्तेवहून् ।
सत्यं ज्ञानमनन्तमस्मि तदहं ब्रह्मेति जाजानतो
यस्याग्रे न तदाऽस्फुरज्जगदिदं भानोरिवान्ध्यं तमः ॥ २४ ॥

विद्युत्ताण्डवडम्बरं जगदिदं स्वाप्नप्रपञ्चोपमं-
सत्यज्ञानसुखैकरूपममलं ब्रह्मैव नित्यं श्रुतम् ।
तस्मिन्नेव विवर्तितं त्विति महत् यत्पादपद्मेक्षणा-
त्साक्षात्को न चकार तस्य सविधं गत्वा विमुक्तात्मनः ॥ २५ ॥

नानामार्गविघूर्णितोऽपि कुमतिस्त्यक्तस्वधर्मोऽपि यो-
विश्वेशाङ्घ्रिसरोरुहेऽपि रहितः संवन्धगन्धेन यः ।
स्वेच्छाचाररतोऽपि नास्तिकमतिर्योवज्रसारान्तरः
सोऽपि ब्रह्मपथप्रवृत्तिरभवद्यत्सूक्तिमृष्टाशयः ॥ २६ ॥

देशाः सन्ति च केन येऽस्य सुयशश्चन्द्रांशुभिर्भासिताः
भूपाः केऽङ्घ्रिविसप्रसूनयुगलं मूर्द्ध्नाऽस्य ये नार्चिषुः ।
कोऽद्याप्यस्ति सुधीर्न चेदृगिह यन्नामामृताकर्णना-
त्स्यान्नानन्दभरेण कम्पितशिराः प्रोद्भूतरोमोद्गमः ॥ २७ ॥

यं भान्तं चानुभाति प्रथितमिदमलं नश्वरं दृश्यमानं
तद्ब्रह्मैवाहमस्मीत्यनुभवपरमानन्दमग्नोयतीन्द्रः ।
निर्द्वन्द्वो नित्यतृप्तो विगलितजगदाकारभानोऽप्ययासा-
वासीदासिन्धुभूमीवलयनृपशिरोरत्ननीराजिताङ्घ्रिः ॥ २८ ॥

राजद्राजेन्द्रमौलिस्फुरदमलमणिश्रेणिवेणीप्ररोह-
द्रोचिर्वीचिप्रतानच्छुरितपदनखोन्निद्रचन्द्रांशुजालैः ।
प्रह्वीभूतद्विजालीहृदयकुवलयोल्लासलीलां दधानोऽ-
विन्दद्वैराग्यमूर्त्तिः स्मरहरनगरे यो यतीन्द्रप्रतिष्ठाम् ॥ २९ ॥

धन्यास्ते दिवसाश्च येष्वयमभूद्विश्वैकवन्द्यो यति-
र्विश्वेशांशइवोरुकीर्त्तिलहरीप्रक्षालिताशान्तरः ।
यस्य श्लाघ्यगुणस्रजो बुधजनैः कण्ठेऽवतंसीकृताः
स्तुत्वातं हृदिगद्गदाक्षरपदं मूर्द्ध्ना नमामो मुहुः ॥ ३० ॥

धन्येयं तत्पदकमलयोर्भक्तिपीयूषसिक्ता
रिक्ताऽंहोभिर्जयति हयुग्रालक्षणा राजधानी
यस्यां राजत्यनुपमघनस्नेहसंश्लेषलीला-
वेल्लद्रत्नक्वणितविभवा सन्ततं राजलक्ष्मीः ॥ ३१ ॥

तत्राभूत्प्रबलारिवारणघटाविद्रावणः केसरी
श्रीराजेन्द्रप्रतापसाहिनृपतिः सन्नीतिरत्नाकरः ।
श्रीमत्स्वामिपदाब्जसेवनलसन्निस्सीमकीर्त्तिच्छटा-
विच्छायीकृतपूर्णशीतकिरणो भूपेन्द्रचूडामणिः ॥ ३२ ॥

तत्सूनुर्नयविक्रमैकनिलयः प्रोद्दामसारस्वत-
स्फारस्वारसिकप्रसादविशदस्वान्तः सतामग्रणीः ।
जागर्त्ति प्रतिपन्थिपार्थिवचमूपाथोधिमन्थोद्धुरः
कीर्त्तिप्रीणितविश्वकर्णहृदयः कृष्णप्रतापो नृपः ॥ ३३ ॥

यः सत्यस्य निधिर्हरेः प्रतिनिधि-र्विश्वम्भरारक्षणे
श्रौतस्मार्त्तपथप्रचारसविता विद्यालतावारिदः ।
यस्मिञ्छासति मेदिनीं कलिरपित्रासात्परित्यज्य तां
मन्ये क्वाऽपि गतो-रणादपगतैः प्रत्यर्थिसार्थैः समम् ॥ ३४ ॥

तच्छ्रीमहामहिमभारतभूषणश्री-
'कृष्णप्रताप'-नरदेवमहोदयेषु ।
जर्ल्पेदमन्दतरकन्दलितानुरागं
तन्नव्यकाव्यमिह कोन कविर्बुभूषुः ॥ ३५ ॥

यस्यामलं कथयितुं गुणचक्रवालं
वाचालतां नयति संप्रति कौतुकं मे ।
वाणीमिहाम्बुभरसान्द्रघनोदयर्त्तु-
र्मोदन्मयूररमणीमिव सप्रमोदम् ॥ ३६ ॥

तत्काव्यमल्पमतिजल्पितमप्यनल्प-
स्यान्ते सतां तु गुणगौरवभाजनं स्यात् ।
स्वात्यां हि मुक्तमुदकं जलदेन नूनं
मुक्ताफलत्वमुपगच्छति शुक्तिगर्भे ॥ ३७ ॥

वक्तुं गुणान्पुलकितावयवानिवाद्य
यत्कीर्त्तिरेवसुजनान्मुखरीकरोति ।
प्राप्ते मधावविरतं मधुरं विरौति
यत्कोकिलस्तदतिसौरभपुष्पवीर्यम् ॥ ३८ ॥

यं सर्वदेशजनता विनता नितान्त-
मास्तिक्यहेमनिकषोपमतां दधानम् ।
भक्त्या सभाजयति संप्रति साधुवादं
कः श्लाघितुं पटुरमुष्य गुणानुवादम् ॥ ३९ ॥

प्रौढप्रतापतपनोऽरिमुदुस्सहांशु-
र्यस्यानिशं ज्वलति नीतितरङ्गिणीषु ।
वेल्लद्यशोऽम्बुजवनानि विकासयन्स-
द्रत्नोपकारमनिशं प्रदिशञ्जगत्याम् ॥ ४० ॥

सद्धर्म्मचिन्तनविसृत्वरकीर्त्तिवल्ली-
फुल्लप्रसूनसुरभीकृतदिङ्मुखश्रीः ।
विद्योतते विबुधसद्मसु यस्य चञ्च-
त्क्षीराब्धितुङ्गलहरीललिता गुणश्रीः ॥ ४१ ॥

आस्वाद्य यस्य सुयशोऽमृतसिन्धुभङ्गान्
के नारुचिं विदधते विबुधाः सुधासु ।
प्रच्योतन्मरन्दसहकारनवप्ररोह-
मुत्सृज्य रज्यति मधौ क्व नु षट्पदाली ॥ ४२ ॥

यत्कीर्त्तिकल्पलतिका प्रतिकालमेव
व्याजृम्भते बलिरिपोरिव बभ्रुमूर्त्तिः ।
नो माति मातिलघुतां गमितेषु तेषु
मर्त्योरगेन्द्रसुमनोभुवनोदरेषु ॥ ४३ ॥

निःशेषनिर्जितजगत्त्रितयोपमानाः
यत्कीर्त्तिकुन्दकलिकाः कलिकालगन्धम् ।
व्याधुन्वतीरिह न के तदसीमधीम-
द्धन्याः स्वकर्णपुलिनेष्ववतंसयन्ति ॥ ४४ ॥

स्फूर्जत्प्रतापचकिताः प्रकृतीरदभ्रां
वृद्धिं निनाय निजनीतिभिरद्भुता यः ।
विस्तारयन् सुजनरञ्जनबन्धुतायाः
ख्यातिं जयत्यधिगुणस्तवनीयकीर्त्तिः ॥ ४५ ॥

अस्तं कदाचिदपि नैति न चास्ति गम्यो-
राहोर्मुखस्य न घनोदरमण्डलस्य ।
कृत्स्नं जगद्दलितवैरितमा यदीयोऽ-
पूर्वः प्रतापतपनो विशदीकरोति ॥ ४६ ॥

यस्य प्रतापहरिदश्वकरैरुदारै-
रुद्दीपिते जगति चामरशर्वरीषु ।
नन्दन्ति चात्मपतिभिः सह धीरयाक्षो-
मुह्यन्ति मीलितदृशोऽपि कुनीत्युलूकाः ॥ ४७ ॥

यस्य प्रतापदहनज्वलितात्मवर्ग-
दुष्कीर्त्तिधूमकलुषा इव वाष्पनीरैः ।
मुक्ताफलैरिव सपत्नवधूदृशोऽपि
स्वाराधयन्त्यधिहृदुन्नत-गम्भुयुग्मम् ॥ ४८ ॥

कल्पान्तविद्युदधिकद्युतिमत्कृपाण-
धाराजले गजघटावलिदुर्गमेऽपि ।
किन्नाययावसकृदस्य गुणौघलुब्धा
लब्धुं स्वशुद्धिमिव तत्प्रतिपक्षलक्ष्मीः ॥ ४९ ॥

यत्पुण्यशैलभवकीर्त्तितरङ्गिणीयं
संसारसिन्धुमनुभात्यभितो विशन्ती ।
यत्रावगाह्य कतिचित्कृतिनः सलीलं
दैन्यौष्ण्यपातनकृते कुशली भवन्ति ॥ ५० ॥

बुद्ध्या गुरुप्रतिमया च मुहुः प्रशास-
न्नीत्यान्यवीविशदयं जनताः स्वधर्म्मे ।
यस्य प्रसादलवमेत्य भृशं कृतार्थाः
के वार्थिनो न विजहु-र्निजमर्थिभावम् ॥ ५१ ॥

धर्म्मार्थविभ्रमसुधारसपानभूमि
र्वेदान्ततर्क्कगुणडम्बरडिण्डिमश्रीः ।
यत्संसदुल्लसति देवसभाभिरामा
कामादिजिद्गुणगणैकविकासधामा ॥ ५२ ॥

यः स्वान्तिकं गतवतः सुजनानमन्द-
मानन्दसान्द्रहृदयांस्तनुतेऽनुतर्षम् ।
अल्पस्मितैर्मुहुरपारकृपाप्रवाह-
पूरोर्म्मितामिव गतैर्निजवाग्विलासैः ॥ ५३ ॥

ओजोऽन्विता सरसमञ्जुलरीतिराज-
दौदार्य्यभृद्गुणिजनेषु धृतप्रसादा ।
आभात्यलङ्कृतिचमत्कृतिशालिमूर्त्ति-
र्यद्भारती सुकवितेव मनोऽभिरामा ॥ ५४ ॥

औदार्य्यशीलविषये भुवि कर्णकल्पो
वीर्य्यैधनञ्जय इवार्द्दितवैरिवर्गः ।
यो धर्मसूनुरिव राजति सत्यसन्धः
सिन्धुर्धियां श्रुतिकथागमजागरूकः ॥ ५५ ॥

चित्रं किमत्र विषयैर्यदि नानुनीतं
चित्तं विकारपथमस्य महामहर्षेः ।
नानोकहोन्मथनशक्तिभृताऽनिलेन
प्रोन्मूल्यतेऽतिगुरुविन्ध्यनगेन्द्रशृङ्गम् ॥ ५६ ॥

किं वर्णये तमिह यस्य गुणप्रताने
विश्वान्तगेऽनुगतमञ्जुबुधालिपुञ्जान् ।
गुम्फन्ति पाण्डुरयशस्सुमनोभिरेव
हारान्नवोक्तिरचनाचतुराः कवीन्द्राः ॥ ५७ ॥

के सन्ति भूमिवलये हृदयालवो वै
ये तद्गुणश्रुतिचमत्कृतशेमुषीकाः ।
नव्यार्थभव्यरचनैर्वचनैरजस्रम्
गायन्ति संप्रति न तस्य यशो विचित्रम् ॥ ५८ ॥

कर्पूरकुन्दशरदिन्दुजयप्रगल्भा
यत्कीर्त्तयस्त्रिजगतीमपि लङ्घयन्ति ।
या गनमप्रतिममीश्वरमाश्रयन्ति
कस्ताः प्रकाममवरोद्धुमलं चरन्तीः ॥ ५९ ॥

एतद्यशोऽमृतपयोधितरङ्गपूर्णे
लोकेऽखिलेऽधिगगनं सुरसुन्दरीभिः ।
जानेऽत्र मुक्तमवगाहनकेलिहेतोः
पोप्लूयते रजततुम्बकमिन्दुबिम्बम् ॥ ६० ॥

निर्व्याजभक्तिरसभावितविश्वनाथ-
माविभ्रतो विविधवैदिकधर्मवृत्तम् ।
यस्याद्य शारदसुधांशुमयूखलेखा-
निष्कलमषाणि चरितानि जगत्पुनन्ति ॥ ६१ ॥

प्रीणाति यद्यतिवरानथ वृद्धिवृद्धान्
शुद्धानिहान्नवसनादिभिरन्वहं यः ।
तेनास्य कुत्र भुवने न यशःपताका
राकामृगाङ्कधवलाकृतयो लसन्ति ॥ ६२ ॥

सोऽयं जयत्यखिलभूतलवन्दनीय-
चारित्ररुक्मनिकषो नृपमौलिरत्नम् ।
संदर्शयन्निखिलभारतसारवत्तां
सङ्ख्यातिगैर्गुणगणैर्हथुआवनीन्द्रः ॥ ६३ ॥

विकासिताशेषसुहृत्सरोरुहो
निमीलितारातिकदम्बकैरवः ।
प्रकाशते श्रीहथुआवनीपतिः
कृष्णप्रतापाभिध एव भानुमान् ॥ ६४ ॥

देवः सोऽयं प्रथितमहिमा सर्वविद्यानदीनां
स्वैरक्रीडोल्लसितविविधज्ञानवैदग्ध्यलक्ष्मीः ।
हर्षोत्कर्षं निखिलजगतीगीयमानावदानो
नित्यं दानोत्तरलितमना राजति प्रौढवीर्य्यः ॥ ६५ ॥

ब्रूमः सारस्वतकुलभुवां किं निधेः शेमुषीनां
भूयोऽनेकाद्भुतगुणकथाकीर्णकर्णोत्सवस्य ।
यस्याचामन्त्यमलमनसः सज्जनाः शारदेन्दु-
स्यन्दस्यूतामृतमदहरीं कीर्त्तिसिन्धुं सतर्षम् ॥ ६६ ॥

यः श्रीमांश्छ्रुतिवर्त्मवर्द्धनघनश्रद्धानुबद्धाशयो
देवांस्तर्प्पयितुं विदेह इव धीमान्नव्यहव्यामृतैः ।
चातुर्मास्यमखं चकार विधिवत्काश्यामसीमै-र्धना-
सारैर्यत्र जिगाय धर्मजनुषस्तं राजसूयाध्वरम् ॥ ६७ ॥

श्रौतस्मार्त्तपथाध्वनीनधिषणैः श्रीकाशिराजेन त-
त्पौरैर्धीरवरैः स यज्वऋषभः सार्द्धं प्रमोदावृतः ।
व्यात्युक्षीमतनोत्तदात्ववभृथेनाशेषदोषैः कले-
र्मुक्तः श्रीसुरनिम्नगामलजले नापावि कस्को जनः ॥ ६८ ॥

यस्मिन् यागमहे महेशनगरी चञ्चत्पताकाञ्चिता
रम्भास्तम्भविलम्बितोरणलसत्प्रासादमालाकुला ।
आसीद्वेदपथप्रवृत्तविदुषां संमानविस्राणने
सङ्ख्योत्तीर्णवितीर्णकाञ्चनझणत्कारैः परं पूरिता ॥ ६९ ॥

तत्सामग्र्यजुषां मुदाग्रजनुषां पुण्यः समुद्घोषणैः
काश्यां कस्य न लोचनोत्सवमुदं धत्तेऽग्निहोत्रालयः ।
सायं प्रातरुपाहिताहुतिहसद्वैश्वानरप्रोल्लस-
ज्ज्वालैर्यस्य समन्ततः कलिमलं प्रोत्सारयन् राजते ॥ ७० ॥

नद्धा दृष्टिविलोभिचित्रपटलैर्यत्तुङ्गभित्तिस्थली
बद्धा बन्दनमालिकास्तत इतः प्रान्तेषु माध्वीमुचः ।
यत्रेष्टिं प्रति देवतार्चनचमत्कारिप्रसूनावली-
हृद्यामोदभरैर्बिभर्त्ति खलु यः स्पर्द्धासमृद्धिं दिवः ॥ ७१ ॥

यस्याश्चर्य्यमतीर्नयाध्वनिरतस्याचारपूतात्मन-
स्तर्क्यन्ते न विचित्रमन्त्रगतयः स्वैरन्तरङ्गैरपि ।
दाक्षिण्येन समर्थयन्त इह तानर्थानसाध्यानपि
ज्ञायन्ते फलदर्शनेन नियतेर्वैदग्ध्यसीमा इव ॥ ७२ ॥

कामं सन्तु सहस्रशोऽवनिभृतो धन्या वदान्याः क्षितौ
तेषां कोऽपि विलक्षणोऽयमुदभून्मध्ये स्फुरन्सद्गुणैः ।
स्मारं स्मारमसीमगौरववतीं यद्भूरिदानावलीम्
वारं वारमहो भवन्ति कृतिनो वाचंयमा वर्णने ॥ ७३ ॥

यः काश्यां प्रतिमन्दिरं प्रतिपथं प्रत्यापणं नागरै-
रित्थं धार्मिकसत्तमैर्गुणिजनैः संकीर्त्यतेऽहर्निशम् ।
चारित्रैरवतारयन्कृतयुगं योगं कलेर्लङ्घयन्
मन्ये संहरतीति भूमिवलये कालव्यवस्थामपि ॥ ७४ ॥

वेदान्तार्थविशुद्धबोधविकसत्तत्त्वप्रमेयांशके
सारासारविचारमार्मिकतया राजर्षितां बिभ्रतः ।
मर्य्यादामयतोऽम्बुधेरिव भुवो गम्भीरताशालिनः
पृथ्वीयं सुयशोभिरस्य वलिता राजन्वती राजते ॥ ७५ ॥

लोका येन कृतार्थिताः सुचरितैः संपाविताः पूर्वजा
यज्ञस्तम्भवती कृता शिवपुरी वीतापदो विद्वराः ।
किञ्चाभाति सपत्नदर्प्पदलनोद्दामैकदेशोऽजसा
धन्या धर्म्मधुरन्धरेण धरणीयं स्वर्गतोऽप्यर्हिता ॥ ७६ ॥

आयत्ता यद्गुणौघैरखिलजनशुभारम्भसम्भावनीयैः
सत्कर्त्तुं सा व्यतारीत्प्रमुदितहृदया भारताधीश्वरी यम् ।
तत् "के सी आइ ई" मत्पदमथ स महीपालमालार्चितोऽपि
श्रीमांस्तस्या-मुदेऽशूशुभदुदितमुदो-नीवृतो निर्मिमाणः ॥ ७७ ॥

यस्योर्वीरमणस्य पार्वणविधुप्रत्यर्थिकान्त्याखिले
लेखानां सदनेऽधुना धवलतां कीर्त्या समासादिते ।
स्वर्लोकाधिपतिं पुलोमतनया सोऽप्यभ्रमोर्वल्लभम्
सोऽपि स्वर्गतरङ्गिणीजलरुहां नालं समन्विष्यति ॥ ७८ ॥

संत्यक्तान्कलभाषिभिर्द्विजगणैः सन्नद्धवैरिद्रुमान्
दग्ध्वा तद्वधुदुर्यशोभिरभितो धूमैर्दिशः पूरयन् ।
अप्यश्रान्तदुरन्तधारनिपतन्नेत्राम्बुपूरप्लुते
तत्कान्ताहृदये ज्वलत्यनुदिनं यस्य प्रतापानलः ॥ ७९ ॥

मुक्ताविद्रुमगुच्छसच्छविहरौ कुन्दारविन्दोज्ज्वलौ
सूर्य्याचन्द्रमसावयो विदधतौ व्यर्थोदयार्थौ किमु ।
पातुं किन्नु कृतोत्सवौ शिवविधी यस्य त्रिलोकीमयम्
तर्क्कः संप्रति पश्यतामुदयते कीर्त्तिप्रतापावुभौ ॥ ८० ॥

उद्यत्पूर्णशरत्सुधांशुसुषमामल्पीयसीं तन्वती-
मानन्दोदधिवीचिकां खलु दिवः कूलङ्कषां कुर्वतीम् ।
यत्कीर्त्तिद्युतिमद्भुतामधिजगत् सून्मीलनं जग्मुषी-
मन्तः शीलयते चकोरचरितान्यालोक्य चेतः सताम् ॥ ८१ ॥

मुक्ताजालमृणालपाण्डुररुचां मालिन्यमातन्वती
मानध्वंसमनारतं विदधती सौधाकरीणां त्विषाम् ।
निन्दन्ती घनसारशारदघनप्रोत्फुल्लमल्लीरुचो
यत्सत्कीर्त्तिरियं चकास्ति जगतामानन्दसन्दोहिनी ॥ ८२ ॥

यत्स्वर्गीयमृगीदृशां स्तनतटे कर्पूरपङ्कायते
दिङ्नद्व्योमधुनीतरङ्गनिकरे यद्राजहंसायते ।
लोकालोकवनीतमस्ततिषु यज्ज्योत्स्नाप्रवाहायते
वक्तुं तस्य यशोऽमलं सुविपुलं कस्यास्ति वाग्विस्तरः ॥ ८३ ॥

दैन्योदग्रदवाग्निकर्कशमहःसंपर्कतप्ताशयः
को नैवेशजटाटवीपरिपतत्स्वर्गापगासोदरे ।
यस्य श्लाघ्ययशःसुधाम्बुधिरसे मङ्क्त्वा विधूय व्यथा-
मानन्दोदयशृङ्गसौधपदवीमारोढुमाकाङ्क्षति ॥ ८४ ॥

चेतो यस्य भवाटवीपटुतरक्लेशान्धकारच्छटा-
चण्डांशुश्रुतिबोधनष्टनिखिलद्वैतप्रतिष्ठास्पदम् ।
श्रीमत्साम्बशिवाङ्घ्रिपङ्कजनखप्रेङ्खत्प्रभामालिनी-
पूरस्मेरतरङ्गसङ्गि परमानन्दाम्बुधिं गाहते ॥ ८५ ॥

यस्मिन्नाश्रितपालनैकनिरतौ धर्मार्थमोक्षस्थितौ
स्फारीभूतनितान्तनिर्मलमतौ दिग्व्याप्तकीर्त्तौ स्थिताः ।
मन्ये सत्यदयातपःप्रभृतयः सम्भूय सर्वे गुणाः
स्पर्द्धन्तेऽद्य मिथो निसर्गमलिनं जित्वा करालं कलिम् ॥ ८६ ॥

प्रायो भूपेष्विदानीं कलिमलिनतया लङ्घिताचारमार्गे-
ष्वन्येष्वाभाति नायं यत हवनविधिर्भस्मनीव प्रयुक्तः ।
श्रेयोधाम्नि त्वमुष्मिन् मणिरिव मुकुटे धर्मसूनूपमाने
सम्यक्सन्मार्गरक्षाव्रतसुकृतनिधौ भ्राजते राजशब्दः ॥ ८७ ॥

श्रीविश्वेशाङ्घ्रिपद्मद्वितयमधुकरस्तत्कृपापाङ्गभङ्गी-
संपल्लब्धात्मविद्याऽम्बुधिविमलजलक्षालिताज्ञानपङ्कः ।
चञ्चत्क्षीराब्धिवेलावनिवनललितोत्फुल्लमल्लीमतल्ली-
माबिभ्रत्कीर्त्तिवल्लीं नरपतिमुकुटाध्याशिनीं राजते यः ॥ ८८ ॥

कीर्त्तिर्जागर्ति यस्य प्रवरकविवचोभङ्गिरङ्गे स्फुरन्ती
यद्दानोत्कर्षवार्त्ता सुखयति निखिलज्ञानभाजां समाजम् ।
श्रीमत्कृष्णप्रतापक्षितिपतितिलकायाद्य तस्मै चिरायुः
सौख्यं दद्यादविद्यातिमिरदिनकरः क्लेशहारी स्मरारिः ॥ ८९ ॥

स एव खलु परमास्तिको लोकहितावतारो महाराजः सांप्रतं देशस्यास्य त्रैव-र्णिकानां चावस्थाः पूर्वापेक्षया प्रायः क्रमशो गुणैर्हीयमाना दीनाः शोचनीयतामु-पगताश्चाभिपश्यन् तन्मूलकारणं तु संस्कारह्रास-शिक्षाह्रास-प्रभृतिप्रज्ञापराधजो-ऽधर्म एव भवितुमर्हतीति मन्वानः, तथाहि यदा यद्देशनगरजनपदमण्डलप्रधाना

नियन्तारो धर्मपथमुत्क्रम्याधर्म्येण प्रजां वर्त्तयन्ति तदा तदाश्रितोपाश्रिताः पौरजानपदा व्यवहारोपजीविनोऽपि तमधर्मं क्रमशोऽभिवर्द्धयन्ति ततश्च शनैर्वर्वृद्ध्यमानः सोऽधर्मः प्रसभं धर्मपादमन्तर्धत्ते। ततस्तेऽन्तर्हितधर्माणः प्राणिनो वर्णाश्रमानुसारं विहितप्रतिषिद्धकर्मणामाचरणपरीहारावमत्य निर्मर्य्यादं यथाकाममाचरन्तस्त्रिवर्गात्परिच्यवन्ते। तादृशां हि प्राणिनामनिष्टफलभूयिष्ठत्वात् सत्वगुणकर्मणां पृथिव्यादीनामपि गुणपादपरिभ्रंशः संपद्यते तेन च शस्यानां स्नेहवैमल्यरसवीर्य्यविपाकप्रभावगुणपादांशपरिभ्रंशः संजायते। ततोहीयमानगुणैराहारैर्हीनगुणैर्विहारैश्च यथापूर्वमुपष्टभ्यमानानि जलाग्निमारुतपरीतानि जनताशरीराणि बलवीर्य्यप्रज्ञोत्साहव्यवसायादिभिर्हीयमानतामभिप्रपद्यन्ते । अतोऽस्य कृत्स्नवसुधामण्डलमण्डनायमानस्य देशस्यावस्याः प्राणिनश्च श्रेयःसंपदामायुषश्च क्रमशो ह्रासमुपलभन्ते। इति निर्द्दिष्टक्रमेण संस्कारह्रास-शिक्षाह्रासाद्यपराधजन्मनोऽधर्मस्यैव महिम्ना देशेऽस्मिन्नशुभोत्पत्तिरभूत्। अथ प्रागपि यथावत्संस्कारादिजन्यधर्मसद्भावप्रभावादेव अमरसमौजसो ऽतिविमलविपुलप्रभावाः प्रत्यक्षदेवदेवर्षियज्ञविधिविधानाः शैलेन्द्रसारसंहतस्थिरशरीरा मारुततुल्यजवबलपराक्रमा दयादानदमनियमतपस्तत्परा व्यपगतभयरागद्वेषमोहादिदोषा अमितायुषः पुरुषा अभूवन्। इति विमर्शशालिनां मनीषावतामतिरोहितमेव सर्वम्। तथा च विहितसंस्काराद्यभावहेतुकेनाधर्मेण अभिभूयमाने धर्मे पुनरपि तदनुष्ठानमेव वर्णिनामाश्रमिणाञ्च संपादयिष्यत्यैहिकमामुष्मिकं च श्रेयोऽनुत्तमं तेजस्वित्वादिकञ्चात्मनो गौरवभावम्। तदनुष्ठानं च तज्ज्ञानप्रचारमन्तरा न संभवति, तर्हि निरुक्तविषयज्ञानसम्पत्तये स्मार्त्ताग्निकर्मपद्धतिप्रदर्शकं षोडशसंस्कारादिगृह्यकर्मणां प्रतिपादकं मूलभूतमेतदेव पारस्करगृह्यसूत्रं नाम । एतदनुरोधेनैव वाजसनेयिनां द्विजानां गर्भाधानादियावत्संस्कारा जगति प्रवर्त्तन्ते, ग्रन्थेऽत्र वर्णाश्रमांश्चोद्दिश्य विहितोऽभ्युदयार्थः संस्कारादिरूपः प्रवृत्तिलक्षणो हि धर्मः स च देवादिस्थानसुखप्राप्तिहेतुरपि सन् परमेश्वरार्पणबुद्ध्यानुष्ठीयमानः फलाभिसन्धिरहितो भवत्यन्तःकरणशुद्धये। शुद्धसत्वस्य चात्मज्ञाननिष्ठायोग्यताप्राप्तिद्वारा ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुतामपि प्रतिपद्यते। इति सूक्ष्मतरमीक्षमाणानां प्रेक्षावतामपरोक्षमेव रहस्यम् । इत्यादिकमनुसंदधानो जगदुपचिकीर्षया केवलं विदुषां महात्मनां चरणयोः समर्प्पयितुमधिकारिजनेभ्यश्च वितरीतुमेव सुखेन तत्कृत्स्नार्थावबोधहेतवे भाष्यचतुष्टयसंवलितं कात्यायननिर्मितैरेव परिशिष्टक-

गिडका-शौचसूत्र-स्नानसूत्र-श्राद्धसूत्र-भोजनसूत्रैः सहालङ्कृतम् उक्तविषयरत्नप्रचुरप्रचारार्थं ग्रन्थमेतमीश्वरी-मायया विश्वमिव मुद्रायन्त्रालये तमेकमपि शीघ्रमनेकतां प्रापयितुमाज्ञया मुद्रापयामास । अथैतस्य प्रणेता पारस्करनामा महर्षिः किं कात्यायनाद्भिन्न आहोस्वित् स एव ? अत्र प्रमाणान्तरानुपलम्भात् वृद्धपरंपरोपदेशप्रसिद्ध्या कात्यायन एव वररुचिनाम्ना पारस्करनाम्ना च ख्यात इत्यध्यवसीयते । ( वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् । पाणिनिं सूत्रकारञ्च प्रणतोऽस्मि मुनित्रयम् ) इत्यभियुक्तोक्तेः । अथायं विश्वामित्रगोत्रोत्पन्न उक्तो हरिवंशे यथा ( विश्वामित्रस्य च सुता देवरातादयः स्मृताः । विख्यातास्त्रिषु लोकेषु तेषां नामानि मे शृणु ॥ देवश्रवाः कतश्चैव यतः कात्यायनाः स्मृताः ) अत्र गर्गादिभ्यो यञ् ' यञन्तत्वात् यूनि लोहितादिकतन्तेभ्यः फक् ' तस्यायनादेशे निष्पन्नः कतर्षिगोत्रापत्यं युवा कात्यायन इति । अनेनैव महर्षियाज्ञवल्क्यप्रधानशिष्येण शुक्लयजुर्वेदकर्मणामनुष्ठानपद्धतिबोधकं षड्विंशत्यध्यायात्मकं कातीयं श्रौतसूत्रं गृह्याख्यं स्मार्त्तसूत्रञ्च प्रणीतं तथा अष्टादशपरिशिष्टानि पाणिनिसूत्रवार्त्तिकानि च निरमायिषत इति ।

सोऽयं ग्रन्थः श्रीहथुआधीशस्याज्ञया काशीकुम्भजतीर्थशीर्षीवसतेर्द्विवेदोपाख्यश्रीयुतपण्डितवरहनुमद्दत्तशर्म-महात्मनो महता साहाय्येन तदीयपुण्यराशिलेशलब्धावतारेण तदात्मजात-द्विवेदपण्डितदेवनाथशर्मचातुर्मास्ययाजिना तथा गणुकरोपाख्य पं० बालमुकुन्दशर्मभट्टेन च संशोध्यमुद्रयित्वा प्रकाशतां नीतः । यदत्र यत्नतः शोधितेऽपि क्वचिद् भ्रमात्प्रमादाद्दृष्टिदोषाद्वा विषमं स्थितं मर्त्यस्वभावमुलभमशुद्ध्यादिकं तत्सारासारविचारपारदृश्वभिर्दयामयाशयैः कृपादृष्ट्या विशोध्य समीकरणीयं करणीयञ्च निजाशीराशिभिरास्तिकप्रवरस्यास्य महाराजस्य सर्वान्तर्यामिचैतन्यापरिच्छिन्नानन्दस्वरूपपरमेश्वरप्रसादसंपदा चतुर्वर्गविषये मुहुरभीष्टसाफल्यम् ।

शाण्डिल्यान्वयसिन्धुचन्द्र-सरयूपारीणविप्राग्रणी-<br>
रायुर्वेदमहाब्धिमन्दरगिरी-रोगार्त्तचिन्तामणिः ।<br>
विश्वव्यापियशाः शिवाङ्घ्रिरतगोपालत्रिपाठ्याह्वयः<br>
सूरिर्भूरिदयार्णवो-विजयते सद्वैद्यचूडामणिः ॥ ९० ॥

तस्मात्तद्वहुपुण्यराशिकणिकालेशादवाप्तोद्भवो
धर्म्मव्याकृतिवैद्यशास्त्रकविताव्यायामरम्याशयः ।
राज्ञस्तस्य कृपामृतोर्मिमुदितोऽकार्षीद्गणेशो-भिष-
क्काव्यं तल्लघु भूमिका-कृतिमिषाद्विद्वज्जनानां मुदे ॥ ९१ ॥

सं० १९५२

श्रीपूज्यचरणचातुर्मास्ययाजीद्विवेदपण्डित-
देवनाथशर्ममहाशयानामाज्ञावशंवदः ।
श्री-काशी-भदैनी-वास्तव्यो
वैद्य गणेशदत्त-शर्मा त्रिपाठी ॥



॥ श्रीः ॥

# ॥ अथ ससूत्रकर्कादिभाष्यचतुष्टयविषयाणां सूचनपत्रम् ॥

## प्रथमकाण्डम् ।

एकादशकण्डिकाकर्कभाष्यम् ।



एकादशकण्डिकाजयरामभाष्यम् ।



एकादशकण्डिकाहरिहरभाष्यम् ।



द्वादशकण्डिकाकर्कभाष्यम् ।

॥ श्रीः ॥

# पारस्करगृह्यसूत्रम् ।

मूलम् ॥ अथातो गृह्यस्थालीपाकानां कर्म ॥ १ ॥ परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरुप्याज्यमधिश्रित्य पर्यग्निकुर्यात् ॥ २ ॥ स्रुवं प्रतप्य सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् ॥ ३ ॥ आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान्कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात् ॥ ४ ॥ एष एव विधिर्यत्र क्वचिद्धोमः ॥ ५ ॥ ॥ * ॥ ॥ १ ॥ ॥ * ॥

( १ ) कर्कोपाध्यायप्रणीतपारस्करकृतस्मार्तसूत्रव्याख्या ।

श्रीगणेशाय नमः ॥ पारस्करकृतस्मार्तसूत्रव्याख्या गुरूक्तितः । कर्कोपाध्यायकेनेयं तेने नत्वा जगद्गुरुम् ॥ १ ॥ श्रौतान्याधानादीनि कर्माण्युक्तानि तदनन्तरं स्मार्तान्यनुविधीयन्ते तत्रैतदादिमं सूत्रम् ॥ अथातो गृह्यस्थालीपाकानां कर्मेति व्याख्यास्यतइति सूत्रशेषः । तत्रायमथशब्द आनन्तर्ये द्रष्टव्यः श्रौतानुविधानानन्तरं स्मार्तान्यनुविधीयन्त इति, आनन्तर्यप्रज्ञप्तिप्रयोजनं श्रौतेष्वधिकाराद्गुपस्पृशेदप इत्येवमन्तं सर्वकर्मसाधारणं यत्तस्यात्रापि प्रवृत्तिर्यथा स्यादिति ॥ पूर्वं प्रवृत्तं श्रौतानामुपनिबन्धनमित्येतत्सूत्रकारप्रवृत्त्या ज्ञायते प्रोष्येत्य गृहानुपतिष्ठते पूर्ववदिति श्रौतेषु गृहोपस्थानं विहितं तत्पूर्ववदित्यनेनातिदिश्यते ॥ तथाच प्रोक्षणीश्च पूर्ववदिति ॥ अतःशब्दो हेत्वर्थः ॥ यस्माच्छ्रौतान्यभिहितानि स्मार्तान्येवानुशिष्यन्ते अतस्तानि वक्तव्यानीति ॥ ननु च पूर्वं स्मार्तानां गर्भाधानादीनामनुष्ठानं पश्चाच्छ्रौतानामित्यतोऽनुष्ठानक्रमेण स्मार्तान्येव पूर्वमभिधेयानीति ॥ अत्रोच्यते, नैतदेवम् प्रत्यक्षश्रुतित्वात् । प्रत्यक्षाहि श्रुतयः श्रौतेषु, स्मार्तेषु च पुनः कर्तृसामान्यादनुमेयाः श्रुतयः, स्मार्तानामपि हि वेदमूलत्वमुक्तम् ॥ तस्मात्प्रत्यक्षश्रवणात्तान्येव पूर्वमभिधीयन्ते न गर्भाधानादीनि ॥ अपरे त्वन्यथा वर्णयन्ति, स्मरणादेव स्मृतीनाम्प्रामाण्यम् । अव्यवच्छिन्नं हि स्मरणमष्टकादीनामष्टकाः कर्तव्या इति ॥

अनादिरयं संसारः । स्मरणमप्येषामनाद्येवेति ॥ ननु चोक्तमापस्तम्बेन तेषामुत्सिन्नाः पाठाः प्रयोगादनुमीयन्त इति यतो वेदमूलकत्वम् ॥ नैतदेवम् । शाखानां सतीनामुत्सादो भवति नासतीनाम्, तत्रायं दोषः स्यात् य एव कश्चित्काञ्चिच्छाखां न पठति तस्यैव तद्विहितं स्मार्त्तं स्यात् यस्तु पुनः पठेत्तस्य श्रौतमिति ॥ तत्र पुरुषापेक्षया तदेव श्रौतं स्मार्त्तञ्चेत्युक्तरूपता स्यात् ॥ स्मरणात्स्मृतिरिति चान्वर्थिकी संज्ञा, युक्तकर्मानुष्ठानं स्मरणं स्यात् ॥ मनुगौतमवसिष्ठापस्तम्बादिभिर्ग्रन्थेनोपनिबद्धम् । तस्मात्कर्तृसामान्यादनुष्ठेयोऽयमर्थ इत्यनुमीयते । तथाच लिङ्गम् ॥ नैमित्तिकं व्याहृतिहोमं प्रकृत्यामनन्ति ॥ यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ। यदि यजुष्टो भुव इत्याग्नीध्रीये अन्वाहार्यपचने वा हविर्यज्ञे । यदि सामतः स्वरित्याहवनीय इति प्रकृत्याह यद्यविज्ञातं तत्सर्वाण्यनुद्रुत्याहवनीये जुहवथेति ॥ अविज्ञातं च यन्न विज्ञायते किमार्ग्वेदिकं याजुर्वेदिकं सामवेदिकं चेति विनष्टं कर्म तत्स्मार्तमविज्ञातमित्युच्यते ॥ वेदमूलत्वं त्ववश्यमेवान्विष्यमाणं ज्ञायते तत्किं मूलमिति, तस्मात्स्मृतिप्रवाहादेवायमर्थोऽनुष्ठेय इति गम्यते ॥ गृह्यःस्थालीपाकानां कर्मेति ॥ गृह्यः शालाग्निः आवसथ्य औपासन इत्यनर्थान्तरं, तत्र ये स्थालीपाकाः ते गृह्यस्थालीपाकाः, स्थालीपाकग्रहणं चाज्यपुरोडाशधानासक्त्वाद्युपलक्षणार्थम्। कथं ज्ञायते। येन स्थालीपाकमुपक्रम्याज्यमुपसंहरति निरुप्याज्यमधिश्रित्येत्येवमादि । आज्यग्रहणमपि स्थालीपाकाद्युपलक्षणार्थमेव ॥ सर्वेषामेवेदं साधारणं कर्मोच्यते ॥ नह्यत्र प्रकृतिविकारभाव इति ॥ विध्यादिविध्यन्तवती प्रकृतिरित्युच्यते, यत्र पुनर्विध्यादिमात्रं विध्यन्तो नास्ति सा विकृतिरिति ॥ न चात्र विध्यादिविध्यन्तस्वरूपता, सर्वाण्येव स्थालीपाकादीनि प्रकृत्य धर्मविधानम् ॥ परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधायेत्येवमादिपर्यग्निकुर्यादित्येवमन्तं सूत्रम् ॥ परिसमूहनादयः पञ्च पदार्था भूमिशुद्ध्यर्था इति केचित् ॥ तदयुक्तम् । नह्यशुद्धे देशेऽग्नेः स्थापनप्रवृत्तिर्युक्तेति, तस्मादग्न्यर्था एव । यत्र यत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्या इति ॥ न च गृह्यस्थालीपाकादिकर्मान्तर्भाव एषाम्, येनैष एव विधिर्यत्र क्वचिद्धोम इत्यभिहितेऽपि पुनरभिधीयते उपलिप्तउद्धृतावोक्षितेऽग्निमुपसमाधायेति । नूनमनेनाप्रवृत्तिस्तत्रेति । तस्मादग्न्यर्था एवैत इति । तथाच लिङ्गम् । उद्धृते वा अवोक्षितेऽग्निमादधातीति । प्रयोजनं स्वस्थानस्थितएवाग्नौ क्रियमाणे स्थालीपाकादौ न क्रियन्ते ॥ दक्षिणतो ब्रह्मासनमास्तीर्य इत्यासनमात्रं स्यात् न ब्रह्मा, आस्तरणमात्रोपदेशात् । क्वचिच्चोपवेशनविधानाद्दक्षिणतो

ब्रह्माणमुपवेश्येति, नैतत् अदृष्टप्रसङ्गात् ॥ नह्यदृष्टाय कश्चिदासनप्रकल्पनं कुर्यात् ॥ ब्रह्मासनव्यपदेशानुपपत्तेश्च, तस्मादुपवेशनार्थमास्तरणम् । यत्तूक्तं दक्षिणतो ब्रह्माणमुपवेश्येति तदुदपात्रावसरविधित्सया प्रस्तुतब्रह्मोपवेशमज्ञापकम्, ब्रह्मासनं चास्तीर्य कर्तव्यम् ॥ प्रणीय ॥ अपः, अपां हि प्रणयनं सर्वार्थं दृष्टम्. इहापि तद्वत्सर्वार्थानामपाम्प्रणयनम् ॥ परिस्तीर्य ॥ अग्निम् । अर्थवदासाद्येति प्रयोजनवत्पात्रजातमासादयतीत्यर्थः ॥ तच्च कार्यक्रमेण मुख्यक्रमानुग्रहात् । पवित्रे कृत्वा । यथा प्रदेशान्तरे कृते इति ॥ प्रोक्षणीः संस्कृत्य । उत्पवनोद्दिङ्गनादिना । अर्थवत्प्रोक्ष्य । कार्यवतः प्रोक्षणम् । निरुप्याज्यमधिश्रित्य । आज्यनिर्वाप औपयिकस्य पृथक्क्रिया। अधिश्रित्य अग्नौ ॥ पर्यग्निकुर्यात् ॥ आज्यं स्थालीपाकं चेति । उपलक्षणार्थत्वादाज्यस्य ॥ स्रुवम्प्रतप्य ॥ तापयित्वा तमेव दर्भैः ॥ सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् । आज्यमुद्वास्य ॥ अग्नेः सकाशात् ॥ उत्पूय । पवित्राभ्यां तदेवाज्यम् । अवेक्ष्य प्रोक्षणीश्च पूर्ववत् ॥ चशब्दादाज्यं पूर्ववदेव, अतः पवित्राभ्यामित्युक्तम् । प्रोक्षणीसंस्कारश्च पर्युक्षणार्थः । स्रुवस्यापि संस्कारो होमार्थः तत्संस्कारस्यादृष्टार्थता माभूदिति ॥ उपयमनान्कुशानादाय समिधोऽभ्याधायेति ॥ उपयमना उपग्रहार्थीया दर्भाः । पर्युक्ष्य जुहुयात् ॥ पर्युक्षणम्प्रोक्षणीभिरित्युक्तम् ॥ एष एव विधिर्यत्र क्वचिद्धोम इति ॥ एष विधिरेव न मन्त्राः समाम्नायाभावात् ॥ यत्र क्वचिद्धोमः शान्तिकपौष्टिकादिष्वपीति, क्वचिच्छब्दश्च गृह्याग्निव्यतिरेकेणापि यथाऽयं विधिः स्यादिति ॥ यथा दावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयादिति ॥ १ ॥

(२) आचार्यजयरामकृतसज्जनवल्लभाख्यगृह्यविवरणम् ।

श्रीगणेशाय नमः ॥ श्रीमत्केशववागणाधिपपदद्वन्द्वप्रभाभासुरस्वान्तोत्साहविजृम्भितामलमतिग्राह्ये च गृह्ये कृतेः । दृष्ट्वा कर्कमुखैः कृतानि बहुशो भाष्याणि गृह्याणि तद्वेशार्थं स्वमतेरिदं जयपरो रामो लिखत्यादरात् ॥ १ ॥ कतिसूनुपदाम्भोजपरागोद्गसरालकः । जयरामश्च मेवाडो भारद्वाजसगोत्रकः ॥ २ ॥ श्रीमन्मान्त्रिकमाधवः श्रुतिसुधासिन्धोर्विगाहाप्रतद्वैयस्तत्कृपयाऽभवद् द्विजवरः श्रीकेशवस्तादृशः । तत्पादद्वयकस्पृशा कृतमिदङ्कातीयगृह्यस्य सद्भाष्यं सज्जनवल्लभं सुविदुषां प्रेष्ठं शिवप्रीतये ॥ ३ ॥ आचार्यापरनामधेय इति यो दामोदरोऽभूद् द्विजो भारद्वाजसगोत्र आत्म-

रतिरस्याप्यात्मजस्तादृशः ॥ नाम्ना श्रीबलभद्र आत्तसुयशास्तत्सूनुनैतत्कृतम् भाष्यं सज्जनवल्लभं जययुजा रामेण मत्याप्तये ॥ ४ ॥ पाठे योऽभूद्विसंवादो गृह्यसूत्रे समन्तके । उपेक्षितः स विदुषां मतमाज्ञाय युक्तितः ॥ ५ ॥ प्रयुक्ता अन्यथा मन्त्रा न भवन्त्यर्थसाधकाः । संसाधयन्ति सर्वार्थान्यथावत्पठिता यदि ॥ ६ ॥ नानाशाखीयमन्त्राणां पाठशुद्धौ स्वपाठकाः । व्याख्यातारः प्रमाणं स्युरित्येतच्छिष्टनिश्चयः ॥ ७ ॥ अतस्तत्तत्स्वशाखीयमन्त्राणामग्र्यपाठकात् । पृष्ट्वा सुबोधं गृह्यस्य भाष्यं वै लिख्यते स्फुटम् ॥ ८ ॥ तत्क्षन्तव्यं सुनिपुणैः स्वबालचापलं यथा । मया च स्वीयबोधाय क्रियते न तु तद्विदाम् ॥ ९ ॥ आदौ तावत्सूत्रकृता श्रौतान्याधानादिकर्माण्युक्तानि स्मार्तानि चाभिधीयन्ते ॥ तत्रैतदादिमं सूत्रम् ॥ अथातो गृह्यस्थालीपाकानां कर्मेति वक्ष्यतइति सूत्रशेषः ॥ तत्रायमथशब्द आनन्तर्ये ॥ श्रौतानुविधानानन्तरं स्मार्तान्यनुविधीयन्तइति ॥ आनन्तर्यप्रज्ञप्तिप्रयोजनञ्च श्रौतेष्वधिकाराद्युपस्पृशेदप इत्येवमन्तं सर्वकर्मसाधारणं यत्तस्यात्रापि प्रवृत्तिर्यथा स्यादिति ॥ पूर्वं श्रौतानामुपनिबन्धनं प्रवृत्तमित्येतत्सूत्रकारप्रवृत्त्या ज्ञायते ॥ प्रोष्येत्य गृहानुपतिष्ठते पूर्ववदिति ॥ श्रौतेषु गृहोपस्थानमुक्तन्तत्पूर्ववदित्यनेनात्रातिदिश्यते, तथा प्रोक्षणीश्च पूर्ववदिति । अतःशब्दो हेत्वर्थः ॥ यस्माच्छ्रौतान्युक्तानि स्मार्तान्येवावशिष्यन्ते, अतस्तानि वक्तव्यानीति ॥ ननु पूर्वं स्मार्तानां गर्भाधानादीनामनुष्ठानं पश्चाच्छ्रौतानामित्यतोऽनुष्ठानक्रमेण स्मार्तान्यादौ वक्तव्यानि । तन्न प्रत्यक्षश्रुतित्वात् ॥ प्रत्यक्षा हि श्रुतयो ऽनुमेयाभ्यो बलीयस्य इति ॥ श्रौतेषु च प्रत्यक्षाः श्रुतयः, स्मार्तेषु तु कर्तृसामान्यादनुमेया इति स्मार्तानामपि वेदमूलकत्वमुक्तम्भट्टैः ॥ तस्मात्प्रत्यक्षश्रवणाच्छ्रौतान्येव पूर्वमेवानुविहितानीति ॥ केचित्पुनरन्यथा वर्णयन्ति स्मरणादेव स्मृतीनां प्रामाण्यम्, अव्यवच्छिन्नं हि स्मरणमष्टकादीनामष्टकाः कर्तव्या इति ॥ अनादिरयं संसारः स्मरणमप्येषामनाद्येवेति ॥ ननु चोक्तमापस्तम्बेन तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्तइति तस्माद्वेदमूलकत्वम् । नैतदेवम् । शाखानामुत्सादस्तु सतीनामेव भवति नासतीनाम् ॥ तत्र चायं दोषः स्यात् य एव कश्चित्काञ्चिच्छाखान्न पठति तस्यैतद्विहितं स्मार्तं स्यात् यस्तु पठेत्तस्य श्रौतमिति ॥ तत्र पुरुषापेक्षया तदेव श्रौतं स्मार्तं चेत्ययुक्तरूपता स्यात्, स्मरणात्स्मृतिरिति संज्ञा चान्वर्थिकी, युक्तकर्मानुष्ठानञ्च स्मरणम् मनुगौतमवसिष्ठापस्तम्बादिभिर्ग्रन्थेनोपनिबद्धम् । तस्मात्कर्तृसामान्यादनुष्ठेयोऽयमर्थ इत्यनुमीयते, तथा च लिङ्गम्, नैमित्तिकं व्याहृतिहोमं प्रकृत्यामनन्ति, यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ, यदि यजुष्टो भुव इत्याग्नीध्रीये अन्वाहार्यपचने वा हवि-

र्यन्ने यदि सामतः स्वरित्याहवनीय इति प्रकृत्याह । यद्यविज्ञातमसत्सर्वाणि अनुदृत्याहवनीये जुहवथेति अविज्ञातं च यन्न ज्ञायते किमार्ग्वेदिकम् किं वा याजुर्वेदिकम् सामवेदिकं वेति विनष्टञ्च यत् स्मार्तमविज्ञातमित्युच्यते वेदमूलकत्वं ह्यवश्यमेवान्विष्यमाणं ज्ञायते तत्किम्मूलमिति तस्मात्स्मृतिप्रवाहादेवायमर्थोऽनुष्ठेय इति गम्यते इति श्रौतस्मार्तत्वचिन्ताप्रयोजनन्नित्यत्वादिज्ञापनार्थम् श्रौतन्नित्यङ्काम्यं स्मार्त्तञ्च नित्यमिति ॥ गृह्यस्थालीपाकानामिति गृह्यः शालाग्निः आवसथ्याग्निः औपासन इति नार्थान्तरम् ॥ तत्र ये स्थालीपाकाः स्थालीपाकग्रहणञ्चाज्यपुरोडाशधानासक्ताद्युपलक्षणार्थम् यतः स्थालीपाकमुपक्रम्याज्यमुपसंहरति ॥ निरूप्याज्यमधिश्रित्येति ॥ एवमाज्यग्रहणमपि स्थालीपाकाद्युपलक्षणम् यतः सर्वेषामेवेदं साधारणङ्कर्मोच्यते नह्यत्र प्रकृतिविकृतिभाव इति ॥ विध्यादिविध्यन्तवती प्रकृतिः ॥ यत्र पुनर्विध्यादिमात्रं विध्यन्तस्तु नास्ति सा विकृतिरिति ॥ न चात्र विध्यादिविध्यन्तस्वरूपता। यतः सर्वाण्येव स्थालीपाकादीनि प्रकृत्य धर्मविधानम् ॥ परिसमुह्येत्यादि सूत्रम् ॥ तत्र परिसमूहनादयः पञ्चपदार्था भूमिशुद्ध्यर्था इति केचित् तदयुक्तम् नह्यशुद्धे देशेऽग्निस्थापनप्रवृत्तिर्युक्तेति तस्मादग्न्यर्था इत्यपरे अतो यत्र यत्राग्नेः स्थापनन्तत्र तत्रैते कर्तव्याः न च गृह्यस्थालीपाकादिकर्मान्तर्भाव एषाम् यत एष एव विधिर्यत्र क्वचिद्धोमस्तत्राभिहिते पुनरभिधीयते ॥ उपलिप्तउद्धृतावोक्षितेऽग्निमादधीतेति ॥ नूनमनेनाप्रवृत्तिस्तत्रैषाम् तस्मादग्न्यर्था एवैत इति ॥ तथा च लिङ्गम् ॥ उद्धृते वा अवोक्षितेऽग्निमुपसमादधतीति तत्प्रयोजनञ्च स्वस्थानस्थित एवाग्नौ क्रियमाणे स्थालीपाकादौ नैते क्रियन्त इति ॥ दक्षिणतो ब्रह्मासनमास्तीर्य इत्यासनमात्रं स्यात् ब्रह्मोपवेशनम् आस्तरणमात्रोपदेशात् क्वचिद्ब्रह्मोपवेशनविधानाद्दक्षिणतो ब्रह्माणमुपवेश्येति तन्न अदृष्टप्रसङ्गात् नह्यदृष्टार्थं कश्चिदासनप्रकल्पनङ्कुर्यात् ब्रह्मासनव्यपदेशानुपपत्तेश्च तस्माद्ब्रह्मोपवेशनार्थमास्तरणम् यत्तूक्तम् दक्षिणतो ब्रह्माणमुपवेश्येति तदुदपात्रस्थापनावसरविधित्सया प्रस्तुतब्रह्मोपवेशनञ्चास्यज्ञापकम् ब्रह्मासनमास्तीर्य कर्तव्यम् ॥ प्रणीय ॥ किम् अपः अपां हि प्रणयनं सर्वार्थन्दृष्टम् तद्वदिहापि सर्वार्थानाम् प्रणयनम् परिस्तीर्य ॥ किम् अग्निम् ॥ अर्थवदासाद्येति ॥ प्रयोजनवत्पात्रजातमासाद्येत्यर्थः ॥ प्रयोजनञ्च कार्यक्रमेण मुख्यक्रमानुरोधात् ॥ पवित्रे कृत्वा ॥ यथा प्रदेशान्तरे कृते तथैवेति ॥ प्रोक्षणीःसंस्कृत्य ॥ उत्पवनोद्दिङ्गनादिना ॥ अर्थवत्प्रोक्ष्य इत्यनेन कार्यवताम्प्रोक्षणम् ॥ निरूप्याज्यमधिश्रित्य इत्याज्यस्य निर्वाप औपयिकस्य पृथक्क्रिया । अधि-

श्रित्य अग्नौ पर्यग्नि कुर्यात् । आज्यं स्थालीपाकादि च ॥ उपलक्षणत्वादाज्यस्य स्रुवं प्रतप्य अधोमुखन्तापयित्वा पुष्करतः ॥ तमेवदर्भैः संमृज्याभ्युक्ष्य च पुनः प्रतप्य तथैव निदध्याद्दक्षिणतः ॥ आज्यमुद्वास्य अग्नेः सकाशाच्चरोः पूर्वेण अग्नेरुत्तरतोऽवस्थाप्य तदुत्तरतः स्थालीपाकमपि ॥ तदेवाज्यमुत्पूय पवित्राभ्याम् ॥ अवेक्ष्य अपद्रव्यमपाकर्तुम् प्रोक्षणीश्च पूर्ववदुत्पूय ॥ च शब्दादाज्यं च पूर्ववत् अतः पवित्राभ्यामित्युक्तम्॥ प्रोक्षणीसंस्कारश्च पर्युक्षणार्थः स्रुवसंस्कारश्च होमार्थः॥ तत्संस्कारस्यादृष्टार्थता माभूदिति ॥ उपयमना उपग्रहणार्था ये दर्भाः पर्युक्षणं च प्रोक्षणीभिरित्युक्तम् एष एव विधिरिति यत्र होमस्तत्रैष विधिरेव न तु मन्त्राः समाम्नायाभावात् ॥ यत्र क्वचिद्धोम इति शान्तिकपौष्टिकादिष्वपि ॥ क्वचिद्ग्रहणञ्च गृह्याग्निव्यतिरेकेणापि यथायं विधिः स्यादिति ॥ यथा दावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयादिति ॥ १ ॥

(३) अग्निहोत्रिहरिहरविरचितम्पारस्करगृह्यसूत्रव्याख्यानम् ।

श्रीगणेशाय नमः ॥ इष्टापूर्तक्रियासिद्धिहेतुं यज्ञभुजाम्मुखम् । अग्निं त्रयीवचःसारं वन्दे वागधिदैवतम् ॥ १ ॥ पारस्करकृते गृह्यसूत्रे व्याख्यानपूर्विकाम् । प्रयोगपद्धतिङ्कुर्वे वासुदेवादिसंमताम् ॥ २ ॥ अथातो गृह्यस्थालीपाकानां कर्म ॥ अथ श्रौतकर्मविधानानन्तरम् यतः श्रौतानि कर्माणि विहितानि स्मार्तानि तु विधेयानि अतो हेतोर्गृह्ये आवसथ्येऽग्नौ ये स्थालीपाकाः गृह्यस्थालीपाकाः तेषां गृह्यस्थालीपाकानां कर्म क्रियानुष्ठानमिति यावत् वक्ष्यत इति सूत्रशेषः । तत्रादावाधानादिसर्वकर्मणां साधारणो विधिः प्रथमकण्डिकयोच्यते तत्र गृह्येष्वावसथ्याधानादिषु सर्वकर्मसु यजमान एव कर्ता नान्य ऋत्विक् तस्यानुक्तत्वात् अथ यजमानः सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तः कर्मस्थानमागत्य वारणादियज्ञीयवृक्षोद्भवासने प्रागग्रानुदगग्रान्वा त्रीन्कुशान्दत्वा प्राङ्मुख उपविश्य वाग्यतः शुद्धायां भूमौ सप्तविंशत्यङ्गुलमण्डलं परिलिख्य तत्र । परिसमुह्य । त्रिभिर्दर्भैः पांसूनपसार्य ॥ उपलिप्य ॥ गोमयोदकेन त्रिः ॥ उल्लिख्य ॥ त्रिः खादिरेण हस्तमात्रेण खड्गाकृतिना स्फ्येन उल्लिख्य प्रागग्रा उदक्संस्थाः स्थण्डिलपरिमाणास्तिस्रोरेखाः कृत्वा ॥ उद्धृत्य ॥ अनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो लेखाभ्यः पांसूनुद्धृत्य ॥ अभ्युक्ष्य ॥ मणिकाद्भिरभ्युक्ष्याभिषिच्य ॥ अग्निमुपसमाधाय ॥ कर्मसाधनभूतं

लौकिकं स्मार्तं श्रौतं वाऽग्निं *आत्माभिमुखं स्थापयित्वा ॥ **दक्षिणतो ब्रह्मासनमास्तीर्य** ॥ तस्याग्नेर्दक्षिणस्यान्दिशि ब्रह्मणे आसनं वारणादियज्ञियदारुनिर्मितं पीठमास्तीर्य कुशैः स्तीर्त्वा तत्र वरणाभरणाभ्यां पूर्वसम्पादितं कर्मसु तत्त्वज्ञं ब्राह्मणं तदभावे पञ्चाशत्कुशनिर्मितम् अग्नेरुत्तरतः प्राङ्मुखमासीनं स्वयमुदङ्मुख आसीनोऽनुलेपनपुष्पमाल्यवस्त्रालङ्कारादिभिः सम्पूज्य अमुककर्माहं करिष्ये तत्र मे त्वममुकगोत्रामुकप्रवरामुकशर्मन् ब्राह्मण त्वं ब्रह्मा भवेति वृत्वा भवामीत्युक्तवन्तमुपवेश्य ॥ **प्रणीय** ॥ अप इति शेषः तद्यथा अग्नेरुत्तरतः प्रागग्रं कुशैरासनद्वयङ्कल्पयित्वा वारणं द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तारं चतुरङ्गुलखातं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतमात्रस्थोदकेन पूरयित्वा पश्चिमासने निधायालभ्य पूर्वासने स्थापयित्वा ॥ **परिस्तीर्य** ॥ अग्निम्बर्हिर्मुष्टिमादाय ईशानादिप्रागग्रैर्बर्हिभिरुदक्संस्थमग्नेः परिस्तरणं कृत्वा ॥ **अर्थवदासाद्य** ॥ यावद्भिः पदार्थैरर्थः प्रयोजनं तावतः पदार्थान् द्वन्द्वं प्राक्संस्थान् उदगग्रानग्नेरुत्तरतः पश्चाद्वा आसाद्य ॥ तद्यथा पवित्रच्छेदनानि त्रीणि कुशतरुणानि पवित्रे साग्रे अनन्तर्गर्भे द्वे कुशतरुणे प्रोक्षणीपात्रं वारणं द्वादशाङ्गुलदीर्घं करतलमितखातं पद्मपत्राकृति कमलमुकुलाकृति वा आज्यस्थाली तैजसी मृन्मयी वा द्वादशाङ्गुलविशाला प्रादेशोच्चा तथैव चरुस्थाली संमार्गकुशास्त्रयः उपयमनकुशास्त्रिप्रभृतयः समिधस्तिस्रः पालाश्यः प्रादेशमात्र्यः स्रुवः खादिरो हस्तमात्रः अङ्गुष्ठपर्वमात्रखातपरिणाहवर्तुलपुष्करः । आज्यं गव्यम् चरुश्चेद्व्रीहितण्डुलाः षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमितं परार्द्धम् । बहुभोक्तृपुरुषाहारपरिमितमपरार्द्धम् तण्डुलाद्यन्नं पूर्णपात्रन्दक्षिणा वरो वा यथाशक्ति हिरण्यादिद्रव्यम् ॥ **पवित्रे कृत्वा** ॥ प्रथमं त्रिभिः कुशतरुणैरग्रतः प्रादेशमात्रं विहाय द्वे कुशतरुणे प्रच्छिद्य **प्रोक्षणीः संस्कृत्य** ॥ प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकन्दक्षिणेनोच्छाल्य प्रणीतोदकेन प्रोक्ष्य ॥ **अर्थवत्प्रोक्ष्य** ॥ अर्थवन्ति प्रयोजनवन्ति आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि प्रोक्षणीभिरद्भिरासादनक्रमेणैकैकशः प्रोक्ष्य असञ्चरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रन्निधाय ॥ **निरूप्याज्यम्** ॥ आसादितमाज्यं आज्यस्थाल्यां पश्चादग्नेर्निहितायाम्प्रक्षिप्य चरुश्चेच्चरुस्थाल्याम्प्रणीतोदक-

* अभिमुखमग्निं प्रणयन्तीति गोभिलसूत्रात् ।

मासिच्य आसादितांस्तण्डुलान्प्रक्षिप्य ॥ अधिश्रित्य ॥ तत्राज्यं ब्रह्माधिश्रपयति तदुत्तरतः स्वयं चरुमेवं युगपदग्नावारोप्य ॥ पर्यग्नि कुर्यात् ॥ ज्वलदुल्मुकम्प्रदक्षिणमाज्यचर्वोः समन्ताद्भ्रामयेत् अर्द्धशृते चरौ ॥ स्रुवं प्रतप्य ॥ दक्षिणेन हस्तेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्गाग्रैर्मूलतोऽग्रपर्यन्तम् ॥ सम्मृज्य ॥ मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तम् ॥ अभ्युक्ष्य ॥ प्रणीतोदकेनाभिषिच्य ॥ पुनः प्रतप्य निदध्यात् ॥ पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात् ॥ आज्यमुद्वास्य ॥ आज्यमुत्थाप्य चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय चरुञ्चानीय आज्यस्योत्तरतो निधाय एवन्त्रिचतुरादीन्यन्यान्यपि हवींष्युद्वासयेत् अधिशृतानाम्पूर्वेणोद्वासितानाम्पश्चिमतो हविष उद्वास्यानयनमिति याज्ञिकसम्प्रदायात् ॥ उत्पूय ॥ ऊर्द्धं पूर्ववत् पवित्राभ्याम् अवेक्ष्य ॥ अवलोक्याज्यम् तस्मादपद्रव्यनिरसनम् ॥ प्रोक्षणीश्चपूर्ववत् ॥ पवित्राभ्यामुत्पूय पूर्ववत् ॥ उपयमनान् कुशानादाय ॥ दक्षिणपाणिना गृहीत्वा सव्ये निधाय ॥ समिधोऽभ्याधाय ॥ तिष्ठन्समिधः प्रक्षिप्य ॥ पर्युक्ष्य जुहुयात् ॥ प्रोक्षण्युदकेन सर्वेण सपवित्रेण दक्षिणचुलुकेन गृहीतेन अग्निमीशानादि उदगपवर्गम्परिषिच्य जुहुयात् । आघारादीन् संस्रवधारणार्थं पात्रं प्रणीताग्न्योर्मध्ये निदध्यात् ॥ एष एव विधिर्यत्र क्वचिद्धोमः ॥ एषः परिसमूहनादिपर्युक्षणपर्यन्तो विधिरेव न मन्त्राः क्वचित् यत्र क्वचन लौकिके स्मार्ते वाऽग्नौ होममात्रस्तत्र वेदितव्यः ॥ १ ॥

(४) दीक्षितगदाधरकृतगृह्यसूत्रभाष्यम् ।

श्रीगणेशाय नमः ॥ आविर्भूतश्चतुर्द्धा यः कपिभिः परिवारितः । हतवान् राक्षसानीकं रामं दाशरथिम्भजे ॥ १ ॥ स्वाभिप्रायेण हि मया न किञ्चिदिह लिख्यते । किन्तु वाचनिकं सर्वमतो ग्राह्यञ्च निर्भयैः ॥ २ ॥ अथातोऽधिकार इत्यादिना श्रौतानि कर्माण्युक्तानि तदनन्तरं स्मार्तानि विधीयन्ते ॥ तत्रैतत्प्रथमं सूत्रम् ॥ अथातो गृह्यस्थालीपाकानाङ्कर्म ॥ उच्यत इति सूत्रशेषः ॥ श्रौतानन्तर्यप्रज्ञप्त्यर्थोऽयमथशब्दः ॥ आनन्तर्यप्रज्ञप्तिप्रयोजनम् अथातोधिकार इत्यादि यत्साधारणन्तस्य प्रवृत्त्यर्थम् श्रौतानामुपनिबन्धनम्पूर्वमिति प्रोष्येत्य गृहानुपतिष्ठते पूर्ववदित्येतत्सूत्रप्रवृत्त्या ज्ञायते अत इति हेतुः ॥ यतः श्रौतान्युक्तानि स्मार्तान्येवावशिष्यन्ते ऽतस्तान्यु-

च्यन्ते ॥ ननु पूर्वम् गर्भाधानादीनामनुष्ठानात्पूर्वमनुष्ठानक्रमेण स्मार्तान्येव वक्तव्यानीति चेत् मैवम् श्रौतेषु हि प्रत्यक्षपठिताः श्रुतयः स्मार्तेषु च पुनः कर्तृसामान्यादनुमेयाः श्रुतयः । स्मार्तानामपि हि वेदमूलत्वमुक्तं भट्टैः । तस्मात्प्रत्यक्षश्रुतित्वाच्छ्रौतानामेव पूर्वमभिधानम् । स्मरणादेवस्मृतीनां प्रामाण्यमिति कर्कोपाध्यायैरुपन्यस्तम् ॥ गृह्यः शालाग्निः तत्र ये स्थालीपाकास्ते गृह्यस्थालीपाकाः तेषां गृह्यस्थालीपाकानां कर्म क्रियेति ॥ स्थालीपाकशब्द आज्यपुरोडाशाद्युपलक्षणार्थः । कथं ज्ञायते येन स्थालीपाकमुपक्रम्याज्यमुपसंहरति निरूप्याज्यमित्यादि । एवमाज्यग्रहणमपि चर्वाद्युपलक्षणार्थम् यतः सर्वसाधारणमेवेदं कर्म नह्यस्य कर्मणः कुतश्चित्प्रकृतेः कस्याञ्चिद्विकृतावतिदेशोऽस्ति । यत्प्रधानविधिरङ्गविध्यन्वितः पठ्यते सा प्रकृतिः ॥ यथा दर्शपूर्णमासौ ॥ यत्प्रधानविधिरङ्गविधिरहितः पठ्यते सा विकृतिः ॥ यथा सौर्यः ॥ न च दर्शपूर्णमासविधौ प्रयाजविधेरिव एतत्कर्मविधेः कस्मिंश्चित्प्रधानविधौ शेषभावोऽस्ति यतः सर्वाण्येव कर्माणि प्रकृत्य धर्मविधानम् ॥ सर्वसाधारण कर्माह ॥ **परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय** ॥ दर्भैः परिसमुह्य गोमयेनोपलिप्य वज्रेणोल्लिख्यानामिकाङ्गुष्ठेनोद्धृत्योदकेनाभ्युक्ष्य तस्मिन्नग्निं स्थापयेत् । त्रिरुल्लेखनम् त्रिरुद्धरणमिति हरिहरः । परिसमूहनादि पञ्चापि त्रिस्त्रिरित्यन्ये । कर्कोपाध्यायैरपि विपर्यस्य पित्र्येषु सकृद्दक्षिणाचेत्येतत्सूत्रव्याख्यानावसरे यदभ्यस्तं रूपं दैवे स्मर्यते तत्पित्र्ये सकृत्कर्तव्यम् । यथा परिसमुह्योपलिप्योल्लेखनमिति लेखनेनैतावद्दर्शितम् । दैवे परिसमूनादि त्रिस्त्रिः पित्र्ये सकृत्सकृत् इति । एते पंच भूसंस्कारा इति भर्तृयज्ञभाष्ये ॥ अन्यर्था इति कर्कोपाध्यायाः । तेन यत्र यत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्याः अतः श्रौताग्निस्थापनेऽपि कर्तव्याः । न चैतेषां स्थालीपाकविधावन्तर्भावः । येन एष एव विधिर्यत्र क्वचिद्धोम इत्यभिहितेऽपि पुनरभिधीयते । उद्धृतावोक्षितेऽग्निमुपसमाधायेति । नूनमनेनाप्रवृत्तिः । अग्निसाध्यानि स्मार्तानि सर्वाण्यावसथ्याग्नौ कार्याणि । तथा च स्मृतिः । कर्मस्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही । दायकालाहृते वापि श्रौतं वैतानिकाग्निष्विति । तस्मिन्गृह्याणीत्यापस्तम्बस्मरणाच्च ॥ गृहाय हितं गृह्यं गृहशब्दश्च दम्पत्योर्वर्तते तस्मिन्नित्यावसथ्ये अतश्च यत्किञ्चिद्दम्पत्योर्हितं कर्म शान्तिकपौष्टिकतन्त्राङ्गहोमादिकं स्मार्तं तत्सर्वमावसथ्येऽग्नौ भवतीति अत एवाह कात्यायनः । न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् । स्वगर्भसत्क्रियार्थांश्च यावन्नासौ प्रजायते ॥ अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः । न हि पित्रा समानीतः पुत्रस्य भवति

क्वचित् ॥ अतश्च सीमन्तोन्नयनमपि स्मार्ताग्नावेव कार्यमिति देवभाष्ये परिभाषायाम् ॥ स्फ्येनोल्लेखनमिति गर्गहरिहरौ ॥ काष्ठेन कुशमूलेन वेति केचित् । अत्रेतद्विचार्यते ॥ किमावसथ्याधानादिषु वक्ष्यमाणेषु सर्वकर्मसु अध्वर्योः कर्तृत्वं उत यजमानस्येति । अध्वर्युः कर्मसु वेदयोगादिति परिभाषणात् । पूर्णपात्रो दक्षिणावरो वेति दक्षिणाम्नानादध्वर्योः कर्तृत्वमिति चेत् उच्यते न स्मार्तेषु कर्मसु अध्वर्योः कर्तृत्वम् वेदयोगाभावात् समाख्यया हि अध्वर्योः कर्मसु योगः समाख्या हि वेदयोगात् नच स्मार्ते वेदयोगोऽस्ति नहि ज्ञायते अमुकवेदोक्तं स्मार्तमिति तथाच श्रुतिः ॥ सहोवाच यद्युक्तो भूरिति चतुर्गृहीतमाज्यङ्गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुवइति चतुर्गृहीतमाज्यङ्गृहीत्वा ऽऽग्नीध्रीये जुहवथान्वाहार्यपचने वा हविर्यज्ञे यदि सामतः स्वरिति चतुर्गृहीतमाज्यङ्गृहीत्वा ऽऽहवनीये जुहवथ यद्यु अविज्ञातमसन्सर्वाण्यनुद्रुत्याऽऽहवनीये जुहवथेति ॥ अविज्ञातं स्मार्तं यन्न ज्ञायते किमार्ग्वेदिकं किं याजुर्वेदिकं किं वा सामवेदिकमिति । नापि दक्षिणान्यथानुपपत्त्यान्यस्य कर्तृत्वम् । अस्ति ह्यत्रान्योऽपि ब्रह्माख्यः कृताकृतावेक्षकत्वेन कर्ता तदर्थः परिक्रयोऽयमिति दक्षिणार्थापत्तिः । तस्मात्स्वस्यैव कर्तृत्वम् ॥ **दक्षिणतो ब्रह्मासनमास्तीर्य** ॥ स्थापितस्याऽग्नेर्दक्षिणस्यां दिशि ब्रह्मण उपवेशनार्थं दर्भान्निधाय ब्रह्मोपवेशनं कुर्यात् । ननु दक्षिणतो ब्रह्मयजमानयोरासने इति परिभाषातो दक्षिणत आसनं प्राप्तं किमर्थं पुनर्दक्षिणग्रहणम् सत्यम् पुनर्दक्षिणग्रहणं यजमानस्य तत्राऽसनं मा भूदित्येतदर्थमित्यदोषः । एवं च यजमानासनं वचनाभावे सर्वत्राग्नेरुत्तरतः स्यात् ॥ उत्तरत उपचार इति परिभाषणात् । तत्र पुनर्वचनं यथा पश्चादग्नेस्तेजनीयङ्कटं वा दक्षिणपादेन प्रवृत्योपविशतीति तत्र तत्रैवोपवेशनम् । यद्वा दर्शपूर्णमासविषया परिभाषेयम् वेदिस्पृगिति सूत्रे तस्माद्दक्षिणं वेदन्तमधिस्पृश्येवासीतेति श्रुतौ चोक्तत्वात् । तेनात्राप्राप्तिर्विध्यभावाद्दक्षिणग्रहणमपूर्वविधानार्थम् । अतोपि यजमानोपवेशनमुत्तरत एव । अत्र चास्तरणमात्रोपदेशाच्चतुर्थीकर्मणि दक्षिणतो ब्रह्माणमुपवेश्येत्युपवेशनविधानाच्च न ब्रह्मोपवेशनम् । मैवम् । अदृष्टार्थप्रसङ्गात् । नह्यदृष्टार्थं कश्चिदासनप्रकल्पनं कुर्यात् ब्रह्मासनव्यपदेशानुपपत्तेश्च तस्माद्ब्रह्मोपवेशनार्थमेवास्तरणम् । यच्च चतुर्थीकर्मण्युपवेशनमुक्तम् तदुदपात्रस्थापनावसरे विधानार्थम् । तस्माद्ब्रह्मोपवेशनं भवत्येव यदा ब्रह्मा न भवति तदा कौशः कार्य इति हरिहरः तन्मूलं छन्दोगगृह्येऽस्ति ॥ **प्रणीय** ॥ प्रणयनञ्चापां सर्वार्थम्प्रदेशान्तरे दृष्टन्तद्वदत्रापि कार्यम् ॥ **परिस्तीर्य** ॥ अग्नेर्दर्भैः प्रदक्षिणम्प-

रिस्तरणङ्कृत्वा ॥ **अर्थवदासाद्य** ॥ अर्थः प्रयोजनम् अग्नेरुत्तरतः पश्चाद्वा द्वन्द्वम्प्रयोजनवताम्पात्राणामासादनङ्कार्यंक्रमेण मुख्यक्रमानुग्रहात् पश्चाच्चेत्प्राक्संस्थानामुदगग्राणां प्रागग्राणां वा आसादनम् । उत्तरत उदक् संस्थानां प्रागग्राणामुदगग्राणां वाऽऽसादनम् कारिकायाम् । पश्चादुत्तरतो वा स्यात्पात्रासादनमग्नितः । उत्तरे चेदुदक् संस्थम्प्राक् संस्थम्पश्चिमे भवेत् ॥ एतच्च विपुलस्थानसम्भवे असम्भवे तु कात्यायनेनोक्तम् ॥ प्राञ्चम्प्राञ्चमुदगग्नेरुदगग्रं समीपत इति देवयाज्ञिकाः ॥ **पवित्रे कृत्वा** ॥ कौशे समे अप्रशीर्णाग्रे प्रादेशमात्रे अनन्तर्गर्भे कुशैश्छिन्द्यादित्यर्थः ॥ **प्रोक्षणीः संस्कृत्य** ॥ प्रादेशमात्रवारणे पात्रे प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय सव्यहस्ते तत्पात्रङ्कृत्वा दक्षिणेनोर्द्ध्वनयनङ्कृत्वा प्रणीतोदकेन तत्प्रोक्षणङ्कुर्यात् ततस्तस्मिन्पवित्रनिधानम् ॥ **अर्थवत्प्रोक्ष्य** ॥ तज्जलेन यथासादितानाम्पात्राणां प्रत्येकम्प्रोक्षणम् ॥ **निरूप्याज्यम्** ॥ औपयिकासादिताज्यस्य स्थाल्याम्प्रक्षेपः । चरुश्चेदत्र तण्डुलानां स्वस्थाल्यामावापः ॥ **अधिश्रित्य** ॥ तदाज्यमग्नौ स्थापयेत् चरुश्चेदत्रावसरे आज्यादुत्तरतोऽग्नावधिश्रयणम् ॥ **पर्यग्निकुर्यात्** ॥ अग्नेरुल्मुकङ्गृहीत्वा आज्यस्य परितो भ्रामयेत् चरुश्चेत्तमपि पर्यग्नि कुर्यात् उपलक्षणार्थत्वादाज्यस्य ॥ **स्रुवं प्रतप्य संमृज्याभ्युदय पुनः प्रतप्य निदध्यात्** ॥ अग्नौ स्रुवन्तापयित्वा दर्भैः संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्तापयित्वा निदध्यात् स्रुवस्यायं संस्कारो होमार्थः । एवञ्च दृष्टार्थता तत्संस्कारस्य । अतः संस्कारविस्मरणे प्रायश्चित्तपूर्वकं प्रागन्त्यहोमात्कार्यः । ऊर्द्ध्वन्तु प्रायश्चित्तमात्रम् । प्रोक्षण्युदकेनाभ्युक्षणमिति गर्गः ॥ **आज्यमुद्वास्योत्पूयावेक्ष्य** ॥ अग्नेः सकाशादाज्यमुत्तरत उद्वास्य पवित्राभ्यामुत्पूय तदाज्यमवलोक्य ॥ चरुश्चेदाज्योद्वासनोत्तरन्तस्योद्वासनम् तत्रैवम् अग्नेः सकाशादाज्यङ्गृहीत्वा चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतो निधानम् । ततश्चरुमादायाज्यपश्चिमतो नीत्वा आज्यादुत्तरतो निधानम् हविषाञ्च यथापूर्वमित्युक्तेः ॥ **प्रोक्षणीश्च पूर्ववत्** ॥ पूर्ववदिति पवित्राभ्याम्प्रोक्षणीरुत्पूय तास्वेव पवित्रनिधानम् चशब्दादाज्यमपि पूर्ववदेव अतः पवित्राभ्यां स्यात् प्रोक्षणीसंस्कारोऽयम्पर्युक्षणार्थः ॥ **उपयमनान्कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात्** ॥ उपयमनान्कुशान् गृहीत्वा उपतिष्ठन् तिस्रः समिधोऽग्नावभ्याधाय प्रक्षिप्य प्रोक्षण्युदकेनाग्निम्प्रदक्षिणम्परिषिच्य स्रुवेण वक्ष्यमाणं होमङ्कुर्यात् । तिष्ठन् समिधः सर्वत्रेत्युक्तेरत्र तिष्ठता समिदाधानम् । समिल्लक्षणञ्च स्मृत्यर्थसारे । पलाश-

खदिराश्वत्थशम्युदुम्बरजा समित् । अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरेविदुः ॥ सत्वचः समिधः कार्या ऋजुश्लक्ष्णाः समास्तथा। शस्तादशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तु वा॥ आर्द्राः पक्काः समच्छेदास्तर्जन्यङ्गुलिवर्तुलाः । अपाटिताश्चाद्विशाखाः कृमिदोषविवर्जिताः। ईदृशा होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियमिति । यद्वा । समित्पवित्रं वेदश्च त्रयः प्रादेशसम्मिताः । इध्मस्तुद्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः ॥ एष एव विधिर्यत्र क्वचिद्धोमः॥ यत्र क्वचिद्धोमः शान्तिकपौष्टिकादिष्वपि एष एव विधिः स्यात् एवकारो मन्त्रप्रतिषेधार्थः गृह्याग्निव्यतिरेकेणापि यथायं विधिः स्यादित्येवमर्थः क्वचिच्छब्दः । यथा द्वावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयादित्यादौ ॥

इति श्री त्रिरग्निचित् संम्राट् स्थपति श्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये प्रथमकाण्डे प्रथमा काण्डिका ॥ १ ॥ * ॥

मूलम् ॥ आवसथ्याधानं दारकाले॥ १॥ दायाद्यकालएकेषाम् ॥ २॥ वैश्यस्य बहुपशोर्गृहादग्निमाहृत्य ॥ ३ ॥ चातुश्राश्यपचनवत्सर्वम् ॥ ४ ॥ अरणिप्रदानमेके ॥ ५ ॥ पञ्चमहायज्ञा इति श्रुतेः ॥ ६ ॥ अग्न्याधेयदेवताभ्यः स्थालीपाकꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥ ७ ॥ त्वन्नोऽअग्ने सत्वन्नोऽअग्नइमम्मेवरुण तत्वायामि येतेशतमयाश्चाग्न उदुत्तमम्भवतन्न इत्यष्टौ पुरस्तात् ॥ ८ ॥ एवमुपरिष्टात्स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति ॥ ९ ॥ स्विष्टकृते च ॥ १० ॥ अयास्यग्नेर्वषट्कृतं यत्कर्मणात्यरीरिचं देवागातु विदइति ॥ ११ ॥ बर्हिर्हुत्वा प्राश्नाति ॥ १२॥ ततो ब्राह्मणभोजनम् ॥ १३ ॥ * ॥ २ ॥

कर्कः । गृह्यस्थालीपाकानाङ्कर्म प्रक्रान्तमतोगृह्यस्यैवोत्पत्त्यर्थमिदमाह ॥ आवसथ्याधानन्दारकाले इति आवसथ्यो गृह्यः शालाग्निरित्यनर्थान्तरन्तस्याधानं स्थापनमात्मसात्करणमिति यावत् तद्दारकाले भवति दारशब्देन पाणिग्रहणादिसंस्कारसंस्कृतं स्त्रीद्रव्यमभिधीयते । तस्याहरणकालो दारकालस्तत्र केचित्तु पाणिग्रहणात्प्रागिच्छन्ति गृह्यकारान्तरवचनात् । एवं हि तेनोक्तम् । जायायाः पाणिञ्जिघृक्षन्नादधीतेति तत्पुनर्नातीवयुक्तरूपम् । येनाद्याप्यसंस्कृतमेव स्त्रीद्रव्यम् नचासं-

नुमजीर्णया निर्णुदस्वेति प्रथमोमन्त्रः ॥ मन्यनस्यावृतासम्यङ्मथित्वाऽग्निं विहृत्य च ॥ १३२ ॥ विलाप्योत्पूयदर्भाभ्यां स्रुच्यादाय चतुर्घृतम् । जुहोत्याहवनीयेऽग्नौ मनस्वत्या घृतं तथा ॥ १३३ ॥ इष्टिन्तन्तुमतीङ्कुर्याच्छरावन्दक्षिणान्ददेत् । वृत्तम्प्रादेशमात्रन्तु शरावन्निगमोदितम् ॥ १३४ ॥ इत्यनारोपितारण्योः क्षये ग्राह्ये नवे पुनः । तदलाभे यदोद्वापेत्तदास्यात्पुनराहितिः ॥ १३५ ॥ कामे निमित्तयोगे वा पुनराधेयमिष्यते । निमित्तेषु यथायोगमाधानमपि वा भवेत् ॥ १३६ ॥ तत्र येषु निमित्तेषु शृङ्गग्राहिकया विधिः । तत्रैव पुनराधेयमन्यथा ऽऽधानमिष्यते ॥ १३७ ॥ अन्यत्राप्यपरे प्राहुः पुनराधिर्विकल्पतः । यद्विसंजीवनायालं क्षुद्रं चाप्येकवत्सरम् ॥ १३८ ॥ तन्नाशे पुत्रमर्त्यानां ज्ञातीनामवरोधने । अङ्गनाशेऽङ्गनानाशः पुनराधानमिष्यते ॥ १३९ ॥ ज्यानिः सर्वस्वहानिः स्यात्स्पष्टम्माध्यन्दिनिश्रुतेः । पुण्यान्यन्यानि कुर्वीत श्रद्दधानो विमत्सरः ॥ १४० ॥ नत्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथञ्चन । इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजाम्पशून् ॥ १४१ ॥ हन्त्यल्पेन धनेनैव विप्रोऽनल्पधनोयजन् ॥ इति पुनराधान पुनराधेययोर्निमित्तानि ॥ अथ पुनराधाने पदार्थक्रमः ॥ तत्र प्रमादात्त्रिरात्रमग्नित्यागे प्राणायामशतम् विंशतिरात्रे एकदिनोपवासः ॥ मासद्वये त्रिरात्रमुपवासः ॥ अब्दे प्राजापत्यकृच्छ्रः ॥ एवन्त्यागानुसारेण प्रायश्चित्तङ्कृत्वा पुनराधानम् ॥ आलस्यादिना बुद्धिपूर्वकमग्नित्यागे तत्तत्कालानुसारेणैन्दवादि प्रायश्चित्तम् ॥ द्वादशाहपर्यन्तन्त्रिरात्रमुपवासः मासपर्यन्तन्द्वादशरात्रमुपवासः ॥ अब्दपर्यन्तम्मासम्पयोव्रतम् ॥ द्विवर्षपर्यन्तञ्चान्द्रायणम् ॥ त्र्यब्दपर्यन्तञ्चान्द्रायणं सोमायनञ्च ॥ तदूर्ध्वमब्दकृच्छ्रन्धनिनो गोदानञ्चेति प्रयोगपारिजाते ॥ स्मृत्यर्थसारे तु ॥ द्वादशाहातिक्रमे त्र्यहमुपवासः ॥ मासातिक्रमे द्वादशाहमुपवासः ॥ सम्वत्सरातिक्रमे मासमुपवासः पयोभक्षणम्वेति विशेषः ॥ एवङ्कालविलम्बे सङ्कल्पपूर्वकम्प्रायश्चित्तङ्कृत्वा पुनराधानम् ॥ यत्र तु येन केनचिन्निमित्तेनाग्निनाशः कालविलम्बश्च नास्ति तत्र प्रायश्चित्तमकृत्वैव पुनराधानम् ॥ नित्यक्रियाम्विधाय देशकालौ सङ्कीर्त्यैतावन्तङ्कालमावसथ्याग्निविच्छेदजनितप्रत्यवायपरिहारार्थमेतावत्प्रायश्चित्तममुकप्रत्याम्नायत्वेनाहङ्करिष्य इति सङ्कल्पः लुप्तानां होमानान्तण्डुलादिद्रव्यं ब्राह्मणाय सम्प्रददे इति होमन्दद्यात् ॥ सायम्प्रातर्होमानान्तथा दर्शपूर्णमासस्थालीपाकानां सम्पत्तिपर्याप्तं व्रीह्यादिद्रव्यमाज्यञ्च दद्यादिति प्रयोगरत्ने ॥ ततः शुचौ काले शुचिराचान्तः प्राणानायम्य देशकालौ स्मृत्वा विच्छिन्नावसथ्यस्य पुनराधानङ्करिष्य इति सङ्कल्पः ॥ नान्दीश्राद्धाभावः ॥ खरे पञ्चभूसंस्कारादिब्राह्मणतर्पणान्तमाधानवत्सर्वङ्कार्यम् ॥ अथ सभार्यस्य

प्रवासप्रसक्तोऽग्निसमारोपविधिः ॥ प्रातर्होमानन्तरमरणिद्वयमयन्तेयोनिरितिमन्त्रेणावसथ्ये प्रतपतीत्यरणिपक्षे समारोपः ॥ आहरणपक्षे तु अयन्तेयोनिरिति मन्त्रेणाश्वत्थसमिधमावसथ्ये प्रतपति ॥ अथवा याते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मानमवच्छावसूनि कृण्वन्नस्मेनर्यापुरूणियज्ञोभूत्वायज्ञमासीदस्वां योनिं जातवेदो भुव आजायमानः सक्षयएहीति मन्त्रेण पाणी प्रतप्यात्मनि समारोपयेत् ॥ तत्र प्रादुष्करणकाले अरणी समारोपे अरणी निर्मथ्य प्रत्यवरोहजातवेदः पुनस्त्वन्देवेभ्यो हव्यं वह नः प्रजानन् ॥ प्रजाम्पुष्टिं रयिमस्मासुधेह्यथा भवयजमानाय शंय्योः ॥ इत्यनेन खरेऽग्निस्थापनम् ॥ अश्वत्थसमित्समारोपणे वैश्यादिगृहादग्निमाहृत्य खरे पञ्चाग्न्यर्थान्संस्कारान्कृत्वा ऽग्निं स्थापयित्वा प्रत्यवरोहेतिमन्त्रेण तां समिधमग्नौ निदध्यात् ॥ आत्मसमारोपपक्षे सर्वदा स्पृश्यस्पर्शनञ्जले निमज्जनं स्नानं स्त्रीगमनञ्चाकुर्वन्मूत्रपुरीषोत्सर्गे शौचमकृत्वा चिरकालमतिष्ठंश्च होमकाले आत्मसमारूढमग्निमुच्छ्वासरूपेण प्रत्यवरोहेतिमन्त्रेण लौकिकाग्नौ निदध्यात् ॥ एवं यथाधिकारमग्निम्प्रतिष्ठाप्य होमङ्कुर्यात् ॥ इदं समारोपणं द्वादशरात्रपर्यन्तमेव कुर्यादिति प्रयोगरत्ने ॥ कातीयानान्त्वरणिसमारोपः श्रौतेदृष्टः तद्वत्स्मार्तेऽपि कार्य उक्तत्वादिति शिष्टाः ॥ समित्समारोपणेऽपि अयन्तेयोनिरिति मन्त्रेण समारोप्य प्रादुष्करणकाले लौकिकमग्निं संस्थाप्य तत्र तूष्णीं समिधमादध्यादिति वृद्धाः वस्तुतस्तु कातीयानामपि समित्समारोपः शाखान्तरोक्त एव भवति ॥ स्वशाखायां समित्समारोपस्यानुक्तत्वादावसथ्याधानन्दारकाल इत्युक्तन्दारग्रहणङ्कथङ्क्रियते तदुच्यते ॥ तत्र वरस्यार्घदानं स्मर्यते तत्प्रसङ्गेन यावन्तोऽर्घ्यास्ते कथ्यन्ते ॥ * ॥ * ॥

मूलम् ॥ षडर्घ्या भवन्त्याचार्यऽऋत्विग्वैवाह्यो राजाप्रियः स्नातक इति ॥ १ ॥ प्रतिसंवत्सरानर्हयेयुः ॥ २ ॥ यक्ष्यमाणास्त्वृत्विजः ॥ ३ ॥ आसनमाहार्याह साधु भवानास्तामर्चयिष्यामोभवन्तमिति ॥ ४ ॥ आहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन ॥ ५ ॥ अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि ॥ ६ ॥ विष्टरम्प्रतिगृह्णाति ॥ ७ ॥ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि योमा कश्चाभिदासतीत्येनमभ्युपविशति ॥ ८ ॥ पादयोरन्यं विष्टर आसीनाय ॥ ९ ॥ सव्यं पादम्प्रक्षाल्यदक्षिणम्प्रक्षाल-

यति ॥ १० ॥ ब्राह्मणश्चेद्दक्षिणम्प्रथमम् ॥ ११ ॥ विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह इति ॥ १२ ॥ अर्घम्प्रतिगृह्णात्यापःस्थ युष्माभिः सर्वान्कामानवाप्नवानीति ॥ १३ ॥ निनयन्नभिमन्त्रयते, समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टा अस्माकं वीरा मापरासेचि मत्पय इति ॥ १४ ॥ आचामत्यामागन्यशसा सᳪंसृज वर्चसा । तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनामिति ॥ १५ ॥ मित्रस्य त्वेति मधुपर्कं प्रतीक्षते ॥ १६ ॥ देवस्य त्वेति प्रतिगृह्णाति ॥ १७ ॥ सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत्त आविद्धन्तत्ते निष्कृन्तामीति ॥ १८ ॥ अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति ॥ १९ ॥ तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमᳪं रूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति ॥ २० ॥ मधुमतीभिर्वा प्रत्यृचम् ॥ २१ ॥ पुत्रायान्तेवासिने वोत्तरतऽआसीनायोच्छिष्टन्दद्यात् ॥ २२ ॥ सर्वं वा प्राश्नीयात् ॥ २३ ॥ प्राग्वाऽसञ्चरे निनयेत् ॥ २४ ॥ आचम्य प्राणान्त्सम्मृशति वाङ्मऽआस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेति ॥ २५ ॥ आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह ॥ २६ ॥ प्रत्याह । माता रुद्राणां दुहिता वसूनाᳪं स्वसादित्यानाममृतस्य नाभिः । प्रनुवोचञ्चिकितुषे जनाय मागामनागामदितिं वधिष्ट । मम चामुष्य च पाप्मानᳪं हनोमीति यद्यालभेत ॥ २७ ॥ अथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्माहत ओमुत्सृजत तृणान्यत्त्विति ब्रूयात् ॥ २८ ॥ न त्वेवामाᳪंसोऽर्घः स्यात् ॥ २९ ॥ अधियज्ञमधिविवाहङ्कुरुतेत्येव ब्रूयात् ॥ ३० ॥ 'यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः ॥ ३१ ॥ * ॥ ३ ॥

कर्कः ॥ आवसथ्याधानन्दारकाल इत्युक्तम् । दाराहरणमेव कथङ्क्रियत इति तदभिधीयते । तत्र च वैवाहिकस्यार्घदानं स्मर्यते । तत्प्रसङ्गेन यावन्तोऽर्घ्यास्ते सर्व एवाभिधीयन्ते षडर्घ्या भवन्तीति ॥ षडर्घार्हा भवन्तीत्यर्थः ॥ तानाह ॥ आचार्य ऋत्विक् वैवाह्यो राजा प्रियः स्नातक इति ॥ प्रियस्नातकयोः पृथक्त्वज्ञापनार्थं षड्ग्रहणम् । उपनयनपूर्वकं यो वेदमध्यापयति स आचार्यः । ऋत्विक् प्रसिद्धः । वैवाह्यो जामाता । राजा च प्रियश्च प्रसिद्धौ । वेदमधीत्य यः स्नातस्तस्याचार्योऽर्घदानङ्करोति ॥ एवं हि स्मरन्ति तम्प्रतीतं स्वधर्मेण ब्रह्मदायहरम्पितुः । स्रग्विणं तल्पआसीनमर्हयेत्प्रथमं गवेति ॥ आचार्यस्यायमुपदेशः । प्रति संवत्सरानर्हयेयुः ॥ आचार्यादीनपि । नत्वर्वाक् संवत्सरादागतान् ॥ यक्ष्यमाणास्त्वृत्विजः ॥ ऋत्विजः पुनर्यक्ष्यमाणा एवार्घ्याः न ततोऽन्यत्र ॥ आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमिति ॥ अर्घ्यम्प्रत्यध्येषणमेतत् । आहार्येत्यानाय्येत्युच्यते ॥ आहरन्ति विष्टरम्पाद्यम्पादार्थमुदकमर्घमाचमनीयम्मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन ॥ विष्टरः उपवेशनार्थं विष्टरिका । पद्मञ्च विष्टरम् । पादार्थमुदकं सुखोष्णम् । अर्घम् अर्घशब्देन च उदपात्रमेवोच्यते । तथाच लिङ्गम् "यथा राज्ञ आगतायोदकमाहरेदेवमेतदिति" सोमस्योदपात्रनिनयनं विधाय एतदुक्तम् । आचमनीयम् उदकमेव ॥ तथा मधुपर्कं दधिमधुघृतं कांस्यपात्रे स्थितं कांस्येनैवापिहितम् । एतान्याहरन्ति बहुवचननिर्देशादर्घयितुः सम्बन्धिनः पुरुषाः । उच्चारणार्थं वा बहुवचनम् ॥ अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि ॥ अर्घयितुर्व्यतिरिक्तोऽन्यो विष्टरादीनि त्रिस्त्रिः प्राह विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामित्येवम् ॥ विष्टरम्प्रतिगृह्णाति ॥ तूष्णीमेव । वर्ष्मोऽस्मि समानानामित्यनेन मन्त्रेण विष्टरे एवाभ्युपविशति । ग्रहणोपवेशनयोर्मध्ये मन्त्रः पठितः स लिङ्गादुपवेशने विनियुज्यते, लिङ्गं हि भवति इमन्तमभितिष्ठामीति ॥ पादयोरन्यं द्वितीयं विष्टरन्ददातीति वाक्यशेषः ॥ स चायमुपदेशः प्रक्षाल्य हि पादौ विष्टरे क्रियेते, तस्मात्पाद्योत्तरकालन्द्वितीयं विष्टरं ददातीति पाठोऽर्थेन बाध्यते । तथाचोत्तरं सूत्रम् । विष्टर आसीनाय सव्यम्पादम्प्रक्षाल्य दक्षिणम्प्रक्षालयतीति ॥ एकस्मिन्नेव विष्टरे आसीनस्य पादप्रक्षालनम् । ततो द्वितीयो विष्टर इति ॥ *ब्राह्मणश्चेद्दक्षिणम्प्रथ-

* ब्राह्मणपूर्वकत्वेन धर्मानुकथने प्राप्ते पश्चाद्ब्राह्मणाभिधानम् भूयसां स्यात्सधर्मत्वमिति न्यायसूचनार्थम् ॥

मम्विराजोदोह्लोऽसीति ॥ यदि ब्राह्मणोऽर्घ्यस्तदा दक्षिणम्प्रथमम्प्रक्षालयेत् ॥ विराजोदोह्लोऽसीत्यनेन मन्त्रेण॥ पादार्थमुदकङ्गृहीत्वा प्रक्षालयत्यर्घ्य एव॥ अर्घम्प्रतिगृह्णात्यापः स्थयुष्माभिरिति ॥ अनेन मन्त्रेणार्घ्य एव । लिङ्गादेवावगम्यते आप एवार्घ इति ॥ निनयन्नभिमन्त्रयते समुद्रम्वः प्रहिणोमीति न मन्त्रान्ते निनयनम् ॥ आचामत्यामागन्यशसेति ॥ अनेन मन्त्रेण ॥ मित्रस्य त्वेति मधुपर्कम्प्रतीक्षते॥ अर्घ्यः । सर्वेषु चैतेषु त्रिस्त्रिरेतानि द्रव्याण्यभिधाय प्रतिगृह्यतामित्यर्घ्यमाहान्यः ॥ देवस्यत्वेति प्रतिगृह्णाति ॥ मधुपर्कम् ॥ सव्येपाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्निति ॥ अनेन मन्त्रेण सव्ये पाणौ स्थितन्तमेव मधुपर्कन्दक्षिणस्यानामिकया त्रिः प्रयौति ॥ अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति ॥ दक्षिणस्यैव चशब्दात्प्रयौति च ॥ अतश्च प्रतिप्रयवणन्निरुक्षणम् ॥ एवञ्च त्रिर्निरुक्षणम्व्यवधानात्प्रतिप्रयवणम्मन्त्राभ्यासः ॥ तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यमिति॥ अनेन मन्त्रेण ॥ मधुमतीभिर्वाप्रत्यृचम् ॥ प्राश्नाति । उच्छिष्टस्यैव मन्त्रोच्चारणम् एवं हि स्मरन्ति । मधुपर्के च सोमे च नोच्छिष्टो भवति इति ॥ पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टन्दद्यात् ॥ यदवशिष्टम्मधुपर्कस्य ॥ सर्वम्वा प्राश्नीयात् ॥ प्राग्वाऽसञ्चरे निनयेत् ॥ इति विकल्पः ॥ आचम्य प्राणान्त्सम्मृशति । वाङ्म आस्य इत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् ॥ अनाचान्तस्यैव प्राणायतनसम्मर्शनम्माभूदित्याचम्येति ग्रहणम् ॥ साकाङ्क्षत्वादस्त्वित्यध्याहारः ॥ मे इत्यस्य च सर्वत्रानुषङ्गः ॥ अरिष्टानि मेऽङ्गानि तनूरित्यत्र सन्त्वित्यध्याहारः ॥ आचान्तोदकाय शासमादाय गौरिति त्रिः प्राहेति ॥ आचान्तोदकग्रहणम्पुनराचमनमिति केचित् ॥ अपरे त्वाहुः ॥ आचान्तमुदकं येनासावाचान्तोदकः तदर्थं शासादानमिति । तादर्थ्यञ्च पश्वालम्भनस्य तदर्थत्वात् गौरिति त्रिः प्राहार्घयिता॥ प्रत्याह मातारुद्राणामिति ॥ प्रत्याहार्घ्यो मातारुद्राणामित्यमुम्मन्त्रम् ॥ तदन्ते च मम चामुष्यचपाप्मानꣳ हनोमीति प्रयोगः ॥ अमुष्येति चार्घयितुर्नामग्रहणम् ॥ यद्यालभेत पाप्मानꣳ हनोमीति प्रयोगः ॥ अथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्माहत ॐ उत्सृजततृणान्यत्त्विति ब्रूयात् ॥ अत्राप्यमुष्येत्यर्घयितुर्नामादेशः ॥ ॐ उत्सृजत तृणान्यत्त्वित्येतदुच्चैर्ब्रूयात् निगदोह्ययमिति ॥ शेषमुपांश्वेव ॥ नत्वेवामाꣳसोऽर्घः स्यादधिय-

ज्ञमधिविवाहङ्कुरुतेत्येव ब्रूयात् ॥ यज्ञमधिकृत्य विवाहञ्चाधिकृत्य कुरुतेत्येवं वक्तव्यम् ॥ पाप्मानꣳहनोमि कुरुतेत्येवम् यस्माद्यज्ञविवाहयोरमांसोऽर्घो न भवतीति स्मरणम् ॥ यज्ञविवाहवर्ज्जमन्यत्र पशोरालम्भविकल्पः ॥ **यद्यप्यसकृत्सम्वत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः** परिगतसम्वत्सरा अर्घ्या भवन्तीत्युक्तन्तदपवादोऽयम् ॥ **अत एवावगम्यते सोमेन यक्ष्यमाणा एवर्त्विजोऽर्घ्या नेतरैर्यागैरिति** ॥ ३ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः । आवसथ्याधानन्दारकाल इत्युक्तम् तद्द्वाराहरणमेव कथङ्क्रियते इति तदभिधीयते । तत्र च वैवाहिकस्यार्घदानं स्मर्यते । तत्प्रसङ्गेन यावन्तोऽर्घ्यास्तानाह षट् अर्घ्या अर्घार्हा भवन्तीति ॥ तान्विभजते ॥ आचार्यः उपनयनपूर्वकं वेदाध्यापकः । ऋत्विक् प्रसिद्धः । वैवाह्यो जामाता । राजाच । प्रियोऽपि वेदमधीत्य यः स्नातस्तस्याचार्योऽर्घदानं करोत्यादौ ॥ तम्प्रतीतं स्वधर्मेण ब्रह्मदायहरम्पितुः । स्रग्विणन्तल्प आसीनमर्हयेत्प्रथमङ्गवेत्याचार्यस्योपदेशात् प्रियस्नातकयोः पृथग् ज्ञापनार्थम् षड्ग्रहणम् ॥ **प्रतिसम्वत्सरान्** प्रतिरत्रात्यर्थः अतिसम्वत्सरानित्यर्थः तेनसम्वत्सरोपर्यागतानाचार्यादीनप्यर्हयेयुः अर्घदानेन पूजयेयुः नत्वर्वाक्सम्वत्सरादागतान् यक्ष्यमाणास्तु यागं करिष्यन्त एवर्त्विजोऽर्हयेयुः ॥ सम्वत्सरोपर्य्यागतानपि न ततोऽन्यत्रेत्यर्थः कथमित्यपेक्षायामाह आसनमिति आसनं पीठादि आहार्यस्वपुरुषैरानाय्याहार्घयिता साधु भवानास्तामिति ॥ अर्घम्प्रत्यङ्गोषणमेतत् आहरन्तीति स्वपुरुषा एव विष्टरमुपवेशनार्थम्पञ्चविंशच्छलाकारचितङ्कुशपुलकम् पद्यञ्च विष्टरमेव तादृशम् । पादार्थमुदकंसुखोष्णम् । अर्घशब्देनोदपात्रमुच्यते तथा च लिङ्गम् यथा राज्ञ आगतायोदकमाहरेदेवमेतदिति सोमस्योदपात्रनिनयनम् विधायैतदुक्तम् आचमनीयमुदकमेव तथा मधुपर्कन्तस्यैव प्रपञ्चः दधिमधुघृतङ्कांस्यभाजने स्थितङ्कांस्यभाजनेनैवापिहितमाच्छादितम् अन्यः अर्घयितुर्व्यतिरिक्तः कश्चिद्विष्टरादीनि त्रिस्त्रिः प्राह विष्टरो विष्टरो विष्टर इत्येवम् ॥ ततोऽर्घयित्राऽर्पितमुभाभ्यां हस्ताभ्यामर्घ्यो गृह्णाति तूष्णीम् ग्रहणमात्रोपदेशात् वर्ष्मोऽस्मीति मन्त्रेणैनं विष्टरमेवाभ्युपविशति ॥ ग्रहणोपवेशनयोर्मध्ये पठितोऽपि मन्त्रो लिङ्गादुपवेशने विनियुज्यते लिङ्गं च ॥ **इमन्तमभितिष्ठामीति** ॥ अथ मन्त्रार्थः ॥ तत्र अथर्वणोऽनुष्टुप् विष्टरो देवता उपवेशने आत्मानमर्घ्यत्वायार्घ्यः स्तौति कुलज्ञानाचारवपुर्वयोगुणैरहं समानानां सजातीयानां मध्ये वर्ष्मः श्रेष्ठः ज्येष्ठ इति यावत् ॥ अस्मि भवामि ॥ उद्यतां उदयं प्रकाशं कुर्वतां ग्रहनक्षत्रादीनां

मध्ये सूर्य इव. किञ्च इमं विष्टरं तं पुरुषमुद्दिश्य विष्टरवद्वद्रुम् अभि लक्ष्यीकृत्य अभिभूय वा तिष्ठामि अधः कृत्वा उपर्युपविशामि, यः कश्चन मा माम् अभिदासति उपक्षीणं कर्तुमिच्छति । दसु उपक्षये । पादयोरन्यं द्वितीयं विष्टरं ददातीति वाक्यशेषः । स चायमुपदेशो नानुक्रमः प्रक्षाल्य हि पादौ विष्टरे क्रियेते इति, तस्मात्पाद्योत्तरकालं द्वितीयं विष्टरन्ददातीति पाठोऽर्थेन बाध्यते ॥ तथाचोत्तर-सूत्रम्, विष्टर असीनायेति । तेनैकस्मिन्विष्टरे आसीनस्य पादप्रक्षालनन्ततो द्वितीयविष्टरदानमिति ॥ अर्घ्यश्च पूर्ववत्तूष्णीम् प्रतिगृह्य पुनर्वर्ष्मोऽस्मीति मन्त्रेण निदधाति प्रक्षालितपादयोरधस्तात् ॥ प्रक्षालनं चाञ्जलिना विराजोदो-होऽसीति मन्त्रेण स्वयमेव । यदि ब्राह्मणोऽर्घ्यस्तदा दक्षिणं प्रथमम्प्रक्षालयेन्नान्यः ॥ अनेन मन्त्रावृत्तिरवगम्यते ॥ तत्र मन्त्रः ॥ विराजोदोहोऽसीति ॥ अस्यार्थः ॥ तत्र प्रजापतिर्यजुरापः पादयोर्जलप्रक्षेपे । प्राणधारणादिगुणैः सकलसौहित्येन विविध-तया राजतइति विराडन्नं तस्य विराजो दोहः परिणामसारो रसः स त्वम् असि भवसि । हेउदक तन्त्वां विराजो दोहम् अशीय अश्नुवै ॥ छान्दसो विकरणलोपः ॥ किञ्च मयि विषये या पाद्या पादयोः साध्वी सपर्या तस्यै तदर्थं विराजोदोहः मन्त्र-संस्कृतं जलम्भवेति शेषः ॥ अर्घोऽर्घोऽर्घः प्रतिगृह्यतामित्यन्येनोक्ते अर्घ्योऽर्घं प्रति-गृह्णाति आपः स्थेति मन्त्रेण ॥ अर्घ्यतेऽनेनेत्यर्घः आप एव मन्त्रलिङ्गात् ॥ अथ मन्त्रार्थः ॥ तत्र प्रजापतिर्यजुरापः अपामादाने । हे आपः यतो यूयमापः आप्रिहे-तवः स्थ भवथ तस्माद्युष्माभिः कृत्वा सर्वानशेषान्कामान् अभीष्टार्थान् अहम् अवाप्रवानि लभेयम् ॥ ततोऽर्घ्योऽर्घं गृहीत्वा उपसौलिमानीय निनयन् नामयन् अभिमन्त्रयते समुद्रं व इति मन्त्रेण, न तु मन्त्रान्ते ॥ अस्यार्थः ॥ तत्र अथर्वणो-ऽनुष्टुप् आपोऽर्घप्रतिक्षेपे। हेआपः साधितार्था वो युष्मान् समुद्रं प्रहिणोमि गम-यामि, अतः स्वां योनिं स्वकारणभूतं समुद्रमभि लक्ष्यीकृत्य गच्छत व्रजत । किञ्च युष्मत्प्रसादाच्चास्माकं वीराः पुत्रा भ्रातरश्चारिष्टा अनुपहताः सन्तु मत् मत्तः पयः अर्घादिमङ्गलं जलम्मापरासेचि अपगतम्मास्तु सदैवाहमर्घ्यो भवानीत्यर्थः । ततोऽर्घ्य आचामति आमागन् यशसेति मन्त्रेण सकृद् द्विस्तूष्णीम् ॥ अस्यार्थः ॥ तत्र पर-मेष्ठी बृहती आचमने ॥ हे जलेश वरुण तमेवंरूपेण त्वामाश्रितं मा माम् यशसा आमा सह सहभावं सामीप्यं वा अगन् आगमय । तथा वर्चसा ब्रह्मवर्चसेन संमृज संमृष्टं कुरु ॥ किञ्च प्रजानां श्रेष्ठजनानां प्रियं श्रेष्ठं प्रीतं वा पशूनां गोऽश्वादीना-मधिपतिं स्वामिनं च तथा तनूनां देहावयवानां शरीरिणां वा अरिष्टम् अहिं-

सकं सुखजनकं वा कुरु। हिंसा च अनभ्यासेन वेदानामित्यादिना दर्शिता। ततो मित्र-
स्यत्वेति मन्त्रेणार्घ्यो मधुपर्कं प्रतीक्षते पश्यति, तत्र प्रजापतिः पङ्क्तिर्मित्रो दर्शने ॥
सर्वेषु चैषु त्रिस्त्रिरेतानि द्रव्याणि अभिधाय प्रतिगृह्यतामित्याहान्योऽर्घ्यम्। देवस्य-
त्वेति मन्त्रेणार्घ्यः प्रतिगृह्णाति मधुपर्कम्। अस्य परमेष्ठी गायत्री सूर्यो ग्रहणे। सव्ये
पाणौ स्थितं मधुपर्कं दक्षिणहस्तस्यानामिकया त्रिःप्रयौति प्रदक्षिणमालोडयति
नमः श्यावास्यायेति मन्त्रेण ॥ अस्यार्थः ॥ तत्र प्रजापतिर्यजुः सविता निरुक्षणे ॥
हे अग्ने ते तुभ्यन्नमः किम्भूताय श्यावास्याय कपिशमुखाय ते तव अन्नशने अन्ना-
शने अद्यते इत्यन्नं तस्याशने । ह्रस्वश्छान्दसः । आविद्धं संश्लिष्टम् अनदनीयं
यत् तन्निष्कृन्तामि निरस्यामि अतः शुद्धमन्नं गृहाणेत्यर्थः ॥ तमेव दक्षिणहस्तस्या-
नामिकाङ्गुष्ठाभ्यां त्रिर्निरुक्षयति अपसारयति चशब्दात्प्रयौति च अतश्च प्रति-
प्रयवणमेव निरुक्षणम्, एवम्प्रयवणनिरुक्षणयोर्युगपद्भावः मन्त्रलिङ्गाच्च ॥ एवञ्च
निरुक्षणव्यवधानात्प्रतिप्रयवणं मन्त्राभ्यासः ॥ तस्य त्रिःप्राश्नाति यन्मधुन इति
मन्त्रेण ॥ तस्येत्यवयवलक्षणा षष्ठी ॥ त्रिशब्दानुवृत्तौ पुनस्त्रिर्ग्रहणम् एकद्रव्ये
कर्मावृत्तौ सकृन्मन्त्रवचनशङ्काव्युदासार्थम् ॥ मधुमतीभिर्वा मधुव्वाता इति तिसृभि-
र्ऋग्भिर्वा प्रत्यृचं प्राश्नात्यनामिकाङ्गुष्ठाभ्यामेव ॥ उच्छिष्टस्यैवापरं वारद्वयं मन्त्रो-
च्चारणम् ॥ मधुपर्के च सोमे च नोच्छिष्टो भवति द्विज इति स्मरणात् ॥ अथ
मन्त्रार्थः ॥ यन्मधुन इति कुत्सो जगती मधुपर्को मधुपर्कप्राशने ॥ हे देवाः मधुनः
मकरन्दस्य यन्मधव्यं मधुनि साधु परमम् उत्कृष्टं रूपयति प्रकाशयति देहसङ्घात-
मितिरूपम् अन्नाद्यं व्रीह्यादिवत् प्राणधारकम् अन्नोपादानकं वा अन्नादिरसकदम्बं
वा तेन सर्वरूपापन्नेन रसेन उक्तविशेषणविशिष्टेन अहं परमः सर्वेभ्यो गुणाधिको
मधव्यः मधुपर्कार्हः अन्नादः सदन्नभोक्ता च असानि भवानि । मधुव्वातात्र्यस्य
गौतमो गायत्री विश्वेदेवा मधुपर्कप्राशने ॥ मधुपर्कशेषप्रतिपत्तिमाह पुत्रा-
येति । सुताय उत्तरत आसीनायोपविष्टाय अन्तेवासिने शिष्याय वोच्छिष्टं दद्यात्
स्वयं वा सर्वं प्राश्नीयादिति व्यवस्थाविकल्पः ॥ व्यवस्था च नियमितस्य नियमनम् ॥
तेन आचार्यः शिष्याय ऋत्विक्प्रियौ पुत्राय वरस्नातौ सर्वम्प्राश्नीयाताम्। राजा अस-
ञ्चरे जनसञ्चाररहिते देशे पूर्वस्यान्दिशि निनयेदित्यपरे। सर्वेषां वा सर्वे पक्षा इत्यन्ये ॥
आचम्य प्राणान् इन्द्रियस्थानानि सम्मृशति वाङ्म आस्ये इति ॥ एवमादिभिर्म-
न्त्रैर्यथालिङ्गं सम्मर्शनं जलेन स्पर्शनम् । अनाचान्तस्य प्राणायतनस्पर्शनम्माभूदिति
आचम्येति ग्रहणम् । अस्त्वित्यध्याहारः साकाङ्क्षत्वात्, मे इत्यस्य च सर्वत्रानुषङ्गः ।

अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह इत्यत्र सन्त्वित्यध्याहारः ॥ अथ मन्त्रार्थः मम वाक् वागिन्द्रियमास्येऽस्तु नसोर्नासिकयोः प्राणः प्राणवायुः अक्ष्योः अक्ष्णोर्नेत्रगोलकयोरिति यावत् चक्षुः चक्षुरिन्द्रियम् अक्षीशब्दोऽपि अक्षिवाचकोऽस्ति तद्रूपमिदम् श्रोत्रं श्रवणेन्द्रियम् बलं शक्तिः ओजः पाटवम् मे मम तनूर्देहः तन्वा देहस्याङ्गानि च सह युगपत् अरिष्टानि मे अनुपहतानि सन्तु आचान्तोदकग्रहणात्पुनराचमनमित्येके अपरेत्वाहुः आचान्तमुदकं येन स आचान्तोदकस्तदर्थम् शासम् शस्त्रमादाय तादर्थ्यं च पश्वालम्भस्य तदर्थत्वात् ततो गौर्गौर्गौरिति त्रिः प्राहार्घयिता अर्घ्यस्तु प्रत्याह ॥ मातारुद्राणामिति ॥ अमुं मन्त्रम् ॥ अस्यार्थः तत्र ब्रह्मा त्रिष्टुप् गौः अभिमन्त्रणे मातेत्यादि निगदः अमृतस्य क्षीरस्य नाभिराश्रयः नु वितर्के छन्दसिव्यवहिताश्चेति । प्रवोचं ब्रवीमि । चिकितुषे चेतनावते जनाय पुम्मात्राय मह्यं माम् तोष्टुं यूयम् इमां गाम् मावधिष्ट माघ्नत किन्तु गोपशुम् विधातुं प्रतेति तात्पर्यार्थः किम्भूताम् अनागाम् अनागसम् अदितिम् अखण्डनीयाम् देवमातरम्वा पयोदानात् तदन्ते च ममेत्यादि हनोमीति प्रयोगः कार्यः आलम्भनपक्षे अहं च मम अमुष्यार्घयितुश्च पाप्मानं गोस्थाने हनोमि हन्मीति अथेति पक्षान्तरे उत्सर्गपक्षे तु मम चामुष्य च पाप्माहतॐउत्सृजत तृणान्यत्त्विति ब्रूयादुच्चैः मन्त्रपाठादिशेषमुपांश्वेव नत्वेति यस्माद्यज्ञविवाहयो रमांऽसो ऽर्घो न भवतीति स्मरणन्तस्माद्यज्ञमधिकृत्य विवाहञ्चाधिकृत्य च पाप्मानं हनोमीत्येव वक्तव्यम् यज्ञविवाहवर्जमन्यत्र पश्वालम्भविकल्प इति कर्काचार्याः अपरेत्वाहुः यज्ञविवाहयोरेवालम्भस्यावश्यकत्वेन विधानात् कलौ च गवालम्भस्यैव प्रतिषेधाद्गोप्रतिनिधित्वे पश्वन्तरं स्मार्तपशुः पायसं वा भवतीति ॥ यक्ष्यमाणास्त्वृत्विज इत्युक्तम् । तन्नियममाह ॥ यद्यपीति यदि सम्वत्सरस्य मध्ये पुनः पुनः सोमेन यजेत तदा कृतार्घा एव ऋत्विजस्तं याजयेयुर्न यागान्तरेणेति गम्यते । अतः परिसम्वत्सरानिति सम्वत्सरोपर्येव यजद्भिर्ऋत्विजोऽर्घ्या इति यदुक्तम् तदपवादोऽपि जातः ॥ ३ ॥

हरिहरः ।　　षड*र्घ्याभवन्ति ॥ षट् पुरुषा अर्घ्या भवन्ति अर्घार्हा भवन्तीति शेषः ॥ के ते । आचार्य ऋत्विग्वैवाह्योराजाप्रियः स्नातक इति ॥ आचार्य उपनयनपूर्वकं वेदाध्यापकः । ऋत्विक् श्रौतस्मार्तादिकर्मार्थम्वृतो

* वर शाखया मधुपर्कदानमिति गृह्यपरिशिष्टे "वरस्य या भवेच्छाखा तच्छाखा गृह्यचोदितः । मधुपर्कः प्रदातव्योनान्य शाखापि दातरीति" ॥ अत्र ऋत्विगाद्युपलक्षणार्थं वरदातृशब्दौ तदुक्त अर्घ्यशाखया मधुपर्क इति ।

ब्रह्मादिः वैवाह्योवरः ॥ राजा अभिषेकादिगुणवान् प्रजापालनेऽधिकृतः क्षत्रियः । प्रिय उत्कृष्टजातिस्समानजातिर्वा सखा ॥ स्नातकः ब्रह्मचर्यात्समावृतः आचार्यस्यार्घ्यो नान्यस्य ॥ तथा च मनुः तम्प्रतीतं स्वधर्मेण ब्रह्मदायहरम्पितुः । स्रग्विणन्तल्प आसीनमर्चयेत्प्रथमङ्गवेति इत्येते ॥ **प्रतिसम्वत्सरानर्हयेयुः** ॥ प्रतिसम्वत्सरमागतानेतान् आचार्यादीन् अर्घेण पूजयेयुः नार्वाक् ॥ **यक्ष्यमाणास्त्वृत्विजः** ॥ यक्ष्यमाणाः यज्ञङ्करिष्यन्तो यजमानाः ॥ ऋत्विजः ॥ याजकान् तु पुनः अर्हयेयुरित्यनुषङ्गः ॥ न प्रति सम्वत्सरन्नियमः । कथमर्हयेयुरित्यपेक्षायामाह ॥ **आसनमाहार्याहसाधुभवानास्तामर्चयिष्यामो भवन्तमिति** ॥ आसनं वारणादि दारुमयम्पीठादि आहार्य अनुचरैरानाय्य आह ब्रवीति अर्चकः किमिति । एवङ्कथम्भवान्पूज्यः साधु सुखं यथा भवति तथा आस्तान्तिष्ठतु । अर्चयिष्यामः पूजयिष्यामो भवन्तमर्चनीयं यावत् । अर्चयिष्याम इति बहुवचनम् भार्यापुत्रादिसर्वगृह्यापेक्षम् । तथा च श्रुतिः यत्र वा अर्हन्नागच्छति सर्वगृह्या इव वै तत्र चेष्टयन्तीति ॥ **आहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयम्मधुपर्कन्दधिमधुघृतमपिहितं कांस्ये कांस्येन** ॥ आहरन्ति आनयन्ति यजमानपुरुषाः विष्ट*रादि मधुपर्कपर्यन्ताभ्यर्हणोपकरणानि तत्र विष्टरम्पञ्चविंशतिदर्भतरुणमयं कूर्चम् ॥ पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता । विष्टरे* सर्वयज्ञेषु लक्षणम्परिकीर्तितम् ॥ १ ॥ विष्टरास्त्रिवृतोदर्भकूर्चदा इति ॥ पद्यम्पद्भ्यामाक्रमणीयमुक्तलक्षणन्द्वितीयं विष्टरम् ॥ पादार्थमुदकम्पादप्रक्षालनार्थन्ताम्रादिपात्रस्थञ्जलं सुखोष्णम् ॥ अर्घङ्गन्धपुष्पाक्षतकुशतिलशुभ्रसर्षपदधिदूर्वान्वितं सुवर्णादिपात्रस्थमुदकम् ॥ आचमनीयम् आचमनार्थङ्कमण्डलुसम्भृतञ्जलम् ॥ मधुपर्कम् कांस्यपात्रस्थं दधिमधुघृतङ्कांस्यपात्रेणाच्छादितम् ॥ **अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि** अन्यः अर्चकादपरः विष्टरो विष्टरो विष्टरः इत्येवमेकैकां त्रिस्त्रिः त्रीँस्त्रीन्वारान् ब्रूयात् विष्टरादीनि विष्टरप्रभृतीन्पद्यपादार्थोदकार्घाचमनीयमधुपर्कान् ॥ **विष्टरम्प्रतिगृह्णाति** ॥ प्रत्यङ्मुखेन यजमानेन तिष्ठता दत्तमासनात्पश्चिमे प्राङ्मुखस्तिष्ठन्नर्घ्यः पूर्वोक्तलक्षणम्विष्टरन्तूष्णीम्पाणिभ्यामुदगग्रमादत्ते ॥ **वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि योमा कश्चाभिदासतीत्येनमभ्युपविशति** ॥

* विष्टरलक्षणम्परिशिष्टे, पञ्चाशताभवेद्ब्रह्मातदर्द्धेन तु विष्टरः । ऊर्ध्वकेशोभवेद्ब्रह्मालम्बकेशस्तु विष्टरः ॥ दक्षिणावर्तब्रह्मावामावर्तस्तुविष्टरः । यद्वा, पञ्चविंशतिदर्भाणां वेण्यग्रेग्रन्थिभूषिता ॥ विष्टरेइत्यादि ॥ * ॥

वर्ष्मोऽस्मीति मन्त्रान्ते एनम्विष्टरमुदगग्रमासने निधायाभ्युपविशति ॥ पादयो-रन्यं विष्टर आसीनाय ॥ विष्टरे आसीनायार्घ्यायान्यं विष्टरं यजमानः पूर्ववद्द-दाति स च तम्पूर्ववत्प्रतिगृह्य प्रक्षालितयोः पादयोरधस्ताद्वर्ष्मोऽस्मीत्यनेन मन्त्रेण निदधाति ॥ सव्यम्पादम्प्रक्षाल्य दक्षिणम्प्रक्षालयति ब्राह्मणश्चेद्दक्षिणम्प्रथमम् ॥ ततोऽन्येन पाद्यमिति त्रिरुक्ते यजमानार्पितं पाद्योदकमादाय वामञ्चरणम्प्रक्षाल्य इतरम्प्रक्षालयति क्षत्रियादिरर्घ्यः ॥ यदि ब्राह्मणोऽर्घ्यः स्यात्तदा प्रथमन्दक्षिणम्प्र-क्षाल्य वामम्प्रक्षालयति ॥ विराजोदोहोऽसि विराजोदोहमशीय मयि पाद्यायै विराजोदोह इति ॥ विराजोदोहोऽसीत्यावृत्तेन मन्त्रेण ॥ अर्घम्प्रतिगृह्णाति ॥ ततोऽर्घ इत्येतत्त्रिरुक्ते यजमानदत्तमर्घम् ॥ आपःस्थ युष्माभिः सर्वान्कामान-वाप्नवानीति ॥ आपःस्थयुष्माभिरित्यनेन मन्त्रेण प्रतिगृह्णाति ॥ निनयन्नभिमन्त्र-यते समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टाँस्माकं वीरामा-परासेचिमत्पय इति ॥ प्रतिगृहीतमर्घं शिरसाऽभिवन्द्य निनयन् भूमौ प्रवाहयन् अभिमन्त्रयते समुद्रं व इति मन्त्रेण ॥ आचामत्यामागन्यशसा सꣳ सृजव-र्चसा । तम्माकुरुप्रियं प्रजानामधिपतिम्पशूनामरिष्टिन्तनूनामिति ॥ तत आचमनीयमिति त्रिरन्योक्ते यजमानदत्तमाचमनीयम्प्रतिगृह्यामागन्यशसेत्यनेन मन्त्रेणाचामति सकृत्प्राश्नाति जलम् ॥ ततः स्मार्तमाचमनङ्करोति एवं सर्वत्र ॥ मित्रस्यत्वेति मधुपर्कम्प्रतीक्षते ॥ ततो मधुपर्क इति त्रिरन्येनोक्ते यजमानहस्त-गतमुद्घाटितम्मधुपर्कम्मित्रस्यत्वेति मन्त्रेणार्घ्यः प्रतीक्षते पश्यति ॥ देवस्य त्वेति प्रतिगृह्णाति ॥ देवस्यत्वेति मन्त्रेण यजमानदत्तम्मधुपर्कन्दक्षिणहस्तेन प्रतिगृह्णाति ॥ सव्येपाणौ कृत्वा दक्षिणस्यानामिकयात्रिः प्रयौति नमः श्यावा-स्यायान्नशनेयत्त आविद्धन्तत्ते निष्कृन्तामीति ॥ तम्मधुपर्कं वामहस्ते निधाय दक्षिणस्य पाणेरनामिकाङ्गुल्या त्रिवारमालोडयति नमः श्यावास्येति मन्त्रेण ॥ अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति ॥ अनामिका च अङ्गुष्ठश्च अनामिकाङ्गुष्ठौ अनयोस्समाहारः अनामिकाङ्गुष्ठं तेन त्रिवारन्निरुक्षयति पात्राद्बहिर्निर्गमयति चका-रात्प्रतिसंयवनन्निरुक्षणम् ॥ तस्य त्रिः प्राश्नाति यन्मधुनोमधव्यम्परमꣳ रूप-मन्नाद्यम् । तेनाहम्मधुनोमधव्येन परमेण रूपेणान्नाद्येन परमोमधव्योऽन्ना-दोऽसानीति ॥ तस्य मधुपर्कस्यैकदेशमादाय यन्मधुनो मधव्यमित्यादिना मन्त्रेण

सकृत्प्राश्य पुनरनेनैव मन्त्रेण उच्छिष्ट एव द्वितीयम्प्राश्य तथैव तृतीयम्प्राश्नाति ॥ मधुमतीभिर्वा प्रत्यृचम् ॥ मधुव्वाता इति तिसृभिर्ऋग्भिः प्रत्यृचं प्रतिमन्त्रं वा पूर्ववृत्तिः प्राश्नाति ॥ पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टन्दद्यात्सर्वम्वा प्राश्नीयात्प्राग्वाऽसञ्चरे निनयेत् ॥ मधुपर्कस्य शेषप्रतिपत्तिमाह ॥ पुत्राय सूनवे अन्तेवासिने उपनयनप्रभृति विद्यार्थित्वेन आचार्यकुलवासिने शिष्याय वा कथम्भूताय उत्तरत आसीनाय उच्छिष्टम्प्राशितशेषम्मधुपर्कम्प्रयच्छेत् ॥ अथवा सर्वम्भक्षयेत् ॥ यद्वा प्राक् पूर्वस्यान्दिशि असञ्चरे जनसञ्चारवर्जितदेशे त्यजेत् ॥ अत्र पूर्वपूर्वासम्भवे उत्तरोत्तराम्प्रतिपत्तिङ्कुर्यात् ॥ आचम्य प्राणान्त्सम्मृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रम्बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वामे सहेति ॥ आचम्य प्राणान्सम्मृशति वाङ्म इत्यादिभिर्मन्त्रैः ॥ तद्यथा ॥ आचमनं सकृन्मन्त्रेण ॥ ततस्त्रिराचम्य एवं सर्वत्र स्मार्त्तमाचमनङ्कृत्वा प्राणानिन्द्रियाणि सम्मृशति सजलमालभते ॥ तद्यथा ॥ वाङ्म आस्येऽस्त्विति मुखङ्कराग्रेण नसोर्मे प्राणोऽस्त्विति तर्जन्यङ्गुष्ठाभ्यां युगपद्दक्षिणादिनासारन्ध्रे अक्ष्णोर्मे चक्षुरस्त्विति अनामिकाङ्गुष्ठाभ्यां युगपच्चक्षुषी कर्णयोर्मे श्रोत्रमस्त्विति मन्त्रावृत्त्या दक्षिणोत्तरौ कर्णौ बाह्वोर्मे बलमस्त्विति कर्णवद्बाहू ऊर्वोर्म ओजोऽस्त्विति युगपद्धस्तेनोरू ॥ अरिष्टानि मेऽङ्गानि तनूस्तन्वामे सह सन्त्विति शिरःप्रभृतीनि पादान्तानि सर्वाण्यङ्गान्युभाभ्यां हस्ताभ्यामालभते ॥ आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह प्रत्याह ॥ आचान्तमुदकं येन स आचान्तोदकस्तस्मै अर्घ्याय शासङ्खड्गङ्गृहीत्वा यजमानः गौर्गौर्गौरालभ्यतामिति प्राह ब्रवीति। ततोऽर्घः प्रत्याह ॥ माता रुद्राणान्दुहितावसूनाꣳ स्वसादित्यानाममृतस्य नाभिः। प्रनुवोचञ्चिकितुषे जनायमागामनागामदितिं वधिष्ट ॥ ममचामुष्यच पाप्मानꣳ हनोमीति यद्यालभेत ॥ ततोऽर्घ्यः। माता रुद्राणामित्यादि वधिष्टेत्यन्तम्मन्त्रम्पठित्वा मम चामुकशर्मणो यजमानस्य च पाप्मानं हनोमीति पठति यदि गामालभेत पाप्मानं हनोमीति प्रयोगः ॥ अथ यद्युत्सिसृक्षेन्ममचामुष्यचपाप्माहत ॐ उत्सृजत तृणान्यत्त्विति ब्रूयात् ॥ अथयद्युत्सिसृक्षेत् ॥ अथवा अर्घ्यो यदि गामुत्स्रष्टुमिच्छेत्तदा ममचामुकशर्मणो यजमानस्य च पाप्माहतः ॐ उत्सृजत तृणान्यत्त्विति ब्रूयात् ॥ ओमित्यन्तमुपांशु पठित्वा उत्सृजत तृणान्यत्त्विति ब्रूयादित्यन्तमुच्चैः पठेत् ॥ नत्वेवामाꣳ सोऽर्घः स्यात् ॥ तुशब्दः पक्षव्यावृत्तौ ॥ अर्घः

अमांसः पश्वालम्भवर्जितो नैव भवेत् ॥ अत्र यद्यालभेत यद्युत्सिसृक्षेदित्यनेन सूत्रेण गवालम्भस्य विकल्पम्विधाय नत्वेवामांसः स इत्यनेन गवालम्भनमर्घमात्रे नियमेन विधत्ते तथा च सति द्वयोः स्मृत्योर्विरोधेन अप्रामाण्ये प्राप्ते व्यवस्थामाह ॥ अधियज्ञमधिविवाहङ्कुरुतेत्येव ब्रूयात् ॥ अधियज्ञं यज्ञे अधिविवाहं विवाहे कुरुत विदधत गवालम्भम्पाप्मानं हनोमीत्यस्यान्ते इत्येवं वदेत् । अन्यत्र पाप्मा हत इति । पाप्मानं हनोमीति वा विकल्पः नान्यत्रेति भावः यद्यप्येवम्मधुपर्के गवालम्भ आचार्येणोक्तः तथापि अस्वर्ग्यत्वाल्लोकविद्विष्टत्वाच्च कलौ न विधेयः ॥ अस्वर्ग्यं लोकविद्विष्टन्धर्ममप्याचरेन्नत्विति ॥ याज्ञवल्क्यादिस्मृतिषु निषेधदर्शनात् ॥ यद्यप्यसकृत्सम्वत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः ॥ यद्यप्यसकृत्सम्वत्सरस्य सम्वत्सरे असकृत्पुनः पुनः सोमेन ज्योतिष्टोमादिना यजेत तदा तदापि एनं सोमयाजिनं कृतोऽर्घो· येषान्ते कृतार्घ्या एवं सन्तः याजयेयुर्यज्ञङ्कारयेयुः । न अकृतार्घ्या याजयेयुरितिश्रुतिवचनात् ॥ सोमेन यजेतेत्यनेन सोमयागार्थमेव वृता ऋत्विजः अर्घ्या इति गम्यते न यागान्तरार्थम् ॥ ३ ॥ इति हरिहर भाष्ये तृतीया कण्डिका ॥ ३ ॥ * ॥ * ॥

गदाधरः ॥ षडर्घ्या भवन्ति ॥ अर्हपूजायामिति धातोर्भावे घञ् प्रत्ययः । न्यङ्क्वादित्वात्कुत्वम् .ततो दण्डादिभ्योयदिति यत्प्रत्ययः ॥ अर्घमर्हन्तीत्यर्घ्याः । षट् पुरुषा अर्घार्हा भवन्तीत्यर्थः ॥ तानाह । आचार्यऋत्विग्वैवाह्योराजाप्रियः स्नातक इति ॥ उपनयनपूर्वकं कृत्स्नवेदाध्यापयिता आचार्यः । ऋत्विक् यो दक्षिणापरिक्रीतः कर्माणि करोति । वैवाह्यो जामाता । राजा दण्डपूर्वकम्परिपालनकर्ता । प्रियो य इष्ट उत्कृष्टजातिः समानजातिर्वा । स्नातको ब्रह्मचर्यात्समावृत्तस्तस्य चार्हणमाचार्यकर्तृकं स्मृतम् ॥ तम्प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः । स्रग्विणन्तल्प आसीनमर्चयेत्प्रथमङ्गवेति ॥ पूर्वसूत्रे षट् ग्रहणम्प्रियस्नातकयोः पृथक्ज्ञापनार्थम् ॥ प्रतिसम्वत्सरानर्हयेयुः ॥ प्रतिसम्वत्सरं गृहे आगतानाचार्यादीनर्घेणार्चयेयुः न सम्वत्सरादर्वाक् ॥ प्रतिसम्वत्सरानर्हयेयुरित्यविशेषेणोक्तत्वादृत्विजोऽपि सम्वत्सरान्तेऽर्हयितव्या इति प्राप्ते आह ॥ यक्ष्यमाणास्त्वृत्विजः ॥ ऋत्विजस्तु यक्ष्यमाणा यागकाल एव पूजनीयाः न ततोऽन्यत्र ॥ इदं सूत्रं हरिहरेणान्यथा व्याख्यातम् ॥ यज्ञं करिष्यन्तो यजमानाः ऋत्विजो याजकानिति ॥ पूजनीया उक्ताः कालश्च ॥ इदानीमर्हणप्रकारमाह ॥ आसनमाहार्याह साधुभ-

वानास्तामर्चयिष्यामो भवन्तमिति ॥ अर्घायासनम्पीठादि आसनमाहरेति प्रेष-पूर्वकमनुचरद्वाराऽऽनाय्य साधुभवानित्यर्घयिता अर्घम्प्रतिवदति अर्घम्प्रत्यध्येष-णमेतत्..॥ आहरन्ति विष्टरम्पाद्यम्पादार्थमुदकमर्घमाचमनीयं*मधुपर्कन्द-धिमधुघृतमपिहितङ्कांस्येकांस्येन ॥ बहुवचनादर्घयितुः पुरुषाः विष्टरादीनि आहरन्ति ॥ तत्र विष्टरस्त्रिवृदरत्निमात्रः कौशो रज्जुविशेष इति भर्तृयज्ञः ॥ प्रादे-शमात्रन्त्रिवृतङ्कौशम्वा काशनिर्मितमिति रेणुकः पञ्चविंशतिदर्भतरुणमयङ्कूर्चमिति हरिहरः ॥ पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टर इति परिशिष्टात् ॥ पादयोरन्यमिति वचनादन्यत्र द्वयोराहरणमिति भर्तृयज्ञः ॥ पद्यम्पादयोरधस्तान्निधानार्थम्विष्टरम् ॥ भर्तृयज्ञमते तु पादप्रक्षालनार्थमुदकम्पद्यशब्देन पादार्थमुदकं सुखोष्णम् ॥ अर्घशब्दे-नोदपात्रमेवोच्यते । तद्वैक उदपात्रमुपनिनयन्ति यथा राज्ञ आगतायोदकमाहरेदेव-न्तदिति लिङ्गात् ॥ उदकगन्धपुष्पाण्यक्षतबदराणीति भर्तृयज्ञः ॥ गन्धपुष्पाक्षतकुश-तिलशुभ्रसर्षपदूर्वादध्यन्वितं सुवर्णादिपात्रस्थमुदकमिति हरिहरः ॥ आचमनीयमाच-मनार्थमुदकमेव ॥ दधिमधुघृतमेकस्मिन्कांस्यपात्रे कृतमपरेण कांस्यपात्रेणापिहित-म्मधुपर्कशब्देनोच्यते ॥ मधुपर्के दध्यलाभे पयोजलम्वा प्रतिनिधिः ॥ मध्वलाभे घृतङ्गु-डोवेत्याश्वलायनः ॥ अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि ॥ अर्घयितुर्व्यतिरिक्तो-ऽन्यो विष्टरादीनि द्रव्याणि त्रिस्त्रिर्वारत्रयं वदति विष्टरो विष्टरो विष्टरः प्रति-गृह्यतामित्येवम् ॥ विष्टरम्प्रतिगृह्णाति वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामियोमाकश्चाभिदासतीत्येनमभ्युपविशति ॥ ततो-ऽर्घ्योऽर्घयितुः सकाशाद्विष्टरन्तूष्णीमेव प्रतिगृह्य तं विष्टरमासने निधाय वर्ष्मोऽ-स्मीति मन्त्रेणोपविशति ॥ ग्रहणोपवेशनयोर्मध्ये पठितोऽपि मन्त्र इमन्तमभिति-ष्ठामीति लिङ्गादुपवेशने विनियुज्यते ॥ पाणिभ्यां विष्टरप्रतिग्रह इति हरिहरः । तदतीव मन्दम् प्रमाणाभावात् ॥ मन्त्रस्यायमर्थः ॥ अर्घ्य आत्मानं स्तौति अर्घ्य-त्वाय कुलज्ञानाचारवपुर्वयोगुणैरहं समानानां सजातीयानां मध्ये वर्ष्मः श्रेष्ठः ज्येष्ठः अस्मि भवामि उद्यतामुदयं प्रकाशङ्कुर्वताङ्ग्रहनक्षत्रादीनाम्मध्ये सूर्य इव ॥ किञ्च इमम्विष्टरन्तम्पुरुषमुद्दिश्य विष्टरवत् बद्धमभिलक्ष्यीकृत्य तिष्ठामि अधः कृत्वोपर्युप-विशामि ॥ यः कश्चन मा मामभिदासति उपक्षीणङ्कर्तुमिच्छति ॥ दसु उपक्षये ॥ पादयोरन्यं विष्टर आसीनाय ॥ विष्टरे आसीनायोपविष्टायार्घ्याय पादयोरध-स्तान्निधानार्थमन्यम्विष्टरन्ददाति ॥ एतच्च पादप्रक्षालनोत्तरन्द्रष्टव्यम् ॥ तथा सति

* तथा च स्मृतिः । आज्यमेकपलं ग्राह्यं दध्नस्त्रिपलमेव च । मधुनः पलमेकन्तु मधुपर्कस्स उच्यते ॥

दृष्टार्थता स्यात् ॥ प्रक्षाल्य हि पादौ विष्टरे क्रियेत इति । तेनात्रार्थेन पाठबाधः ॥ तदुक्तं विरोधेऽर्थस्तत्परत्वादिति ॥ सव्यम्पादम्प्रक्षाल्य दक्षिणम्प्रक्षालयति ब्राह्मणश्चेद्दक्षिणम्प्रथमं विराजोदोहोऽसि विराजोदोहमशीयमयिपाद्यायै विराजोदोहइति ॥ ततः पाद्यम्प्रतिगृह्य विराजोदोहोऽसीति मन्त्रेण सव्यम्पादम्प्रक्षाल्य दक्षिणम्प्रक्षालयति क्षत्रियादिरर्घ्यः चेद्ब्राह्मणोऽर्घ्यः स्यात्तदा दक्षिणम्पादम्प्रथमम्प्रक्षाल्य ततः सव्यम्प्रक्षालयति ॥ मन्त्रार्थः ॥ प्राणधारणादिगुणैः सकलसौहित्येन विविधतया राजत इति विराडन्नन्तस्य विराजोदोहः परिणामसारोरसः स त्वमसि भवसि ॥ हेउदक तन्त्वां विराजोदोहं अशीय अश्नुवै व्याप्नुयाम् ॥ किञ्च मयि विषये या पाद्या पादयोः साध्वी सपर्या तस्यै तदर्थं विराजो दोहः ॥ मन्त्रसंस्कृतजलम्भवेति शेषः ॥ अर्घम्प्रतिगृह्णात्यापःस्थयुष्माभिः सर्वान्कामानवाप्नवानीति ॥ अर्घ्यः समर्पितमर्घम्प्रतिगृह्णात्यापःस्थयुष्माभिरिति मन्त्रेण ॥ मन्त्रार्थः ॥ हे आपः यूयमापःस्थ आप्रिहितवो भवथ ॥ युष्माभिः कृत्वा सर्वान्कामानभीष्टार्थान् अवाप्नवानि लभेयम् ॥ निनयन्नभिमन्त्रयते समुद्रंवः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टास्माकं वीरामापरासेचिमत्पय इति ॥ तमर्घम्भूमौ निनयन् प्रापयन्नभिमन्त्रयते समुद्रंव इति मन्त्रेण नतुमत्रान्ते ॥ अर्घं शिरसाऽभिवन्द्य प्रागुदग्वानिनयनमिति वासुदेवः ॥ मन्त्रार्थः ॥ हे आपः वो युष्मान् समुद्रं प्रहिणोमि गमयामि । अतः स्वां योनिं स्वकारणभूतं समुद्रं अभिलक्ष्यीकृत्य गच्छत व्रजत ॥ किञ्च युष्मत्प्रसादाच्चास्माकं वीराः पुत्रा भ्रातरः अरिष्टा अनुपहताः सन्तु ॥ मत्तः पयः अर्घ्यादिमङ्गलज्जलम्मापरासेचि अपगतम्मास्तु सदैवाहमर्घ्यो भवानीत्यर्थः ॥ आचामत्यामागन्यशसासꣳसृजवर्चसा । तम्माकुरु प्रियं प्रजानामधिपतिम्पशूनामरिष्टिन्तनूनामिति ॥ ततो दत्तमाचमनीयम्प्रतिगृह्यामागन्नित्याचामति सकृद्भक्षयति ॥ ततः स्मार्त्ताचमनम् ॥ मन्त्रार्थः ॥ हे वरुण जलेश तमेवं रूपेण त्वामाश्रितम्मा मां यशसा सह भावं सामीप्यं वा अगन् आगमय । आङुपसर्गे ॥ अगन्निति क्रियापदेन सम्बध्यते ॥ तथा वर्चसा ब्रह्मवर्चसेन संसृज संसृष्टङ्कुरु ॥ किञ्च प्रजानाम्पुत्रपौत्रादीनाम्प्रियम् पशूनाङ्गोऽश्वादीनामधिपतिं स्वामिनञ्च तथा तनूनान्देहावयवानां शरीराणां वा अरिष्टिमहिंसकङ्कुरु ॥ हिंसाऽत्र अनभ्यासेन वेदानामाचारस्य च लङ्घनात् ॥ आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसतीत्यादिदर्शिता ॥ मित्रस्य त्वेति मधुपर्कम्प्रतीक्षते ॥ ततो

ऽर्घ्योऽर्घयितुर्हस्तस्थितमुद्घाटितम्मधुपर्कम्मित्रस्य त्वेति प्राशित्रमन्त्रेण प्रतीक्षते प-
श्यतीत्यर्थः । देवस्य त्वेति प्रतिगृह्णाति ॥ ततो देवस्य त्वेति प्राशित्रप्रतिग्रहणमन्त्रेण
मधुपर्कम्प्रतिगृह्णाति ॥ सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति
नमः श्यावास्यायान्नशनेयत्त आविद्धन्तत्ते निष्कृन्तामीति ॥ तम्मधुपर्कं
सव्यहस्ते कृत्वा दक्षिणस्य हस्तस्यानामिकयाऽङ्गुल्या प्रदक्षिणन्त्रिरालोडयति ।
नमः श्यावास्यायानिति मन्त्रेण ॥ अत्र सव्यहस्तस्थितस्यैव दक्षिणस्यानामि-
कया त्रिरालोडनं यथा स्यादित्येतदर्थन्दक्षिणग्रहणम् ॥ मन्त्रार्थः ॥ हे अग्ने ते
तुभ्यन्नमः ॥ किं भूताय श्यावास्याय कपिशमुखाय । ते तव अन्नशने अन्नाशने अद्यत
इत्यन्नन्तस्याशने अदनीये मधुपर्के । ह्रस्वश्छान्दसः । यद्द्रव्यमाविद्धं संश्लिष्टमनद-
नीयन्तन्निष्कृन्तामि निरस्यामि ॥ अनामिकाङ्गुष्ठेनच त्रिर्निरुक्षयति ॥ अनामि-
काचाङ्गुष्ठश्चेत्यनामिकाङ्गुष्ठन्तेनानामिकाङ्गुष्ठेन वारत्रयन्निरुक्षयति मधुपर्कैकदेश-
म्पात्राद्बहिः प्रक्षिपति ॥ च शब्दात्प्रतिसंयवनन्निरुक्षणम् ॥ एवञ्च निरुक्षणव्यवधाना-
त्प्रतिसंयवनम्मन्त्रावृत्तिः ॥ तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यम्परमꣳ रूपमन्नाद्य-
न्तेनाहम्मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति ॥
तस्येत्यवयवलक्षणा षष्ठी । तस्य मधुपर्कस्य त्रिः प्राश्नीयाद्यन्मधुनो मधव्यमिति अनेन
मन्त्रेण प्राशनत्रयेऽपि हविर्ग्रहणन्यायेन मन्त्रावृत्तिः ॥ उच्छिष्टस्यैव मन्त्रोच्चार-
णम् । एवं हि स्मरन्ति ॥ ताम्बूलेक्षुफलेचैव भुक्तस्नेहानुलेपने । मधुपर्के च सोमे
च नोच्छिष्टम्मनुरब्रवीत् इति ॥ मन्त्रार्थः ॥ हे देवाः मधुनो मकरन्दस्य यन्मधव्यम्म-
धुनि साधु परममुत्कृष्टं रूपयति प्रकाशयति देहसङ्घातमिति रूपम् । अन्नाद्यं व्रीह्या-
दिवत्प्राणधारकमन्नोपादानकञ्च ॥ तेन सर्वरूपोपपन्नेन रसेनोक्तविशेषणविशिष्टेनाहं
परमः सर्वेभ्यो गुणाधिकः मधव्यो मधुपर्कार्हः अन्नादः सदन्नभोक्ता च असानि भवानि ॥
मधुमतीभिर्वा प्रत्यृचम् ॥ वा विकल्पेन मधुवाता ऋतायते इत्येताभिर्ऋग्भिः प्रत्यृच-
म्प्राश्नाति ॥ ततश्चैवम् ॥ मधुवाता इति प्रथमम् । मधुनक्तमिति द्वितीयम् । मधु-
मान्न इति तृतीयम् ॥ पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टन्दद्यात् ॥
अवशिष्टम्मधुपर्कस्य उच्छिष्टम्पुत्राय अन्तेवासिने शिष्याय वोत्तरत उपविष्टाय
दद्यात् ॥ सर्वम्वा प्राश्नीयात् ॥ अथवा सर्वं स्वयं प्राश्नाति ॥ प्राग्वाऽसञ्चरे निन-
येत् ॥ प्राक् प्राच्यां यत्र जना न सञ्चरन्ति तस्मिन्नसञ्चरे मधुपर्कशेषम्प्रक्षिपेत् ॥
आचम्य प्राणान्त्सम्मृशति वाङ्म आस्येनसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं

**बाह्वोर्बलमूर्वोरोजोऽरिष्टानिमेऽङ्गानितनूस्तन्वामेसहेति** ॥ आचम्य वाङ्म आस्य इत्येतैर्मन्त्रैः प्रतिमन्त्रं यथा लिङ्गम्प्राणायतनानि सम्मृशति हस्तेन स्पृशति ॥ सर्वत्र साकाङ्क्षत्वादस्त्वित्यध्याहारः ॥ अरिष्टानि मेऽङ्गानि तनूरित्यत्र तु सन्त्वित्यध्याहारः ॥ मे पदस्य सर्वत्रानुषङ्गः । नन्वध्याहारानुषङ्गयोः को विशेषः उच्यते अनुषङ्गः श्रुतपदानयनम् अध्याहारः अश्रुतपदस्य लौकिकस्यानयनम् वाक्यनिराकाङ्क्षार्थम् ॥ प्रयोजनं चाध्याहृतपदस्य संहितावत्प्रयोगो न भवति ॥ सावसानम्प्रयोग इत्यर्थः ॥ अयमर्थः ॥ कर्कोपाध्यायैरपि पशुसमञ्जनप्रकरणे प्रदर्शितः ॥ अत्रैवं वाङ्म आस्ये अस्त्विति मुखम् । नसोर्मे प्राणोऽस्त्विति नासिकाछिद्रद्वयं युगपत् ॥ अक्ष्णोर्मे चक्षुरस्त्वित्यक्षिद्वयं युगपत् ॥ कर्णयोर्मे श्रोत्रमस्त्विति दक्षिणं कर्णमभिमृश्य ततो वाममनेनैव मन्त्रेण ॥ बाह्वोर्मे बलमस्त्विति दक्षिणं बाहुन्ततो वाममनेनैव मन्त्रेण ऊर्वोर्मे ओजोऽस्त्वित्यूरुद्वयं युगपदेव ॥ अरिष्टानि० सहसन्त्विति शिरः प्रभृति सर्वाङ्गानां युपगत् ॥ हरिहरेण प्राणायतनस्पर्शः सजलहस्तेन कर्तव्य इत्युक्तम् तदतीव मन्दम्॥ नह्यत्र सूत्रे जलग्रहणमस्ति ॥ सर्वाङ्गालम्भे उभाभ्यां हस्ताभ्यामालम्भ उक्तः सोऽपि न युक्तः । आचम्येति ग्रहणम् ॥ आचान्तोदकायेति वक्ष्यमाणत्वादनाचान्तस्यैव प्राणायतनसम्मर्शनं माभूदित्येतदर्थम् ॥ मन्त्रार्थः ॥ मे मम वागिन्द्रियमास्येऽस्तु । नसोर्नासिकयोः प्राणः प्राणवायुः । अक्ष्णोर्नेत्रगोलकयोरिति यावत् । चक्षुश्चक्षुरिन्द्रियम् । श्रोत्रं श्रवणेन्द्रियम्॥ बलं शक्तिः । ओजस्तेजः । मे मम तनूः देहः । तन्वादेहस्याङ्गानि च सह युगपत् अरिष्टानि अनुपहतानि सन्तु ॥

**आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह** ॥ आचान्तमुदकं येनासौ आचान्तोदकः तदर्थं शासमसिमादाय गामानीय गौरित्यर्घयिता त्रिः प्राह । आलभ्यतामित्यध्याहारः । आचान्तोदकग्रहणात्पुनराचमनमिति केचित् । आचान्तोदकायेति तादर्थ्ये चतुर्थी । शासादानस्य तादर्थ्यन्तु तदर्थम्पश्वालम्भनद्वारकम्* ।

**प्रत्याह माता रुद्राणान्दुहितावसूनांॅस्वसादित्यानाममृतस्य नाभिः । प्रनुवोचं चिकितुषे जनाय मागामनागामदितिम्वधिष्ट ॥ ममचामुष्य च पाप्मानंॅ हनोमीति यद्यालभेत** ॥ अर्घ्यो यजमानं प्रत्याह मातेत्यमुं मन्त्रम् ॥ यदि गामालभेत तदा मम चामुष्य च पाप्मानंॅ हनोमीति तदन्ते प्रयोगः ॥ अत्रामुष्यशब्दमुद्दृत्यार्घयितुर्नामग्रहणङ्कार्यम् ॥ मन्त्रार्थः ॥ अमृतस्य क्षीरस्य नाभिराश्रयः नु

* द्वि॰ पश्वालम्भनस्य तदर्थत्वात् ।

वितर्के छन्दसिव्यवहिताश्चेत्युक्तेरुपसर्गस्य वोचमित्यत्रान्वयः। प्रवोचं ब्रवीमि चिकितुषे चेतनावते जनाय यूयं इमाङ्गाम्मा वधिष्ट मा घ्नताम् किन्तु गोपशुं विधातुं घ्नतेति तात्पर्यार्थः। किम्भूतामनागामनपराधाम्। अदितिन्देवमातरम्पयोदानात्। अहम्ममामुष्यार्घयितुश्च पाप्मानङ्गोस्थाने हनोमि हन्मीति ॥ **अथ यद्युत्सिसृक्षेन्ममचामुष्य च पाप्माहत ॐउत्सृजत तृणान्यत्त्विति ब्रूयात्** ॥ यद्यर्घ्यो गामुत्स्रष्टुमिच्छेत्तदैवम्प्रयोगः ॥ मातारुद्राणामित्युक्त्वा ममचामुष्य च पाप्माहतः ॐ उत्सृजत तृणान्यत्तु॥ अत्राप्यमुष्यस्थाने अर्घयितुर्नामग्रहणम्॥ ॐ उत्सृजत तृणान्यत्त्विति उच्चैर्ब्रूयात् शेषमुपांशु ॥ एवं गवालम्भस्य सर्वत्र विकल्पे प्राप्ते क्वचिन्नियममाह ॥ **नत्वेवामांसोऽर्घः स्यादधियज्ञमधिविवाहङ्कुरुतेत्येव ब्रूयात्** ॥ यज्ञविवाहयोरमांसोऽर्घो न भवति। यज्ञमधिकृत्य विवाहमधिकृत्य कुरुतेत्येवं प्रयोगः। अतश्चालम्भनियमो यज्ञविवाहयोः ॥ गोरालम्भश्च कलिवर्जिते काले भवति यज्ञाधानं गवालम्भं सन्यासम्पलपैतृकम्। देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेदिति पराशरस्मृतेः ॥ अतश्च गवालम्भस्य कलौ निषिद्धत्वादुत्सर्गस्य च यज्ञविवाहयोरप्राप्तत्वाद्गौरित्युच्चारणादियज्ञविवाहयोः कलौ न प्रवर्तते ॥ यज्ञविवाहयोरन्यत्र तूत्सर्गपक्ष एव कलौ ॥ कलौ गोपशोर्निषेधात्तत्स्थाने अजालम्भः ॥ पायसं वेति जयरामः ॥ परिगतसम्वत्सरा अर्घ्या भवन्तीत्युक्तम् तदपवादमाह ॥ **यद्यप्यसकृत्सम्वत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः** ॥ यद्यपि सम्वत्सरस्य मध्ये असकृत्पुनः पुनः सोमेन यजेत तथाप्येनं यजमानं कृतार्घ्या एव ऋत्विजो याजयेयुः नाकृतार्घ्याः कुतः श्रुतेः ॥ एतत्सूत्रादेवं ज्ञायते सोमयागार्थमेव वृता ऋत्विजोऽर्घ्या नेतरयागार्थमिति॥ यक्ष्यमाणास्त्वृत्विज इत्यनेनैव गतार्थत्वात्सोमेन यक्ष्यमाणा एवार्घ्या इति नियमविधानार्थम्पृथगारम्भः ॥ ननु वसन्ते वसन्ते ज्योतिषा यजेतेत्येकस्मिन्सम्वत्सरे एक एव सोमयागः प्राप्तस्तत्कथमुच्यते असकृत्सम्वत्सरस्य सोमेन यजेतेति ॥ सत्यम् उच्यते ॥ यद्यपि नित्यः सोमयागः सकृदेवानुष्ठातव्यस्तथापि कामनायाञ्चोदितायाम्पुनः पुनरनुष्ठानं सम्भवत्येव द्वादशाहादीनाम्॥ यद्वा नित्यो वाजपेयस्तस्यानुष्ठाने तदङ्गभूतानाम्परियज्ञानामनुष्ठानम्भवति ॥ तस्मात्साधूक्तमसकृत्सम्वरस्य सोमेन यजेतेति ॥ वरशाखयामधुपर्कदानं गृह्यपरिशिष्टे ॥ वरस्य या भवेच्छाखा तच्छाखा गृह्यचोदिता। मधुपर्कः प्रदातव्योनान्यशाखेऽपि दातरीति ॥ अत्र ऋत्विगाद्युपलक्षणार्थं वरदातृशब्दौ ॥ तदुक्तम् अर्च्यशाखया मधु-

पर्क इति ॥ याज्ञिकास्तु अर्घ्यस्य यच्छाखीयकर्म तच्छाखीयो मधुपर्क इति वदन्ति ॥ तथा जगन्नाथकारिकायाम् ॥ तत्तद्गृह्योक्तविधिना विष्टराद्यर्हणन्ततइति ॥ सर्वत्र यजमानशाखयैव मधुपर्क इति जयन्तः, तत्तु कैरपि नादृतम् ॥ ॥ * ॥

इति श्री त्रिरग्निचित् सम्राट् स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षित-गदाधरकृते गृह्यसूत्रभाष्ये प्रथमकाण्डे तृतीया कण्डिका ॥ ॥ ३ ॥ ॥ * ॥

मूलम् ॥ चत्वारः पाकयज्ञा हुतो ऽहुतः प्रहुतः प्राशित इति ॥ १ ॥ पञ्चसु बहिः शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥ २ ॥ उपलिप्त उद्धृतावोक्षितेऽग्निमुपसमाधाय ॥ ३ ॥ निर्मन्थ्यमेके विवाहे ॥ ४ ॥ उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ॥ ५ ॥ त्रिषु त्रिषूत्तरादिषु ॥ ६ ॥ स्वातौ मृगशिरसि रोहिण्यां वा ॥ ७ ॥ तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण ॥ ८ ॥ द्वे राजन्यस्य ॥ ९ ॥ एका वैश्यस्य ॥ १० ॥ सर्वेषाꣳ शूद्रामप्येके मन्त्रवर्जम् ॥ ११ ॥ अथैनां वासः परिधापयति जराङ्गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपा वा । शतञ्च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदम्परिधत्स्व वास इति ॥ १२ ॥ अथोत्तरीयम् । या अकृन्तन्नवयं या अतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ । तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदम्परिधत्स्व वास इति ॥ १३ ॥ अथैनौ समञ्जयति । समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ । सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नाविति ॥ १४ ॥ पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति । यदैषि मनसा दूरं दिशोऽनु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसाङ्करोत्वित्यसाविति ॥ १५ ॥ अथैनौ समीक्षयति । अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामास्योनाशन्नो भव द्विपदे शञ्चतुष्पदे । सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।

तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः । सोमोऽददद् गन्धर्वाय गन्धर्वोऽददादग्नये । रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् । सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर । यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्याइति ॥ १६ ॥ ॥ ४ ॥ ॥ * ॥

कर्कः ॥ चत्वारः पाकयज्ञाः ॥ कोऽस्याभिसम्बन्धः विवाहः प्रक्रान्तः, तत्र च बहिः शालायां कर्मेष्यते, तेनान्यत्रापि यत्र यत्र बहिः शाला तदर्थमभिधीयते । चतुष्प्रकाराः पाकयज्ञाः भवन्तीति शेषः ॥ तानाह । हुतोऽहुतः प्रहुतः प्राशित इति ॥ यत्र होम एव भवति स हुत उच्यते यथा व्रततहोमः । अहुतश्च यत्र होमो नास्ति यथा स्रस्तरारोहणम् । प्रहुतो यत्र होमो बलिहरणञ्च यथा पक्वादिषु ॥ प्राशितो यत्र प्राशनमेव न होमो न च बलिहरणम् । यथा सर्वासाम्पयसि पायसꣳ श्रपयित्वा ब्राह्मणान्भोजयेदिति ॥ पञ्चसु बहिः शालायाम् ॥ कर्म भवति ॥ विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥ एतेषु बहिः शाला कार्या ॥ उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधायेति ॥ उपलेपनादि शक्यमेवावक्तुम् परिसमूहनादेरुक्तत्वात् । अतः परिसमूहनव्युदासार्थमिति केचित् । अपरे तु गृह्यस्थालीपाककर्मणि परिसमूहनाद्युक्तम् अगृह्यार्थोऽयमारम्भः । विवाहादयश्चागृह्याग्निविषयाः, येनैवाहितोऽग्निस्तदीयमेवहि कर्म तत्रेष्यते उपग्रहविशेषात् । तस्मादगृह्यार्थमुद्धतावोक्षितग्रहणमिति ॥ तदेतदपि नोपपद्यते ॥ यत्र क्वचिद्धोम इत्यनेनात्रापि प्राप्तत्वात् ॥ कथन्तर्ह्येतत् । अयमभिप्रायः सूत्रकारस्य । यत्र क्वचिद्धोम इत्यनेनाप्राप्तिः परिसमूहनादीनाम् अग्न्यर्थत्वात्तेषाम् । यत्र यत्राग्नेः स्थापनन्तत्र तत्रैते कर्तव्या इति स्मृतिः ॥ तथा च लिङ्गम् ॥ उद्धते अवोक्षितेऽग्निमादधाति ॥ एष एव विधिर्यत्र क्वचिद्धोम इत्यनेन स्थालीपाकादिषु परिसमूहनादेरप्राप्तिप्रज्ञप्त्यर्थमिदमुद्धतावोक्षितग्रहणम् ॥ निर्मन्थ्यमेके विवाहे ॥ निर्म्मन्थ्योऽचिरनिर्मथित उच्यते ॥ सर्व एव ह्यग्निर्मन्थनाज्जायते । यथा नवनीतेन भुङ्क्त इत्यचिरधेनेति गम्यते । एके लौकिकमेवाग्निमिच्छन्ति ॥ उदगयन आपूर्यमाणपक्षे पुण्याहे ॥ दैवानि कुर्वीतेति वाक्यशेषः । देवानाञ्चोदगयनमिष्यते । तद्धि देवानामिति । स यत्रोदङ्ङावर्तते देवेषु तर्हि भवतीति देवानामुदगयनम् । न च देवा उदग-

यनेन किञ्चित्कुर्वन्ति । तस्माद्दैवङ्कर्म तत्रोचितमिति गम्यते ॥ आपूर्यमाणपक्षो गृहीतः सोऽपि देवानामेव य एवापूर्यते ऽर्द्धमासः स देवानामित्यनेन पुण्याहस्तुस्मरणात् । सर्वन्दैवविषयमेतदभिधीयते ॥ कुमार्याः पाणिं गृह्णीयात्त्रिषु त्रिषूत्तरादिषु ॥ नक्षत्रेषु । कुमारीग्रहणं विंशतिप्रसूताव्युदासार्थम् । स्मर्यते हि विंशतिप्रसूतायाः पुनर्विवाहः ॥ स्वातौमृगशिरसिरोहिण्यां वेति विकल्पः ॥ तिस्रोब्राह्मणस्य वर्णानुपूर्व्येण ॥ भार्या भवन्ति ॥ वर्णानुपूर्व्यग्रहणाच्च न व्युत्क्रमेणेति ॥ द्वेराजन्यस्य ॥ वर्णानुपूर्व्येणेति वर्तते ॥ एकावैश्यस्य । सर्वेषाᳪ शूद्रामप्येकेमन्त्रवर्जम् ॥ सर्वेषां वर्णानामेवैके शूद्रामिच्छन्ति ॥ एकेनेच्छन्ति नह्यस्या धर्मकार्येष्वधिकार इति ॥ तथाच यास्काचार्याः ॥ रामा रमणायोपेयते न धर्मायेति । एके तु रमणार्थतयेच्छन्ति ॥ तथाचाह ॥ अग्निं प्रथमं चित्वा न रामामुपेयादिति । प्राप्तिपूर्वको हि प्रतिषेधो भवति तस्माद्विकल्प एवायमिति ॥ अथेनां वासः परिधापयति । जराङ्गच्छपरिधत्स्वेति ॥ अनेन मन्त्रेण मन्त्रश्च कारिकार्थे परिधापयिता चात्र वर एव । अपरेत्वध्वर्युमत्र कर्तारमिच्छन्ति । परिभाषितं ह्येतदध्वर्युः कर्मसु वेदयोगादिति । नैतदित्यपरे । न हि स्मार्तेष्वध्वर्योः कर्तृत्वं समाख्यया हि श्रौतेष्वध्वर्योः कर्तृत्वमिष्यते न चात्र समाख्याऽस्ति वेदयोगाभावात् । स्मरणादेव हि स्मृतीनाम्प्रामाण्यमुक्तम् । अतः समाख्याऽभावात् स्वयमेव कर्तृत्वम् ॥ ननु च पाकयज्ञेषु दक्षिणा श्रूयते पूर्णपात्रो दक्षिणा वरोवेति । दक्षिणा शब्दश्च परिक्रयार्थे द्रव्ये वर्त्तते । न च परिक्रेयमन्तरेण परिक्रयो भवति । तस्मादन्यस्य कर्तृत्वमिति । नैतदेवम् ॥ अस्तिह्यत्रान्योऽपि ब्रह्माख्यः कर्त्ता परिक्रेतव्यस्तदर्थः परिक्रयोऽयमिति क्षीणार्थापत्तिः । अपि च परकीये कर्मणि परो नैव प्रवर्तते वचनमन्तरेण श्रौतेषु च समाख्ययाऽन्यस्य कर्तृत्वमिति । नचेह समाख्याऽस्तीत्युक्तम् । वेदमूलत्वेऽपि हि स्मृतीनां समाख्याऽपरिज्ञानादकर्तृनियमः । श्रौतेषु तु परिक्रयाऽऽम्नानादन्यस्य कर्तृत्वमिति तदुक्तम् अपि च परकर्तृत्वे मा मामनुव्रता भवेत्येवमादीनि मन्त्रलिङ्गानि विरुध्यन्ते । अथोत्तरीयम् या अकृन्तन्नवयमिति अनेन मन्त्रेण परिधापयतीत्यनुवर्तते ॥ अथैनौसमञ्जयति । समञ्जन्तुविश्वेदेवा इति ॥ अनेन मन्त्रेण । सत्यपि कारित्वे वरस्यैव मन्त्रपाठो मन्त्रलिङ्गात् । कारयितृत्वं च सन्निधानात्कन्यापितुः । सन्निहितोऽह्यसौ प्रदातृत्वात् ॥ पित्राप्रत्तामादायगृहीत्वानिष्क्रामति । यदैषिमनसेत्यनेन मन्त्रेण ॥ आदाय गृहीत्वेति चोभयन्न वक्तव्यम् । उच्यते च किमर्थन्तत् अप्रतिग्रहस्यापि प्रतिग्रह-

विधिना दानं यथा स्यादिति । असाविति कन्यानामग्रहणम्मन्त्रान्ते ॥ अथैनौ समीक्षयति । अघोरचक्षुरपतिघ्न्येधीति ॥ समीक्षणक्रियाङ्कारयति ॥ कारितेचाध्येषणा परस्परं समीक्षेथामिति ॥ कारयितृत्वं कन्यादातुः सन्निधानात् ॥ मन्त्रस्तु वरस्यैव मन्त्रलिङ्गात् ॥ ४ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ चत्वारः पाकयज्ञाः ॥ भवन्तीति शेषः ॥ कोऽस्याभिसन्धिः ॥ उच्यते विवाह उपक्रान्तः ॥ तत्र बहिः शालायां कर्मेष्यते तत्प्रसङ्गेनान्यत्रापि यत्र यत्र बहिःशाला तदर्थमभिधीयते चतुष्प्रकाराः पाकयज्ञाः । तदाह । हुत इति यत्र होमएव स हुतः यथाऽक्षतहोमः ॥ अहुतश्च यत्र न होमः यथा स्रस्तरारोहणम् ॥ प्रहुतो यत्र होमो बलिहरणं च यथा पक्षादिः ॥ प्राशितो यत्र प्राशनमात्रं न होमादिः यथा सर्वासां पयसि पायसꣳ श्रपयित्वा ब्राह्मणान्भोजयेदिति ॥ पञ्चस्विति विवाहादिषु पञ्चसु बहिः शालायां कर्म भवति एषु बहिःशाला कार्येत्यर्थः ॥ बहिःशालाशब्दसामर्थ्यात् अग्निरत्र लौकिक एव ॥ उपलिप्त उद्धतावोक्षित इति शक्यमेवावक्तुम् परिसमूहनादेरुक्तत्वात् अतः परिसमूहनादिव्युदासार्थमित्येके अपरेतु गृह्यस्थालीपाकानाङ्कर्मणि परिसमूहनाद्युक्तम् ॥ अतोऽगृह्यार्थोऽयमारम्भः विवाहादयश्चागृह्याग्निविषयाः येनैवाहितोऽग्निस्तदीयमेव कर्म तत्रेष्यते ॥ उपग्रहविशेषात् ॥ तस्मादगृह्यार्थमुद्धतावोक्षितग्रहणमिति तदपि न यत्र क्वचिद्धोम इत्यनेन प्राप्तत्वात् कथन्तर्हीदमुक्तम् श्रूयताम् अयमभिप्रायः सूत्रकृतः । यत्र क्वचिद्धोम इत्यनेन परिसमूहनादीनामप्राप्तिः अग्न्यर्थत्वात्तेषां यत्र यत्राग्नेः स्थापनन्तत्र तत्रैते कर्तव्या इति ॥ तथा च लिङ्गम् ॥ उद्धते वा अवोक्षितेऽग्निमादधतीति ॥ तस्मादेष एव विधिर्यत्र क्वचिद्धोम इत्यनेन स्थालीपाकादिषु परिसमूहनादेरप्राप्तिप्रज्ञप्त्यर्थमिदमुद्धतावोक्षितग्रहणम् ॥ निर्मन्थ्यमेके विवाहे ॥ निर्मन्थ्यः अचिरनिर्मथितोगृह्यते सर्वोऽप्यग्निर्मन्थनाज्जायत इति । यथा नवनीतेन भुङ्क्ते इत्यचिराद्दुग्धेनेति गम्यते ॥ एके लौकिकाग्निमेवात्रेच्छन्ति अतो विकल्पः ॥ उदगयनादौ दैवानि कुर्वीतेति शेषः ॥ तद्धि देवानामिति ॥ स यत्रोदङ्मुखो वर्त्तते देवेषु तर्हि भवति ॥ देवानामुदगयनम् तस्माद्दैवङ्कर्म तत्रोचितमिति गम्यते ॥ आपूर्यमाणपक्षोऽपि देवानामेव य एवापूर्यतेऽर्द्धमासः स देवा इत्यनेन पुण्याहस्तु स्मरणात् ॥ सर्वन्दैवविषयमेव तदवगम्यते ॥ कुमार्याग्रहणं विंशतिप्रसूता व्युदासार्थम् ॥ स्मर्यते हि विंशतिप्रसूतायाः पुनर्विवाह इति ॥ त्रिषु त्रिषु नक्षत्रेषूत्तरादिषु उत्तरासहितेषु तेषु त्रिष्वित्यर्थः ॥

स्वात्यादिषु वेति विकल्पः ॥ तिस्रो ब्राह्मणस्येति । वर्णानुपूर्व्यग्रहणान्न व्युत्क्रमेण भार्या भवन्ति ॥ वर्णानुपूर्व्येणेति राजन्यवैश्ययोरप्यनुवर्तते ॥ सर्वेषां वर्णानां शूद्रामिच्छन्त्येके विना मन्त्रम् । एके न । नह्यस्या धर्मकार्येष्वधिकार इति ॥ तथाच यास्कः ॥ रामा रमणायोपेयते न धर्मायेति । एके तु रमणार्थतयेच्छन्ति ॥ तथा चाह अग्निं चित्वा प्रथमन्न रामामुपेयादिति ॥ प्राप्तिपूर्वको हि निषेधः अतोऽयं विकल्पः ॥ अथैनां वधूं वर एव वासः परिधापयति जराङ्गच्छेति मन्त्रेण मन्त्रस्य कारितार्थत्वात् ॥ अपरे त्वध्वर्युमत्र कर्तारम्मन्यन्ते, परिभाषितं ह्येतत् अध्वर्युः कर्मसु वेदयोगादिति ॥ नैतदित्यन्ये ॥ न हि स्मार्तेष्वध्वर्योः कर्तृत्वम्, समाख्यया हि श्रौतेष्वध्वर्योः कर्तृत्वमिष्यते । न चात्र समाख्याऽस्ति वेदयोगाभावात् ॥ स्मरणादेव स्मृतीनाम्प्रामाण्यमुक्तम् ॥ अतः समाख्याया अभावात्स्वस्यैव कर्तृत्वम् ॥ ननु पाकयज्ञेषु दक्षिणा श्रूयते पूर्णपात्रो दक्षिणा वरो वेति । दक्षिणाशब्दश्च परिक्रयार्थे द्रव्ये वर्तते न च परिक्रेतव्यमन्तरेण परिक्रयो भवति । ततोऽन्यस्य कर्तृत्वमिति ॥ नैवम् । अस्ति ह्यत्रान्योऽपि ब्रह्माख्यः परिक्रेतव्यस्तदर्थः परिक्रयोऽयमिति क्षीणाऽर्थापत्तिः ॥ अपिच परकीये कर्मणि परो नैव प्रवर्तते वचनं विना, श्रौतेषु च समाख्ययाऽन्यस्य कर्तृत्वम् । न चेह समाख्याऽस्तीति उक्तम् ॥ वेदमूलकत्वेऽपि स्मृतीनां समाख्याऽपरिज्ञानादकर्तृनियमः ॥ श्रौतेषु तु परिक्रयाऽऽम्नानादन्यस्य कर्तृत्वमिति युक्तम् ॥ अपिच परकर्तृत्वे सा मामनुव्रता भवेत्येवमादीनि मन्त्रलिङ्गानि विरुध्यन्ते ॥ तत्र मन्त्रमाह ॥ जराङ्गच्छेति ॥ अस्यार्थः ॥ तत्र प्रजापतिस्त्रिष्टुप् तन्तुदेव्यः परिधापने ॥ हे कन्ये त्वं जराम्निर्दुष्टं वृद्धत्वं मया सह गच्छ प्राप्नुहि, । वासश्च मया सम्पादितम्परिधत्स्व परिधेहि, अभिशस्तिरभिशापः शंमुप्रमादे तस्मात्पातीत्यभिशस्तिपा वा भव । आकृष्यन्ते कामादिभिरित्याकृष्टयो मनुष्याः तेषां मध्ये शतं च शरदो वर्षाणि जीव प्राणिहि ॥ सुवर्चाः पातिव्रत्यतेजोयुक्ता भूत्वा रयिं च धनं पुत्रांश्च अन्वनु संव्ययस्व उत्पाद्य राशीकुरु ॥ हे आयुष्मति इदं वासः परिधत्स्वेत्यनुवादः ॥ अथोत्तरीयं वासः या अकृन्तन्निति मन्त्रेण परिधापयतीत्यनुवर्तते ॥ अस्यार्थः तत्र प्रजापतिर्गायत्री विधात्र्यो वस्त्रधारणे ॥ या देवीः देव्यः इदं वासः अकृन्तन् कर्तितवत्यः तत्तत्सामर्थ्यवाहाः या अवयन् वीतवत्यः तन्तुसन्तानङ्कृतवत्यः ओतवत्य इत्यर्थः, यास्तन्तून्सूत्राणि अतन्वत प्रोतवत्यः तिर्यक्तन्तून् विस्तारितवत्य इत्यर्थः ॥ चकारात् या ओतान् प्रोतांश्च तन्तूनभित उभयपार्श्वयोरपि ततन्य तेनुः तुरीवेमादिव्यापारेण ग्रथितवत्य इत्यर्थः ॥ ताः तत्तत्सामर्थ्यदात्र्यो देव्यः स्वकार्यं रूपवदिदं वासः त्वा त्वां जरसे

दीर्घकालनिर्दुष्टजीवनाय संव्ययस्व परिधापयंतु ॥ पुरुषादिव्यत्ययश्छान्दसः ॥ अतो हे आयुष्मति इदमेतादृशं वासः परिधत्स्व उत्तरीयत्वेन वृणीष्व ॥ अथैनौ वधूवरौ कन्यापिता समञ्जयति परस्परं सम्मुखीकरोति समञ्जन्तु विश्वेदेवा इति मन्त्रेण ॥ समञ्जनं च युवां परस्परं समञ्जेथामिति प्रेषितयोः परस्परं सम्मुखीकरणं सत्यपि कारितत्वे वरस्यैव मन्त्रपाठो मन्त्रलिङ्गात् ॥ कारितत्वं च सन्निधानात्कन्यापितुरेव ॥ सन्निहितो ह्यसौ प्रदातृत्वात् ॥ मन्त्रपाठश्च कन्यासम्मुखमेव ॥ अथ मन्त्रार्थः ॥ तत्र अथर्वणोऽनुष्टुप् लिङ्गोक्ता मैत्रीकरणे ॥ हे कन्ये नौ आवयोः हृदयादीनि मनांसि तद्धर्मान् वा सङ्कल्पादीन् विश्वे सर्वे देवाः तथा सम्यग्भूता आपः समञ्जन्तु गुणातिशयाऽऽधानेन संस्कुर्वन्तु तथा सम्यग्भूतो मातरिश्वा अनुकूलो वायुः । तथा सन्धाता अनुकूलः प्रजापतिः । उ अप्यर्थे। देष्ट्री धर्माद्युपदेशकर्त्री वाक्सन्दधातु सुस्थितानि करोतु। पित्रा प्रत्तामित्यत्राऽऽदाय गृहीत्वेति उभयग्रहणम् अप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथा स्यादिति ॥ अप्रतिग्रहश्च क्षत्रियादिः ॥ तत्र मन्त्रः ॥ यदैषीति ॥ अस्यार्थः ॥ तत्राथर्वणोऽनुष्टुप् पवमानो निष्क्रमणे ॥ हे कन्ये यद्यतस्त्वं पितृगृहाद्दूरमेषि आगच्छसि मनसा अनुकूलया मनोवृत्त्या दिशः प्राच्याद्या अनु पवमानो वायुरिव ॥ वा शब्द उपमार्थे ॥ अतः स वायुः त्वा त्वां मन्मनसां मदेकनिष्ठचित्तां करोतु, किम्भूतः हिरण्यम् ऊर्जस्वत्पर्णं पतनं यस्य विशिष्टः कर्णं आश्रयो यस्यसः ॥ वायोरपि स्वकारणगुणसम्बन्धात् कर्णाश्रयत्वम् । विकर्ण एव वैकर्णः स्वार्थे अण् ॥ असाविति कन्यानामग्रहणं वरेणैव मन्त्रान्ते हे असुकीत्येवम् ॥ अथैनौ वधूवरौ समीक्षणक्रियां कारयति अघोर चक्षुरिति मन्त्रेण ॥ कारितार्थे चाध्येषणा युवां परस्परं समीक्षेथामिति ॥ मन्त्रपाठस्तु मन्त्रलिङ्गाद्वरस्यैव ॥ अथ मन्त्रार्थः ॥ तत्र चतुर्णाम्प्रजापतिर्द्वितीयस्यानुष्टुप् शेषाणां त्रिष्टुप् कुमारी समीक्षणे ॥ हे कन्ये त्वं अघोरचक्षुः सौम्यदृष्टिः अपापदृष्टिर्वा एधि भव । तथा अपतिघ्नी अकार्यकरणेन पत्यर्थघातिनी तथा मा भव ॥ एतस्मात्संस्कारात्तथा पशुभ्यः पशुवदाश्रितेभ्यः शिवा हितैषिणी च भव सुमनाः सुप्रसन्नचित्ता सुवर्चाः सुप्रभावयुक्ता वीरसूः सुपुत्रजननी देवकामा देवान् अग्न्यादीन् कामयते सेवार्थमीहते यद्वा देवं देवनं क्रीडां कामयते । स्योना सुखवती नोऽस्माकं शं सुखहेतुः द्विपदे मनुष्यवर्गाय मनुष्यवर्गमुपाकर्तुम्, तथा चतुष्पदे पशुवर्गाय पशुवर्गमुपाकर्तुञ्च शं सुखहेतुर्भव। हे कन्ये ते त्वां सोमश्चन्द्रस्ते तव प्रथमः आद्यः पतिः विविदे जन्मदिने

लब्धवान् ॥ विद्लृ लाभे धातुः ॥ ततः सार्द्धवर्षद्वयानन्तरं गन्धर्वः सूर्यो विविदे । अत उत्तरः तव द्वितीयोऽयम्पतिः ॥ ततोग्निरपि तावत्कालेन विविदे । अतोऽयन्तव तृतीयः पतिः । यथाहुः ॥ पूर्वं स्त्रियः सुरैर्भुक्तास्सोमगन्धर्ववह्निभिरिति ॥ तथा ते तव तुरीयश्चतुर्थश्चिरकालभोगाय पतिर्मनुष्यजाः मानुषः अहमेवेत्यर्थः ॥ किमिदानीं चतुर्णामपि इयम्पत्नी नेत्याह सोमोऽददिति मन्त्रार्थं ख्यापयन् ॥ अस्यार्थः । सोमश्चन्द्रस्त्रिंशन्मासान्भुक्त्वा गन्धर्वः सूर्यस्तस्मै अददत् ददौ सोऽपि तावत्कालम्भुक्त्वाऽग्नयेऽददत् सचाग्निर्मह्यमिमामदात् दत्तवान् । न केवलमिमां किन्तु पुत्रान् सुतान् रयिं धनञ्च चकाराद्धर्मादिचादादितिसम्बन्धः ॥ या जगञ्जनुः पूषा देवता सा इमां शिवतमाम् कल्याणगुणशीलां कृत्वा नोऽस्मान्प्रत्येरय ईरयतु ॥ आटोदर्शनं विभक्तेरदर्शनञ्च छान्दसम् ॥ अस्मास्वनुरक्तां कुरोत्वित्यर्थः । सा चास्मत्तः सुखं पुत्रांश्च कामयमाना ऊरू सक्थिनी विहर विवृणोतु प्रसारयत्वित्यर्थः मध्यमपुरुषश्छान्दसः । प्रयोजनमाह यस्यां स्त्रीयोनौ उशन्तः पुत्रान् सुखं चेच्छन्तः शेपम् शिश्नम्प्रहराम प्रवेशयाम वयं यस्यां च कन्यायाम् उ एवार्थे यस्यामेव वहवः कामाः धर्मपुत्ररतिसुखरूपाः सन्ति सन्तु वा ॥ किमर्थम्, निर्विघ्ने अग्निहोत्राद्युपासनयाऽन्तःकरणशुद्धिद्वारा सायुज्यमुक्तये ॥ ४ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ चत्वारः पाकयज्ञाः ॥ पच्यते अप्यते ओदनादिकमस्मिन्निति पाको गृह्याग्निस्तस्मिन्पाके नान्यत्रेति भावः । पाके यज्ञाः पाकयज्ञाः । यतः, वैवाहिकेऽग्नौ कुर्वीत गार्ह्यङ्कर्म यथाविधि । पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीङ्गृहीति मनुना दैनन्दिनपाको गृह्येऽग्नौ स्मर्यते । ते चत्वारः चतुर्विधा भवन्ति, कथम्, हुतो ऽहुतः प्रहुतः प्राशित इति ॥ तत्र हुतो होममात्रं यथा सायम्प्रातर्होमः । अहुतः होमवलिरहितङ्कर्म यथा स्रस्तरारोहणम् । प्रहुतो यत्र होमो वलिकर्म भक्षणञ्च यथा पक्षादि कर्म । प्राशितो यत्र प्राशनमात्रञ्च होमो न वलिः यथा सर्वामाङ्क्वाम्ययमि पायसंश्रपणानन्तरम्ब्राह्मणभोजनम् इत्यञ्चतुर्विधः ॥ पञ्चसु वहिः शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥ पञ्चसु संस्कारकर्मसु वहिःशालायां गृहाद्बहिःशाला वहिःशाला मण्डप इति यावत् । तस्याङ्कर्म भवति ॥ यथा विवाहे परिणयने चूडाकरणे क्षौरकर्मणि उपनयने मेखलावन्धे केशान्ते गोदानकर्मणि सीमन्तोन्नयने गर्भसंस्कारे एतेषु पञ्चसु वहिःशालायामनुष्ठानम् । अन्यत्र गृहाभ्यन्तरे मुख्यशालायामेव ॥ उपलिप्तउद्धतावोक्षितेऽग्निमुप

दीर्घकालनिर्दुष्टजीवनाय संव्ययस्व परिधापयंतु ॥ पुरुषादिव्यत्ययश्छान्दसः ॥ अतो हे आयुष्मति इदमेतादृशं वासः परिधत्स्व उत्तरीयत्वेन वृणीष्व ॥ अथैनौ वधूवरौ कन्यापिता समञ्जयति परस्परं सम्मुखीकरोति समञ्जन्तु विश्वेदेवा इति मन्त्रेण ॥ समञ्जनं च युवां परस्परं समञ्जेथामिति प्रैषितयोः परस्परं सम्मुखीकरणं सत्यपि कारितत्वे वरस्यैव मन्त्रपाठो मन्त्रलिङ्गात् ॥ कारितत्वं च सन्निधानात्कन्यापितुरेव ॥ सन्निहितो ह्यसौ प्रदातृत्वात् ॥ मन्त्रपाठश्च कन्यासम्मुखमेव ॥ अथ मन्त्रार्थः ॥ तत्र अथर्वणोऽनुष्टुप् लिङ्गोक्ता मैत्रीकरणे ॥ हे कन्ये नौ आवयोः हृदयादीनि मनांसि तद्धर्मान् वा सङ्कल्पादीन् विश्वे सर्वे देवाःतथा सम्यग्भूता आपः समञ्जन्तु गुणातिशयाऽऽधानेन संस्कुर्वन्तु तथा सम्यग्भूतो मातरिश्वा अनुकूलो वायुः । तथा सन्धाता अनुकूलः प्रजापतिः । उ अप्यर्थे। देष्ट्री धर्माद्युपदेशकर्त्री वाक्सन्दधातु सुस्थितानि करोतु । पित्रा प्रत्तामित्यत्राऽऽदाय गृहीत्वेति उभयग्रहणम् अप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथा स्यादिति ॥ अप्रतिग्रहश्च क्षत्रियादिः ॥ तत्र मन्त्रः ॥ यदैषीति ॥ अस्यार्थः ॥ तत्राथर्वणोऽनुष्टुप् पवमानो निष्क्रमणे ॥ हे कन्ये यद्यतस्त्वं पितृगृहाद्दूरमेषि आगच्छसि मनसा अनुकूलया मनोवृत्त्या दिशः प्राच्याद्या अनु पवमानो वायुरिव ॥ वा शब्द उपमार्थे ॥ अतः स वायुः त्वा त्वां मन्मनसां मदेकनिष्ठचित्तां करोतु, किम्भूतः हिरण्यम् ऊर्जस्वत्पर्णं पतनं यस्य विशिष्टः कर्णः आश्रयो यस्यसः ॥ वायोरपि स्वकारणगुणसम्बन्धात् कर्णाश्रयत्वम् । विकर्ण एव वैकर्णः स्वार्थे अण् ॥ असाविति कन्यानामग्रहणं वरेणैव मन्त्रान्ते हे अमुकीत्येवम् ॥ अथैनौ वधूवरौ समीक्षणक्रियां कारयति अघोर चक्षुरिति मन्त्रेण ॥ कारितार्थं चाध्येषणा युवां परस्परं समीक्ष्येथामिति ॥ मन्त्रपाठस्तु मन्त्रलिङ्गाद्वरस्यैव ॥ अथ मन्त्रार्थः ॥ तत्र चतुर्णाम्प्रजापतिर्द्वितीयस्यानुष्टुप् शेषाणां त्रिष्टुप् कुमारी समीक्षणे ॥ हे कन्ये त्वं अघोरचक्षुः सौम्यदृष्टिः अपापदृष्टिर्वा एधि भव । तथा अपतिघ्नी अकार्यकरणेन पत्यर्थघातिनी तथा मा भव ॥ एतस्मात्संस्कारात्तथा पशुभ्यः पशुवदाश्रितेभ्यः शिवा हितैषिणी च भव सुमनाः सुप्रसन्नचित्ता सुवर्चाः सुप्रभावयुक्ता वीरसूः सुपुत्रजननी देवकामा देवान् अग्न्यादीन् कामयते सेवार्थमीहते यद्वा देवं देवनं क्रीडां कामयते । स्योना सुखवती नोऽस्माकं शं सुखहेतुः द्विपदे मनुष्यवर्गाय मनुष्यवर्गमुपाकर्तुम्, तथा चतुष्पदे पशुवर्गाय पशुवर्गमुपाकर्तुञ्च शं सुखहेतुर्भव । हे कन्ये ते त्वां सोमश्चन्द्रस्ते तव प्रथमः आद्यः पतिः विविदे जन्मदिने

लब्धवान् ॥ विद्लृ लाभे धातुः ॥ ततः सार्द्धवर्षद्वयानन्तरं गन्धर्वः सूर्यो विविदे । अत उत्तरः तव द्वितीयोऽयम्पतिः ॥ ततोऽग्निरपि तावत्कालेन विविदे । अतोऽयन्तव तृतीयः पतिः । यथाहुः ॥ पूर्वं स्त्रियः सुरैर्भुक्तास्सोमगन्धर्ववह्निभिरिति ॥ तथा ते तव तुरीयश्चतुर्थश्चिरकालभोगाय पतिर्मनुष्यजाः मानुषः अहमेवेत्यर्थः ॥ किमिदानीं चतुर्णामपि इयम्पत्नी नेत्याह सोमोऽददिति मन्त्रार्थं ख्यापयन् ॥ अस्यार्थः । सोमश्चन्द्रस्त्रिंशन्मासान्भुक्त्वा गन्धर्वः सूर्यस्तस्मै अददत् ददौ सोऽपि तावत्कालम्भुक्त्वाऽग्नयेऽददत् सचाग्निर्मह्यमिमामदात् दत्तवान् । न केवलमिमां किन्तु पुत्रान् सुतान् रयिं धनञ्च चकाराद्धर्मादिचादादितिसम्बन्धः ॥ या जगज्जनुः पूषा देवता सा इमां शिवतमाम् कल्याणगुणशीलां कृत्वा नोऽस्मान्प्रत्यैरय ईरयतु ॥ आटोदर्शनं विभक्तेरदर्शनञ्च छान्दसम् ॥ अस्मास्वनुरक्ताङ्कुरोत्वित्यर्थः । सा चास्मत्तः सुखं पुत्रांश्च कामयमाना ऊरू सक्थिनी विहर विवृणोतु प्रसारयत्वित्यर्थः मध्यमपुरुषश्छान्दसः । प्रयोजनमाह यस्यां स्त्रीयोनौ उशन्तः पुत्रान् सुखं चेच्छन्तः शेपम् शिश्नम्प्रहराम प्रवेशयाम वयं यस्यां च कन्यायाम् उ एवार्थे यस्यामेव बहवः कामाः धर्मपुत्ररतिसुखरूपाः सन्ति सन्तु वा ॥ किमर्थम्, निविष्टे अग्निहोत्राद्युपासनयाऽन्तःकरणशुद्धिद्वारा सायुज्यमुक्तये ॥ ४ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ चत्वारः पाकयज्ञाः ॥ पच्यते श्रप्यते ओदनादिकमस्मिन्निति पाको गृह्याग्निस्तस्मिन्पाके नान्यत्रेति भावः । पाके यज्ञाः पाकयज्ञाः । यतः, वैवाहिकेऽग्नौ कुर्वीत गार्ह्यङ्कर्म यथाविधि । पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीङ्गृहीति मनुना दैनन्दिनपाको गृह्येऽग्नौ स्मर्यते । ते चत्वारः चतुर्विधा भवन्ति, कथम्, हुतो ऽहुतः प्रहुतः प्राशित इति ॥ तत्र हुतो होममात्रं यथा सायम्प्रातर्होमः । अहुतः होमबलिरहितङ्कर्म यथा स्रस्तरारोहणम् । प्रहुतो यत्र होमो बलिकर्म भक्षणञ्च यथा पक्षादि कर्म । प्राशितो यत्र प्राशनमात्रञ्च होमो न बलिः यथा सर्वामाक्रयाम्पयसि पायसंश्रपणानन्तरम्ब्राह्मणभोजनम् इत्यञ्चतुर्विधः ॥ पञ्चसु बहिः शालायां विवाहे चूडाकरण उपनयने केशान्त सीमन्तोन्नयन इति ॥ पञ्चसु संस्कारकर्मसु बहिःशालायां गृहाद्बहिःशाला बहिःशाला मण्डप इति यावत् । तस्याङ्कर्म भवति ॥ यथा विवाहे परिणयने चूडाकरणे क्षौरकर्मणि उपनयने मेखलाबन्धे केशान्ते गोदानकर्मणि सीमन्तोन्नयने गर्भसंस्कारे एतेषु पञ्चसु बहिःशालायामनुष्ठानम् । अन्यत्र गृहाभ्यन्तरे मुख्यशालायामेव ॥ उपलिप्तउद्धतावोक्षितेऽग्निमुप

समाधाय ॥ उपलिप्ते गोमयोदकेन उद्धृते स्फ्येनोल्लिखितेनेति तिसृभीरेखाभिः अवोक्षिते उदकेनाभ्युक्षिते बहिःशालागृहयोः अन्यतरस्मिन्प्रदेशे अग्निमुपसमाधाय अग्निं लौकिकमावसथ्यं वा उपसमाधाय स्थापयित्वा । अयं च लेपनादिविधिर्नापूर्वः । अपि तु परिसमुह्येत्यादिपूर्वोक्तस्यैवानुवादः, ततश्चात्रानुक्तमपि परिसमूहनमुद्धरणञ्च सर्वत्र भवति एष एव विधिर्यत्र क्वचिद्धोम इति वचनात् ॥ **निर्मन्थ्यमेके विवाहे** ॥ एके आचार्याः विवाहे पाणिग्रहे निर्मन्थ्यमारणेयमग्निं वैवाहिकहोमाधिकरणमिच्छन्ति । अथ विवाहाख्यङ्कर्माह ॥ **उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात्** ॥ उदगयने मकरादिराशिषट्कस्थिते रवौ आपूर्यमाणपक्षे शुक्लपक्षे पुण्याहे ज्योतिःशास्त्रोक्तविष्ट्यादिदोषरहिते कुमार्याः अनन्यपूर्विकायाः कन्यायाः । अनेन विंशतिप्रसूतायाः स्मृत्यन्तरविहितस्य पुनर्विवाहस्यानियमः इच्छाचेत्करोति । पाणिं गृह्णीयात् पाणिं हस्तं स्वगृह्योक्तविधिना गृह्णीयात् ॥ अस्मिन् अयनपक्षदिनानि नियम्य नक्षत्रनियममाह ॥ **त्रिषु त्रिषूत्तरादिषु स्वातौ मृगशिरसि रोहिण्यां वा** ॥ उत्तरा'आदिर्येषान्तान्युत्तरादीनि तेषु कतिषु त्रिषु त्रिषु, तथाहि उत्तराफाल्गुनी हस्तचित्रा इति त्रीणि, उत्तराषाढा श्रवणधनिष्ठा इति त्रीणि, तथा उत्तराभाद्रपदारेवत्यश्विन्य इति त्रीणि ॥ स्वातौ मृगशिरसि रोहिण्यां वा । एतेषान्नक्षत्राणामन्यतमे इत्यर्थः ॥ कुमार्याः पाणिं गृह्णीयादिति सामान्येनोक्तन्तत्र विशेषमाह ॥ **तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण द्वे राजन्यस्यैका वैश्यस्य** ॥ ब्राह्मणस्य द्विजाग्र्यस्य वर्णानुपूर्व्येण वर्णक्रमेण तिस्रो ब्राह्मणीक्षत्रियावैश्या विवाह्या भवन्ति द्वे क्षत्रियावैश्ये राजन्यस्य विवाह्ये भवतः एका वैश्यैव वैश्यस्य विवाह्या भवति ॥ वर्णानुपूर्व्यग्रहणात् व्यत्क्रमो निषिद्धः ॥ **सर्वेषाꣳ शूद्रामप्येके मन्त्रवर्जम्** ॥ सर्वेषां ब्राह्मणक्षत्रियविशां शूद्रामप्येके विवाह्यां मन्यन्ते तत्र विशेषः । मन्त्रवर्जम्मन्त्ररहितं यथा भवति तथा । अत्र द्विजातीनामपि शूद्रापरिणयने आचार्येण मन्त्रवत्क्रियानिषेधात् ॥ अतः शूद्रस्य शूद्रापरिणयने मन्त्रवत्क्रिया नास्ति किन्तु मन्त्ररहितक्रियामात्रमितिगम्यते । ततश्च शूद्रस्य शूद्रापरिणयने मन्त्रवद्धोमादि कर्म कुर्वन्ति तदशास्त्रीयम् । एके न मन्यन्ते शूद्राविवाहम्, कुतः शूद्रायाः धर्मकार्येष्वनधिकारात् । कुतो नाधिकार इति चेत्, रामा रमणायोपेयते न धर्माय कृष्णजातीयेति निरुक्तकारयास्काचार्यवचनात् अतो रमणार्थं शूद्रापरिणयनं पक्षे । एवं सति षण्मासदीक्षाद्य-

नन्तरमग्निञ्चित्वा प्रथमन्न रामामुपेयादिति निषेध उपपद्यते प्राप्तं हि प्रतिषेधस्य विषयः यदि रामोढा न स्यात्तदा अग्निचितः कथन्तत्प्रथमगमनम्प्रतिषिध्येत। तस्माच्छूद्रापरिणयनमुपभोगार्थमिच्छया कुर्वतो न शास्त्रातिक्रमः। धर्मप्रजारत्यर्थो हि विवाहः। प्रासङ्गिकमभिधायेदानीम्प्रकृतमाह॥ तत्र पुण्येऽहनि॥ अथैनां वासः परिधापयति जराङ्गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपा वा। शतञ्चजीवशरदः सुवर्चारयिं च पुत्राननुसंव्ययस्वायुष्मतीदम्परिधत्स्ववास इति॥ अथाग्निस्थापनानन्तरमेनाङ्कुमारीं वासः अहतं सदशम्वस्त्रं परिधापयति परिहितङ्कारयति वरः॥ जराङ्गच्छेति मन्त्रम्पठित्वा। कुमारी च स्वयम्परिधत्ते॥ अथोत्तरीयम् या अकृन्तन्न वयं या अतन्वत याश्च देवीस्तन्तूनभितो ततन्थ। तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वास इति॥ अथोत्तरीयम्॥ वस्त्रपरिधानानन्तरमुत्तरीयम्वासः परिधापयति वरः। या अकृन्तन्निति मन्त्रमुक्त्वा अत्र परिधापयतीति णिजन्तस्य कारितार्थत्वात्परिधत्स्ववास इति मन्त्रस्यापि तदर्थत्वात्परिधापयिताऽन्य इत्यवगम्यते स किं वरः अध्वर्युर्वा इति संशयः। तत्राध्वर्युः कर्मसु वेदयोगादिति परिभाषाबलात् अध्वर्युः परिधापयितेति चेत् तन्न स्मार्तेषु कर्मसु अध्वर्योः कर्तृत्वयोगाभावात्। समाख्यया हि अध्वर्योः कर्मसु योगः समाख्या च वेदयोगात्। न च स्मृतिर्वेदः स्मरणादेवस्मृतीनाम्प्रामाण्यात् न पुनर्वेदमूलत्वेन। अतः समाख्याया अभावात् स्वयङ्कर्तृत्वम्पाकयज्ञेषु अतो वर एव परिधापयिता। ननु पूर्णपात्रो दक्षिणा वरोवेति पाकयज्ञेषु परिक्रयार्था दक्षिणा श्रूयते सा च दक्षिणा परिक्रेतव्याभावे नोपपद्यते। अतस्तदन्यथानुपपत्त्या अन्यस्य कर्तृत्वङ्कल्प्यताम् नैतदेवम्। अन्यस्य ब्रह्मणः परिक्रेतव्यस्य कर्तुर्विद्यमानत्वात् परिक्रयार्थदक्षिणा श्रवणस्योपपत्तेः। किञ्च वचनाभावे परः परस्य कर्म कर्तुन्न प्रवर्तते नात्र वचनमस्ति पाकयज्ञेषु स्वतो ऽन्यकर्तृत्वविधायकम्। श्रौतवत्समाख्यापि नास्ति। ननु स्मृतीनां वेदमूलत्वात् यद्वेदमूलं स्मार्तङ्कर्म तद्वेदसमाख्यया अन्यस्य कर्तृत्वङ्कल्प्यताम्। मैवम्। यतः स्मृतयोऽनिश्चितवेदमूलाः अतो न ज्ञायते किं वेदमूलमिदङ्कर्म। यद्वेदसमाख्यया अन्यः कर्ता कल्प्यते। मन्त्रलिङ्गविरोधोऽपि परकर्तृत्वे कथं सा मामनुव्रता भव। प्रजापतिष्ट्वा नियुनक्तु मह्यम्॥ अमोहमस्मीत्यादि सा नः पूषाशिवतमेत्यादयो वैवाहिकमन्त्राः आत्मलिङ्गाः ते च परकर्तृत्वे विरुद्ध्यन्ते तस्मात्पाकयज्ञेषु स्वयं यजमानस्यैव कर्तृत्वमिति सिद्धम्। अत्र वरोऽपि वाससी

परिधत्ते परिधास्यै यशसामिति मन्त्राभ्याम् ॥ **अथैनौ समञ्जयति समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ । सम्मातरिश्वासन्धाता समुदेष्ट्रीदधातु नाविति ॥** अथ वस्त्रपरिधानानन्तरम्परस्परं समञ्जेथामिति प्रैषेण कन्यापिता एनौ वधूवरौ समञ्जयति सम्मुखौ वरकुमार्यौ करोति अत्र विशेषमाह ऋष्यशृङ्गः "वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् । नाम सङ्कीर्तयेद्विद्वान्कन्यायाश्चैवमेव हि" तत्र वरः समञ्जन्तु विश्वेदेवा इत्यादिकम्मन्त्रं कन्यासम्मुखीभूतः पठति ॥ अत्र कन्यादानप्रयोगो लिख्यते ॥ उत्तरत्र पित्रा प्रत्तामिति सूत्रस्मरणात् तद्यथा अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्राय इति वरपक्षे अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्रीम् इति कन्यापक्षे । एवमेव पुनर्वारद्वयमुच्चार्यामुकगोत्रायामुकप्रवरायामुकशर्मणे ब्राह्मणाय इति ब्राह्मणवरपक्षे । इतरवरपक्षे वर्मणे अमुकगोत्रगुप्ताय अमुकदासायेति विशेषः । अमुकगोत्राममुकप्रवराममुकनाम्नीमिमाङ्कन्याम्प्रजापतिदैवतां यथा शक्त्यलङ्कृतां पुराणोक्तकन्यादानफलकामो भार्यात्वेन तुभ्यमहं सम्प्रददे इति सकुशेन जलेन कन्याहस्तं वरस्य हस्ते दद्यात् । वरश्च द्यौस्त्वा ददातु पृथिवीत्वा प्रतिगृह्णात्विति मन्त्रेण प्रतिगृह्णीयात् ततः कोऽदादिति कामस्तुतिम्पठेत् । ततः कन्यापिता कृतैतत्कन्यादानप्रतिष्ठासिद्ध्यर्थं सुवर्णङ्गोमिथुनञ्च दक्षिणान्दद्यात् । अत्राचारादन्यदपि यौतक*त्वेन सुवर्णरजतताम्रगोमहिष्यश्वग्रामादि कन्यापिता यथा सम्भवन्ददाति अन्येऽपि बान्धवादयो यथासम्भवं यौतकम्प्रयच्छन्ति । केचन यौतकं होमान्ते प्रयच्छन्ति । अत्र देशाचारतो व्यवस्था ॥ **पित्राप्रत्तामादाय गृहीत्वा निष्क्रामति ॥ यदैषीति ॥** पित्रा जनकेन प्रत्तां सङ्कल्प्य दत्तामादाय प्रतिग्रहविधिना प्रतिगृह्य गृहीत्वा हस्ते धृत्वा निष्क्रामति गृहमध्यात् मण्डपाद्वा । अग्निसमीपङ्गन्तुम् ॥ **यदैषि मनसा दूरं दिशोनु पवमानो वा हिरण्यपर्णो वैकर्णः सत्वा मन्मनसाङ्करोत्वित्यसाविति ॥** यदैषि मनसेत्यादिना मन्त्रेण करोत्वमुकदेवि इत्यन्तेन । अत्र पित्रेत्युपलक्षणम् ॥ पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः पर इति ॥ याज्ञवल्क्येन अन्येषामपि

* यौतकादि तु यद्देयं सुदायोहरणं च यत् । इत्यमरः । युतकं योनिसंबन्धस्तत्र भवं तत्र भव इत्यण् । युतयोर्वरवध्वोर्वा इदं तस्येदमित्यण् । आदिनाव्रतभित्तादि ।

कन्यादाने अधिकारस्मरणात् ॥ अथैनौ समीक्षयति ॥ अथ निष्क्रमणानन्तरमेतौ वधूवरौ परस्परं समीक्षेथामिति प्रैषेण कन्यापिता समीक्षयति समीक्षणङ्कारयति । तत्र समीक्षमाणो वरः । अघोरचक्षुरपतिघ्न्येधि शिवापशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामास्योनाशन्नोभवद्द्विपदेशं चतुष्पदे ॥ सोमः प्रथमो विविदे गन्धर्वो विविदउत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः । सोमोऽददद् गन्धर्वाय गन्धर्वोऽददद्ग्नयेरयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् । सानः पूषाशिवतमामेरयसानऽऊरू उशती विहर यस्यामुशन्तः प्रहराम शेपं यस्यामुकामाबहवो निविष्ट्या इति ॥ अघोरचक्षुरित्यादीन् निविष्ट्या इत्यन्तान्मन्त्रान्पठति वरः ॥ इति हरिहरभाष्ये चतुर्थी कण्डिका ॥ ४ ॥ * ॥

गदाधरः ॥ चत्वारः पाकयज्ञाः ॥ पाकयज्ञा इति कर्मणां नामधेयानि ॥ चतुष्प्रकारा भवन्ति के ते हुतो ऽहुतः प्रहुतः प्राशित इति ॥ हुतो होममात्रम् यथा सायम्प्रातर्होमः ॥ अहुतो यत्र न हूयते यथा स्रस्तरारोहणम् । प्रहुतो यत्र हूयते बलिहरणञ्च यथा पक्षादिः । प्राशितो यत्र प्राश्यत एव न होमो न बलिहरणम् यथा सर्वासां पयसि पायसᳪ श्रपयित्वा ब्राह्मणान्भोजयेदिति । ननूपदिश्यमाना एवैते चत्वारो भवन्ति । प्रकारकथनम्प्रवृत्तिविशेषकरत्वाभावादनर्थकमिति चेत् नानर्थकम्. प्रकारान्तरसूचनार्थत्वात् । चत्वारः प्रकारा उपदिष्टाः । अस्ति हि पञ्चमः प्रकारः स नोपदिष्टः तत्सूचनार्थमेवैतत्सूत्रम् । कश्चासौ ब्रह्मयज्ञ इति तस्य विधेर्ब्राह्मणेोपदिष्टत्वात् । एतावता तदवश्यमहरहरध्येतव्यमिति भर्तृयज्ञाः ॥ पञ्चसु बहिः शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥ विवाहादिषु पञ्चसु कर्मसु गृहाद्बहिः शालायाङ्कर्म भवति । अन्यत्रान्तःशालायाम् बहिः शालायां वा भवति ॥ विवाहे तु मण्डपो वशिष्ठेनोक्तः ॥ षोडशारत्निकङ्कुर्यात् चतुर्द्वारोपशोभितम् । मण्डपन्तोरणैर्युक्तन्तत्र वेदिम्प्रकल्पयेत् ॥ अष्टहस्तन्तु रचयेन्मण्डपं वा द्विषट्करम् ॥ वेदीकरणन्नारदोक्तम् ॥ हस्तोच्छ्रितां चतुर्हस्तैश्चतुर्हस्तां समन्ततः । स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे तु सद्मनः ॥ समान्तथा चतुर्दिक्षु सोपानैरतिशोभिताम् । प्रागुदक्प्रवणां रम्भास्तम्भहंसशुकादिभिः । एवं विधामारुरुक्षेन्मिथुनं साग्निवेदिकामिति ॥ मत्स्यपुराणेऽपि ॥ मङ्गलेषु च सर्वेषु मण्डपो गृहवामतः । कार्यः षोडश हस्तो वा न्यूनहस्तो दशावधिः । स्तम्भैश्चतुर्भिरेवात्र वेदीमध्ये प्रतिष्ठितेति ॥ कारिकायामपि विवाहे मण्डपवेदी-

करणमुक्तम् ॥ उपलिप्तउद्धतावोक्षितेऽग्निमुपसमाधाय ॥ यत्राग्नेः स्थापनन्तत्रोपलिप्ते उद्धते अवोक्षिते उदकेनाभ्युक्षिते देशेऽग्निस्थापनम् ॥ अत्रानेन पञ्चाग्निसंस्कारा लक्ष्यन्ते ॥ ननु परिसमूहनादेरुक्तत्वात्किमर्थमुपलेपनादिकमुच्यते । सत्यम् उच्यते यत्र क्वचिद्धोम इत्यनेनाप्राप्तिः परिसमूहनादेरग्न्यर्थत्वाद्यत्रयत्राग्नेः स्थापनन्तत्र तत्रैते भवन्ति । तथा च लिङ्गम् । उद्धते वा अवोक्षितेऽग्निमादधातीति ॥ एष एव विधिर्यत्र क्वचिद्धोम इत्यनेन च होमार्थमग्निस्थापने स्युः । अन्यत्र गृहान्तरेऽग्निनिधाने अग्निगमने मथित्वाऽग्निस्थापने च न स्युः किञ्च एष एवेत्यनेन यत्र स्वस्थानस्थितेऽग्नौ स्थालीपाकादिकं क्रियते तत्रापि पञ्चैते स्युः तन्मा भूदित्यनेन सूत्रेण ज्ञाप्यते । उपलिप्त उद्धतावोक्षिते देशेऽग्निमुपसमाधाय विवाहो भवतीति भर्तृयज्ञैः सूत्रं योजितम् ॥ परिसमूहनपरिसङ्ख्या च तेषाम्मते ॥ निर्मन्थ्यमेके विवाहे ॥ विवाह इति कर्मणो नामधेयम् । एके विवाहकर्मणि निर्मथ्यमग्निमिच्छन्ति अन्ये लौकिकमिच्छन्ति ॥ निर्मथ्योऽचिरनिर्मथितो ग्राह्यः ॥ सर्व एव ह्यग्निर्मन्थनाज्जायते यथा नवनीतेन भुङ्क्ते इत्युक्ते अचिरदग्धेनेति ज्ञायते । अत्र या काचिदरणिर्ग्राह्या ॥ उदगयन आपूर्यमाणपक्षे पुण्याहे ॥ उदगयने उत्तरायणे आपूर्यमाणपक्षे शुक्लपक्षे पुण्याहे शोभने विष्ट्यादिरहितकाले दैवानि कर्माणि कुर्यात् एवं हि श्रूयते । स यत्रोदङ्ङावर्तते देवेषु तर्हि भवतीति तस्मात्तत्र देवकर्मोचितम् ॥ आपूर्यमाणः सोऽपि देवानामेव । तथा य एवापूर्यतेऽर्धमासः स देवा इति श्रुतेः । पुण्याहोऽपि उदगयनादीनां समुच्चयः तेन सर्वन्देवकर्मोदगयन आपूर्यमाणपक्षे पुण्याहे कार्यम् । इदं चानुक्तकालविषयं सूत्रम् यत्र नियतः कालो यथा सायं जुहोति प्रातर्जुहोति ॥ यथा पौर्णमास्याम्पौर्णमास्या यजेतामावास्याया ममावास्यया यजेतेत्यादौ तत्तत्काले कार्यम् । न हि शुक्लपक्षे पुण्याहादावग्निहोत्राद्यनुष्ठानमिष्टमहरहरनुष्ठातव्यत्वात् । अत उपनयनचूडाकरणादीनि उदगयनादौ कार्याणि ॥ अन्यानि तु येषु न समुच्चयः सम्भवति तानि यथा सम्भवमेतेषु कर्तव्यानि ॥ यथा सर्पबलिरनाहिताग्न्याग्रयणमित्यादीनीति तन्त्ररत्ने ॥ एवम्पित्र्याणि दक्षिणायनेऽपराह्णे च ॥ कुमार्याः पाणिं गृह्णीयात् ॥ कुमार्या अक्षतयोन्याः पाणिं गृह्णीयात् वक्ष्यमाणेन विधिना विवाहं कुर्यात् । विंशतिप्रसूताव्युदासार्थं कुमारीग्रहणम् ॥ स्मर्यते हि तस्याः पुनर्विवाहः ॥ त्रिषुत्रिषूत्तरादिषु ॥ उत्तरा आदिर्येषान्तान्युत्तरादीनि तेषु तेषु त्रिषु ॥ अयमर्थः ॥ उत्तराफाल्गुन्यां हस्ते चित्रायाञ्च । एव मुत्तराषाढायां श्रवणे धनिष्ठायाञ्च । एवमुत्तरा प्रौष्ठपदिरेव-

त्यामश्विन्याञ्च ॥ स्वातौमृगशिरसिरोहिण्यां वा ॥ एतेषामन्यतमे वा नक्षत्रे विवाहो भवतीत्यर्थः ॥ उदगयन आपूर्यमाणपक्षे पुण्याहे इत्युक्तत्वात् कालप्रसङ्गाच्च स्मृत्यन्तरोक्तसम्वत्सरादिकन्याविवाहकालोऽत्र निरूप्यते ॥ तत्र ज्योतिर्निबन्धे ॥ षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः । सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः ॥ तथा यमः ॥ सप्त सम्वत्सरादूर्ध्वं विवाहः सार्ववर्णिकः । कन्यायाः शस्यते राजन्नान्यथा धर्मगर्हितः ॥ राजमार्तण्डे ॥ अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् । तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥ मासत्रयादूर्ध्वमयुग्म वर्षे युग्मेऽपि मासत्रयमेव यावत् । विवाहशुद्धिम्प्रवदन्ति सन्तो वात्स्यादयस्स्त्रीजनिजन्यमासात् ॥ स्मृत्यन्तरे तु जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् । कुमारीवरणन्दानम्मेखलाबन्धनन्तथेत्युक्तम् ॥ सर्वसंग्रहवाक्यानि कारिकायाम् ॥ अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ दशमेऽनग्निका वा स्याद् द्वादशे वृषली स्मृता । अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥ प्राप्ते तु द्वादशे वर्षे यः कन्यान्न प्रयच्छति । मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥ एतच्च प्रायिकं ज्ञेयन्न रजोदर्शनम्भवेत् । स्त्रीणाङ्कामाच्चिद्वर्षेऽस्मिन्नाभाणि मनुनाऽपि तत् ॥ उद्वहेत्त्रिंशदब्दस्तु कन्यां द्वादशवार्षिकीम् । त्र्यष्टवर्षोऽष्टवर्षान्न धर्मे सीदति सत्वरः ॥ एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् । वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम् ॥ त्रिंशद्वर्षो दशाब्दां च भार्यां विन्दति नग्निकाम् । तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥ प्रदानम्प्रागृतोस्तस्या ऊर्ध्वङ्कुर्वन्स दोषभाक् । ज्येष्ठो भ्राता पिता माता दृष्ट्वा कन्यां रजस्वलाम् ॥ त्रयस्ते नरकं यान्ति स्वयमित्यब्रवीद्यमः । यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ॥ असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः वृषलीसङ्गृहीता यो ब्राह्मणो मदमोहितः । सततं सूतकन्तस्य ब्रह्महत्या दिने दिने ॥ पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥ दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणीम् । अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलामिति ॥ अथ मासः ॥ व्यासः ॥ माघफाल्गुनवैशाखे यद्यूढा मार्गशीर्षके । ज्येष्ठे चाषाढके चैव सुभगा वित्तसंयुता ॥ श्रावणेऽपि च पौषे वा कन्या भाद्रपदे तथा । चैत्राश्वयुक्कार्तिकेषु याति वैधव्यतां लघु ॥ नारदः ॥ माघफाल्गुनवैशाखज्येष्ठमासाः शुभावहाः । कार्तिको मार्गशीर्षश्च मध्यमौ निन्दिताः परे ॥ पौषेऽपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदा स्यात् । प्रशस्तमाषाढकृतं विवाहं वदन्ति गर्गा मिथुने स्थितेऽर्के । मार्ग

मासि तथा ज्येष्ठे क्षौरम्परिणयव्रतम् । ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ॥ कृत्तिकास्थं रविन्त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत् ॥ उत्सवादिषु कार्येषु दिनानि दश वर्जयेत् ॥ तथारत्नकोशे ॥ जन्मर्क्षे जन्मदिवसे जन्ममासे शुभन्त्यजेत् । ज्येष्ठे मास्यादिगर्भस्य शुभं वर्ज्यं स्त्रिया अपि ॥ राजमार्तण्डे ॥ जातन्दिनन्दूषयते वसिष्ठो ह्यष्टौ च गर्गो नियतन्दशात्रिः । जातस्य पक्षङ्किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासि ॥ जन्ममासे तिथौ भे च विपरीतदले सति । कार्यम्मङ्गलमित्याहुर्गर्गभार्गवशौनकाः ॥ जन्ममासे निषेधेऽपि दिनानि दश वर्जयेत् । आरभ्य जन्मदिवसाच्छुभाः स्युस्तिथयोऽपरे ॥ पराशरस्मृतौ विशेषः ॥ अज्येष्ठा कन्यका यत्र ज्येष्ठपुत्रो वरो यदि । व्यत्ययेर्वा तयोस्तत्र ज्येष्ठो मासः शुभप्रदः ॥ ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते । तयोरन्यतरे ज्येष्ठे ज्येष्ठो मासः प्रशस्यते ॥ तथा ॥ द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकज्येष्ठं शुभावहम् । ज्येष्ठत्रयन्न कुर्वीत विवाहे सर्वसम्मतम् ॥ यत्तु सार्वकालमेके विवाह इति वदन्ति तत्प्रौढायाङ्कन्यायां वेदितव्यम् ॥ तथा च राजमार्तण्डे ॥ राहुग्रस्ते तथा युद्धे पितृणाम्प्राणसंशये । अतिप्रौढा च या कन्या चन्द्रलग्नबलेन तु ॥ यद्वा तदासुरादिविवाहविषयम् ॥ तथा च गृह्यपरिशिष्टम् ॥ धर्म्येषु विवाहेषु कालपरीक्षणन्नाधर्म्येष्विति ॥ अथ गुर्वादिबलम् ॥ तत्र गर्गः । स्त्रीणाङ्गुरुबलं श्रेष्ठम्पुरुषाणां रवेर्बलम् । तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण भाषितम् ॥ देवलः ॥ नष्टात्मजा धनवती विधवा कुशीला पुत्रान्विता हृतधवा सुभगा विपुत्रा । स्वामिप्रिया विगतपुत्रधवा धनाढ्या वन्ध्या भवेत्सुरगुरौ क्रमशोऽभिजन्म ॥ गर्गः ॥ जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः । विवाहेऽथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः ॥ अस्यापवादः ॥ सर्वत्रापि शुभन्दद्याद्द्वादशाब्दात्परङ्गुरुः । पञ्च षष्ठाब्दयोरेव शुभगोचरता मता ॥ सप्तमात्पञ्चवर्षेषु स्वोच्चस्वर्क्षगतो यदि । अशुभोऽपि शुभन्दद्याच्छुभदर्क्षेषु किम्पुनः ॥ रजस्वलाया कन्याया गुरुशुद्धिन्न चिन्तयेत् । अष्टमेऽपि प्रकर्तव्यो विवाहस्त्रिगुणार्चनात् ॥ अर्कगुर्वोर्बलङ्गौर्या रोहिण्यर्कबला स्मृता । कन्या चन्द्रबला प्रोक्ता वृषली लग्नतो बला ॥ अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ बृहस्पतिः ॥ झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः । अतिशोभनतान्दद्याद्विवाहोपनयादिषु ॥ शौनकः गुर्वादित्ये व्यतीपाते वक्रातीचारगे गुरौ । नष्टे शशिनि शुक्रे वा बाले वृद्धेऽथवा गुरौ ॥ पौषे चैत्रेऽथ वर्षासु शरद्यधिकमासके । केतूद्गमे निरंशेऽर्के सिंहस्थेऽमरमन्त्रिणि ॥ विवाहव्रतयात्रादि पुनर्हर्म्यगृहा-

दिकम्। चौरं विद्योपविद्यां च यत्नतः परिवर्जयेत्॥ तथा॥ सिंहस्थम्मकरस्थं च गुरुं यत्नेन वर्जयेत्॥ लल्लः॥ अतिचारगतो जीवस्तं राशिन्नैति चेत्पुनः। लुप्तसम्वत्सरो ज्ञेयः सर्वकर्मबहिष्कृतः॥ सिंहस्थगुरोरपवादो वशिष्ठेनोक्तः॥ विवाहो दक्षिणे कूले गौतम्या नेतरत्र तु। भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा॥ विवाहो व्रतबन्धश्च सिंहस्थेज्ये न दुष्यति॥ पराशरोऽपि॥ गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ। मघास्थे सर्वदेशेषु तथा मीनगते रवौ॥ सर्वत्र गुरुवलालाभे शौनकोक्ता शान्तिः कार्या॥ सा चास्माभिः प्रयोगे लेखनीया॥ अतिचारगे गुरौ तु वसिष्ठः॥ अतिचारगते जीवे वर्जयेत्तदनन्तरम्। विवाहादिषु कार्येषु अष्टाविंशतिवासरान्॥ रत्नमालायाम्॥ एकपञ्चनवयुग्मषड्दशत्रीणिसप्तचतुरष्टलाभदः। द्वादशाजवृषभादिराशितो घातचन्द्र इति कीर्तितो बुधैः॥ नारदः॥ भूबाणनवद्व्यस्ताश्च रसो दिग्वह्निशैलजाः। वेदा वसुशिवादित्या घातचन्द्रा यथाक्रमम्॥ यात्रायां शुभकार्येषु घातचन्द्रं विवर्जयेत्। विवाहे सर्वमाङ्गल्ये चौलादौ व्रतबन्धने॥ घातचन्द्रो नैव चिन्त्य इति पाराशरोऽब्रवीत्॥ ज्योतिर्निबन्धेऽप्युक्तम्॥ विवाहचौलव्रतबन्धयज्ञे महाभिषेके च तथैव राज्ञाम्। सीमन्तयात्रासु तथैव जाते नो चिन्तनीयः खलु घातचन्द्रः॥ अकालवृष्टौ नारदः॥ अकालजा भवेयुश्चेद् विद्युन्नीहारवृष्टयः। प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि॥ दोषाय मङ्गले नूनमदोषायैव कालजाः॥ अकालवृष्टिस्वरूपं च लल्लेनोक्तम् पौषादिचतुरो मासान्प्रोक्ता वृष्टिरकालजेति॥ निर्घाते क्षितिचलने ग्रहयुद्धे राहुदर्शने चैव। आपञ्चदिनात्कन्या परिणीता नाशमुपयाति॥ उल्कापातेन्द्रचापप्रबलघनरजोधूमनिर्घातविद्युद्वृष्टिप्रत्यर्कदोषादिषु सकलबुधैस्त्याज्यमेवैकरात्रम्। दुःस्वप्ने दुर्निमित्ते ह्यशुभतरदशे दुर्मनोभ्रान्तबुद्धौ चौले मौञ्जीनिबन्धे परिणयनविधौ सर्वदा त्याज्यमेव॥ ज्योतिःप्रकाशे॥ अर्वाक् षोडशनाड्यः सङ्क्रान्तेः पुण्यदाः परतः। उपनयनव्रतयात्रापरिणयनादौ विवर्ज्यास्ताः॥ गर्गः॥ दिग्दाहे दिनमेकं च ग्रहे सप्तदिनानि तु। भूकम्पे च समुत्पन्ने त्र्यहमेव तु वर्जयेत्॥ उल्कापाते त्रिदिवमन्धूमे पञ्च दिनानि च॥ वज्रपाते चैकदिनं वर्जयेत्सर्वकर्मसु॥ दर्शनादर्शनाद्राहुकेत्वोः सप्तदिनन्त्यजेत्। यावत्केतूद्गमस्तावदशुभः समयो भवेत्॥ अद्भुतसागरे॥ अस्यापवादः॥ अथ यदि दिवसत्रयमध्ये मृदुपानीयं यदा भवति। उत्पातदोषशमनन्तदैव शम्प्राहुराचार्याः। सम्बन्धतत्वे च॥ भूकम्पादेर्न दोषोऽस्ति वृद्धिश्राद्धे कृते सति॥ अथ प्रतिकू-

लादिः ॥ मेधातिथिः ॥ वधूवरार्थङ्कृतिते, सुनिश्चिते वरस्यगेहेऽप्यथ कन्यकायाः । मृत्युर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यङ्खलु मङ्गलं बुधैः ॥ मङ्गलम् विवाहः तथा गर्गः ॥ कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित् । तदा न मङ्गलङ्कुर्यात्कृते वैधव्यमाप्नुयात् ॥ स्मृतिचन्द्रिकायाम् ॥ कृते वाङ्नियमे पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः । तदा न मङ्गलङ्कार्यन्नारीवैधव्यदन्ध्रुवम् ॥ भृगुः ॥ वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः । तदोद्वाहो नैव कार्यः स्ववंशक्षयदो यतः ॥ शौनकः ॥ वरवध्वोः पिता माता पितृव्यश्च सहोदरः । एतेषाम्प्रतिकूलं हि महाविघ्नप्रदम्भवेत् ॥ पिता पितामहश्चैव माता चैव पितामही । पितृव्यः स्त्री सुतो भ्राता भगिनी चाविवाहिता ॥ एभिरत्र विपन्नैश्च प्रतिकूलम्बुधैः स्मृतम् । अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत् ॥ सङ्कटे मेधातिथिराह ॥ वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः । तदा सम्वत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥ स्मृतिरत्नावल्याम् ॥ पितुरब्दमशौचं स्यात्तदर्द्धम्मातुरेव च । मासत्रयन्तु भार्यायास्तदर्द्धम्भ्रातृपुत्रयोः ॥ अन्येषान्तु सपिण्डानामाशौचम्मासमीरितम् । तदन्ते शान्तिकङ्कृत्वा ततो लग्नं विधीयते ॥ ज्योतिः प्रकाशे ॥ प्रतिकूलेऽपि कर्तव्यो विवाहो मासतः परः । शान्तिं विधाय गान्दत्वा वाग्दानादि चरेत्पुनः ॥ शान्तिरत्ने विनायकशान्तिः ॥ तथा च मेधातिथिः ॥ सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिना । शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥ स्मृत्यन्तरे ॥ प्रतिकूले न कर्तव्यो गच्छेद्यावदृतुत्रयम् । प्रतिकूलेऽपि कर्तव्यमित्याहुर्बहुविप्लवे ॥ प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ॥ ज्योतिःसागरेऽपि ॥ दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये ॥ प्रौढायामपि कन्यायान्नानुकूल्यम्प्रतीक्ष्यते ॥ मेधातिथिः ॥ पुरुषत्रयपर्यन्तम्प्रतिकूलं स्वगोत्रिणाम् । प्रवेशनिर्गमस्तद्वत्तथा मुण्डनमण्डने ॥ प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् । आचतुर्थन्ततः पुंसि पञ्चमे शुभदम्भवेत् ॥ मासिकविषये ॥ शाट्यायनिः ॥ प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणन्तथा । अपकृष्यापि कुर्वीत कर्तुन्नान्दीमुखं द्विजः ॥ वृद्ध्यभावे अपकर्षे दोषमाहोशनाः ॥ वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् । स श्राद्धी नरके घोरे पितृभिः सह मज्जति इति ॥ स्मृत्यन्तरे ॥ सपिण्डीकरणादर्वागपकृष्य कृतान्यपि । पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥ विवाहदिनादारभ्य चतुर्थीपर्यन्तम्मध्ये श्राद्धदिनन्दर्शदिनञ्च नायाति तादृशः कालो ग्राह्यः ॥ तदुक्तं ज्योतिर्निबन्धे ॥ विवाहमारभ्य चतुर्थिमध्ये श्राद्धदिनन्दर्शदिनं यदि स्यात् । वैधव्यमाप्नोति तदाशु कन्या जीवेत्पतिश्चेदनपत्यता स्यात् ॥ तथा विवाहमध्ये यदि

चेत्तयाहस्तत्र स्वमुख्याः पितरो न यान्ति । वृत्ते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्नतु दूषयेत्तम् ॥ श्रुतावपि । ये वै भद्रन्दूषयन्ति स्वधाभिरिति ॥ **तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण** ॥ ब्राह्मणस्य वर्णानुपूर्व्येण वर्णक्रमेण ब्राह्मणी. क्षत्रिया वैश्येति तिस्रो भार्या भवन्ति ॥ वर्णानुपूर्व्यग्रहणात् न व्युत्क्रमेण विवाहः ॥ प्रथमा ब्राह्मणी । तत इतरे वर्णक्रमेण ॥ **द्वे राजन्यस्य** ॥ वर्णानुपूर्व्येण क्षत्रिया वैश्याचेति राजन्यस्य भार्ये भवतः ॥ **एका वैश्यस्य** ॥ सवर्णा एका वैश्यस्य भार्या भवति ॥ **सर्वेषाꣳ शूद्रामप्येकेमन्त्रवर्ज्जम्** ॥ सर्वेषां ब्राह्मणादीनां शूद्रामप्येके भार्यामिच्छन्ति तस्यास्तु मन्त्रवर्जं विवाहकर्म भवति ॥ एके पुनः शूद्रापरिणयनन्नेच्छन्ति ॥ न शूद्राया धर्मकार्येष्वधिकार इति ॥ तथा च यास्कः ॥ रामा रमणाय विन्दते न धर्मायेति अतः शूद्रापरिणयनं नेच्छन्ति रमणार्थमेव ॥ **अथैनां वासः परिधापयति जराङ्गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपा वा । शतं च जीवशरदः सुवर्चारयिं च पुत्राननुसंव्ययस्वायुष्मतीदम्परिधत्स्ववासः** ॥ अथ वरो जराङ्गच्छेति मन्त्रेणैनां वधूम्वासः परिधापयति ॥ भर्तृयज्ञमते तु आचार्यकर्तृकम्परिधापनम् ॥ अत्राचारादहतं वासो ग्राह्यम् ॥ अहतलक्षणङ्कश्यपेनोक्तम् ॥ अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयम्भुवा । शस्तन्तन्मङ्गले नूनन्तावत्कालन्न सर्वदेति ॥ मन्त्रार्थः ॥ हे कन्ये त्वं जरान्निर्दुष्टवृद्धत्वम्मया सह गच्छ प्राप्नुहि वासश्च मया सम्पादितम् परिधेहि ॥ आकृष्यन्ति कामादिभिरित्याकृष्टयो मनुष्याः तेषाम्मध्ये अभिशस्तिरभिशापः ॥ शमु प्रमादे तस्मात्पातीत्यभिशस्तिपा वा भव ॥ शतं च शरदो वर्षाणि जीव प्राणिहि । सुवर्चाः तेजस्विनी रयिञ्च धनम्पुत्रांश्च अनु पश्चात् संव्ययस्व अतिमुसम्वृणीष्व उत्पाद्य राशिङ्कुरु ॥ हे आयुष्मति इदं वासः परिधत्स्वेत्यनुवादः ॥ मन्त्र एवात्र कारितार्थे ॥ **अथोत्तरीयं या अकृन्तन्नवयं या अतन्वत याश्चदेवीस्तन्तूनभितो ततन्थ । तास्त्वादेवीर्जरसे संव्ययस्वायुष्मतीदम्परिधत्स्व वासः** ॥ या अकृन्तन्नित्यनेन मन्त्रेणोत्तरीयम्परिधापयति वर एव तदप्यहतमेव ॥ अत्रापि कारितार्थे मन्त्रः ॥ मन्त्रार्थः ॥ या देवीः देव्यः इदं वासः अकृन्तन् कर्त्तितवत्यः या अवयन् वीतवत्यः ॥ वेञ् तन्तुसन्ताने ॥ ओतवत्य इत्यर्थः ॥ यास्तन्तून् सूत्राणि अतन्वत प्रोतवत्यः तिर्यक् तन्तून् विस्तारितवत्य इत्यर्थः ॥ चकाराद्या ओतान्प्रोतांश्च तन्तूनभित उभयपार्श्वयोरपि ततन्थ तेनुः तुरीवेमादिव्यापारेण ग्रथितवत्यः ॥ ताः

तत्तत्सामर्थ्यदाच्यो देव्यः स्वकार्यरूपवदिदं वासः त्वा त्वां जरसे दीर्घकालनिर्दुष्टजीवनाय संव्ययस्व परिधापयन्तु ॥ पुरुषादिव्यत्ययश्छान्दसः अतो हेतोः आयुष्मति इदं एतादृशं वासः परिधत्स्व उत्तरीयत्वेन वृणीष्व ॥ अथैनौ समञ्जयति समञ्जन्तुविश्वेदेवाः समापोहृदयानिनौ । सम्मातरिश्वासन्धातासमुदेष्ट्रीदधातुनौ ॥ कन्यापिता परस्परं समञ्जेथामिति अध्येषणेनैनौ वधूवरौ समञ्जयति ॥ समञ्जनन्नाम सम्मुखीकरणं परस्परं गात्रविश्लेष इति भर्तृयज्ञः ॥ परस्परानुलेपनमिति केचित् ॥ सत्यपि कारितत्वे वरस्यैव मन्त्रो मन्त्रलिङ्गात् । कारयितत्वं च सन्निधानात् कन्यापितुः सन्निहितो ह्यसौ प्रदातृत्वात् । उभयोर्मन्त्रपाठ इति भर्तृयज्ञः ॥ मन्त्रार्थः ॥ हे कन्यके नौ आवयोः हृदयानि मनांसि तन्निष्ठव्यापारान् सङ्कल्पविकल्पात्मकान् विश्वेदेवाः आपश्च समञ्जन्तु गुणातिशयाधानेन संस्कुर्वन्तु ॥ तथा सम्यग्भूतो मातरिश्वा अनुकूलो वायुः तथा अनुकूलः प्रजापतिः देष्ट्री धर्मोपदेष्ट्री देवता आवयोर्हृदयानि सन्दधातु । उ अप्यर्थे ॥ पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति यदैषिमनसा दूरन्दिशोनुपवमानो वा हिरण्यपर्णो वैकर्णः सत्वामन्मनसाङ्करोत्वित्यसाविति ॥ समञ्जनोक्तरङ्कन्यायाः । पित्रा दत्ताङ्कन्यामादाय वरः प्रतिग्रहविधिना प्रतिगृह्य वस्त्रान्ते गृहीत्वा यदैषि मनसादूरमित्यनेन मन्त्रेण निष्क्रामति गृहमध्याद्बहिःशालायां स्थापितमग्निम्प्रतिगच्छति ॥ असावित्यत्र सम्बुद्ध्यन्तङ्कन्यानामग्रहणम् ॥ अत्र कर्कभाष्यम् ॥ आदाय गृहीत्वेति चोभयन्न वक्तव्यम् ॥ उच्यते च तत्किमर्थमप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथास्यादिति ॥ अयमर्थः ॥ अप्रतिग्रहस्यापि कन्याद्रव्यस्य प्रतिग्रहविधिना आदानम्प्रतिग्रहो यथा स्यादित्येतदर्थमुभयग्रहणम् ॥ ननु कन्यान्ददात्कन्याम्प्रतिगृह्णेति स्मरणात् ॥ कथमप्रतिग्रहयोग्यङ्कन्याद्रव्यमित्युच्यते ॥ सत्यम् ॥ उच्यते स्वत्वत्यागपूर्वकं हि परस्वत्वापादानन्दानम् ॥ नच कन्या कथञ्चिदप्यस्वकन्या कर्तुं शक्यते नापि परस्य कन्या भवति विवाहोत्तरमपि ममेयङ्कन्येत्यभिधानादत्र गौणो ददातिः । यत्तु स्मृतिषु पुत्रदानं चोद्यते तत्रापि गौणो ददातिः । पितुरिव परस्यापि पिण्डदानं रिक्थभाक्त्वं च भवतीत्यर्थः ॥ षष्ठाध्यायस्य सप्तमे पादे अद्याधिकरणे अयमर्थस्तन्त्ररत्ने ॥ यद्वा अप्रतिग्रहयोग्यस्य प्रतिग्रहविधानतः ॥ क्षत्रियादेर्यथादानं स्यादादायेति सूत्रितमिति रेणुः ॥ मन्त्रार्थः ॥ हे कन्यके यत् एषि गच्छसि मनसा चित्तेन दूरन्दूरदेशं दिशः ककुभः अनुलक्ष्यीकृत्य पवमान इव वायुवत् चित्तस्य वायुवच्चञ्चलत्वात् ।

ततः पवमानो वायुः हिरण्यपर्णः सुवर्णपक्षः विकर्णापत्यं गरुत्मान् त्वा त्वां मन्मनसां मद्गतचित्तां करोतु । ममायत्तां मय्यनुरागिणीं विदधातु ॥ दातृक्रममाह याज्ञवल्क्यः ॥ पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ । गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरमिति ॥ सकुल्यः प्रत्यासत्तिक्रमेणादौ पितृकुलस्थस्तदभावे मातामहकुलस्थः सर्वाभावे जननी इति प्रयोगरत्ने ॥ प्रकृतिस्थ उन्माददोषरहितः । गम्यङ्गमनार्हं लावण्यादिगुणयुक्तम् ॥ नारदोऽपि ॥ पिता दद्यात्स्वयङ्कन्यां भ्राता वाऽनुमते पितुः । मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥ माता त्वभावे सर्वेषाम्प्रकृतौ यदि वर्त्तते । तस्यामप्रकृतिस्थायाङ्कन्यान्दद्युः स्वजातयः ॥ यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् ॥ अत्र प्रकृतिस्थग्रहणादप्रकृतिस्थेन यत्कृतन्तदकृतमेव । तथाचापरार्के नारदवचनम् ॥ स्वतन्त्रो यदि तत्कार्यङ्कुर्यादप्रकृतिङ्गतः । तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुत इति ॥ यदि तु सप्तपदीविवाहहोमादि प्रधानं जातन्तदाऽङ्गवैकल्येऽपि नावृत्तिर्विवाहस्येति दाक्षिणात्यगौडग्रन्थेषु ॥ विवाहश्च कन्यास्वीकारोऽन्यदङ्गमिति स्मृत्यर्थसारे ॥ अथैनौ समीक्षयत्यघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः।वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः।सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये । रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर । यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्या इति ॥ अथ निष्क्रमणोत्तरङ्कारितोपदेशात् कन्यापिता परस्परं समञ्जेथामित्यध्येषणेन समीक्षणङ्कारयति ॥ ततस्तौ वधूवरौ परस्परं समीक्षणङ्कुरुतः । लिङ्गाद्वरः समीक्षमाणाङ्कन्यां समीक्षमाण अघोरचक्षुरित्येतांश्चतुरो मन्त्रान्पठति ॥ मन्त्रार्थः ॥ हे कन्ये त्वम् अघोरचक्षुः सौम्यदृष्टिरपापदृष्टिर्वा एधि भव । तथा अपतिघ्नी अकार्यकरणेन पत्यर्थघातिनी तथा मा भव । तथा पशुभ्यः पशुवदाश्रितेभ्यः शिवा हितैषिणी च भव सुमनाः प्रसन्नचित्ता सुवर्चाः सुप्रभावयुक्ता वीरसूः सत्पुत्रजननी देवकामा देवानग्न्यादीन् कामयते स्योना सुखवती नोऽस्माकं शं सुखहेतुः द्विपदे मनुष्यवर्गाय चतुष्पदे पशुवर्गाय शं सुखहेतुर्भव ॥ १ ॥ हे कन्ये ते त्वां सोमश्चन्द्रः ते तव प्रथम आद्यः पतिः विविदे जन्म-

दिने लब्धवान् ॥ विद्लृ लाभे ॥ ततः सार्द्धवर्षद्वयानन्तरङ्गन्धर्वः सूर्यो विविदे उत्तरः तद्वद् द्वितीयोऽयम्पतिः । ततोऽग्निरपि तावता कालेन विविदे । अतोऽयन्तव तृतीयः पतिः । यथाऽऽहुः । पूर्वं स्त्रियः स्युर्भुक्ताश्च सोमगन्धर्ववह्निभिरिति । तथा ते तव तुरीयश्चतुर्थः मनुष्यजाः मानुषः अहमेवेत्यर्थः ॥ २ ॥ किमिदानीं चतुर्णाम-पीयम्पत्नी नेत्याह ॥ सोमश्चन्द्रस्त्रिंशन्मासान्भुक्त्वा गन्धर्वः सूर्यस्तस्मै अददद्ददौ सोऽपि तावत्कालम्भुक्त्वा अग्नयेऽददत् स चाग्निर्मह्यमिमामदात् दत्तवान् । न केव-लमिमाङ्किन्तु पुत्रान् सुतान् रयिं धनं च । चकाराद्धर्मादि च. अदादिति सम्बन्धः ॥ या सर्वलोकसाक्षिणी पूषा देवता सा इमां शिवतमां कल्याणगुणशीलाङ्कृत्वा नोऽ-स्मान्प्रति एरय ईरयतु । आटोऽदर्शनं विभक्तेरदर्शनञ्च छान्दसम् । अस्मास्वनुरक्ता-ङ्करोत्वित्यर्थः ॥ साचास्मत्तः सुखम्पुत्रांश्च कामयमाना ऊरू सक्थिनी जानुनोरू-र्ध्वभागदण्डौ विहरताम् विवृणोतु प्रसारयत्वित्यर्थः । मध्यमपुरुषश्छान्दसः । प्रयो-जनमाह । यस्यां स्त्रीयोनौ उशन्तः सुखमिच्छन्तः शेपं शिश्नम्प्रहराम प्रवेशयाम वयम्, यस्याङ्कन्यायाम् उ एवार्थे ॥ यस्यामेव बहवः कामाः धर्मपुत्ररतिसुखरूपाः सन्तु वा ॥ किमर्थम्, निविष्ट्यै अग्निहोत्राद्युपासनयाऽन्तःकरणशुद्धिद्वारा सायुज्यमु-क्तये ॥ ॥ ४ ॥ इति श्री त्रिरग्निचित्सम्राट् स्थपति श्रीमहायाज्ञिकवामना-त्मजदीक्षितगदाधरकृते गृह्यभाष्ये प्रथमकाण्डे चतुर्थी कण्डिका ॥ ॥ ४ ॥ * ॥

मूलम् ॥ प्रदक्षिणमग्निम्पर्याणीयैके ॥ १ ॥ पश्चादग्नेस्तेजनीङ्कटं वा दक्षिणपादेन प्रवृत्योपविशति ॥ २ ॥ अन्वारब्ध आघारा-वाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तम्प्राजापत्यꣳ स्विष्ट-कृच्च ॥ ३ ॥ एतन्नित्यꣳ सर्वत्र ॥ ४ ॥ प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः ॥ ५ ॥ सर्व*प्रायश्चित्तप्राजापत्या-न्तरमेतदावापस्थानं विवाहे ॥ ६ ॥ राष्ट्रभृत इच्छञ्जयाभ्याता-नाꣳश्च जानन् ॥ ७ ॥ येन †कर्मणेर्त्सेदितिवचनात् ॥ ८ ॥ चित्तञ्च चित्तिश्चाकूतं चाकूतिश्च विज्ञातञ्च विज्ञातिश्च मनश्च शक्वरीश्च दर्शश्च पौर्णमासञ्च बृहच्च रथन्तरं च । प्रजापतिर्जया-निन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु । तस्मै विशः सम-नमन्त सर्वाः स उग्रः स इहव्यो बभूव स्वाहेति ॥ ९ ॥ अग्नि-

* सर्वप्रायश्चित्तम् पा० । † कर्मणेर्त्सेदिति कर्मणेर्त्सेदिति च पाठान्तरम् ।

भूतानामधिपतिः समावत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायु-
रन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः
सत्यानां वरुणोऽपाᳪं समुद्रः स्रोत्यानामन्नꣳ साम्राज्यानाम-
धिपति तन्मावतु सोम ओषधीनाᳪं सविता प्रसवानाᳪं रुद्रः
पशूनान्त्वष्टा रूपाणां विष्णुः पर्वतानाम्मरुतो गणानामधिप-
तयस्ते मावन्तु पितरः पितामहाः परेवरे ततास्ततामहाः ।
इह मावन्त्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरो-
धायामस्मिन्कर्मण्यस्यां देवहूत्याᳪं स्वाहेति सर्वत्रानुष-
जति ॥ १० ॥ अग्निरैतु प्रथमो देवतानाᳪं सोऽस्यै प्रजाम्मुञ्चतु
मृत्युपाशात् । तदयꣳ राजा वरुणोऽनुमन्यतां यथेयᳪं स्त्री
पौत्रमघन्नरोदात्स्वाहा । इमामग्निस्त्रायताङ्गार्हपत्यः प्रजामस्यै
नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमा-
नन्दमभिविबुध्यतामियᳪं स्वाहा । स्वस्तिनो अग्ने दिव आपृ-
थिव्या विश्वानिधेह्ययथा यजत्र । यदस्यां महिदिवि जातम्प्र-
शस्तन्तदस्मासु द्रविणन्धेहि चित्रᳪं स्वाहा । *सुगन्नु पन्थाम्प्रदि-
शन्नऽएहि ज्योतिष्मध्ये ह्यजरन्नऽआयुः । अपैतु मृत्युरमृतन्न
आगाद्वैवस्वतो नोऽअभयङ् कृणोतु स्वाहेति ॥ ११ ॥ परम्मृ-
त्यविति चैके प्राशनान्ते ॥ ॥ १२ ॥ ॥ ५ ॥ ॥ * ॥

कर्कः ॥ †प्रदक्षिणमग्निम्पर्याणीयैके ॥ एके आचार्याः प्रदक्षिणमग्निमा-
नीय कन्यावासःपरिधानादि कुर्वन्ति ॥ एवमपि हि स्मरणमिति ॥ अतश्च
विकल्पः । पश्चादग्नेस्तेजनीङ्कटं वा दक्षिणपादेन प्रवृत्त्योपविशति ॥
कटः प्रसिद्ध एव । तेजनी तृणपुलकः । तयोरन्यतरन्दक्षिणपादेन परिक्रम्योपवि-
शति ॥ अत्रोपकल्पनीयानि । शमीपलाशमिश्रा लाजाः रोहितानडुहञ्चर्म दृषदुप-
लञ्च उदकुम्भः शूर्पञ्च ॥ अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्व-
प्रायश्चित्तम्प्राजापत्यᳪं स्विष्टकृच्चैतन्नित्यꣳ सर्वत्र ॥ आघारौ पूर्व उत्तरश्च ।

* सुगव: । † म्म-इति पाठान्तरम् । ‡ इतरथाऽग्नेर्नानुवर्त्यम् ।

उत्तराघारे प्रतिनिगद्य होमत्वम् । नह्यत्र मन्त्रोऽस्ति । आज्यभागौ एक आग्नेयः अपरः सौम्यः । भूर्भुवः स्वरित्येता महाव्याहृतयः । त्वन्नोऽअग्ने इति चैवमादि सर्वप्रायश्चित्तम् । प्राजापत्यं प्रजापतिदेवत्यो होमः । स्विष्टकृत् । अग्नये स्विष्टकृते स्वाहेति वक्ष्यत्युपरिष्टात् । एतच्चतुर्दशाहुतिकन्नित्यं सर्वकर्मसु भवति । यत्र यत्र होमोऽस्ति । यथा घृताक्तानि कुशेण्डानि जुहुयादिति । यत्र पुनर्होम एव नास्ति । यथा स्रस्तरारोहणे लाङ्गलयोजने च तत्रैतन्न भवति । प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः ॥ यत्राज्यव्यतिरिक्तमन्यदपि हविर्भवति तत्र महाव्याहृतिहोमात्प्राक् स्विष्टकृद्धोमः । यथा पक्वादाविति ॥ सर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानं विवाहे ॥ आगन्तुकत्वादन्ते निवेशो माभूदिति सूत्रमारब्धम् ॥ राष्ट्रभृत इच्छन् ॥ विवाह एव जुहोति ॥ जयाभ्यातानाँश्च जानन् ॥ चित्तञ्च चित्तिश्चेत्येवमादि प्रजापतिर्जयानिन्द्रायेत्येवमन्ता जयाः मन्त्रलिङ्गात् ॥ शेषा अभ्याताना मन्त्राः ॥ एतांश्च इच्छन्नेव जुहोति ॥ जानन्शब्दो विकल्पार्थः । च शब्दो राष्ट्रभृद्भिः सन्नियोगार्थः । चित्तञ्च चित्तिश्चेत्यत्र केचिच्चतुर्थ्यन्तेन प्रयोगमिच्छन्ति ॥ तदयुक्तम् । नह्येतानि देवतापदानि किन्तर्हि मन्त्रा एव ॥ मन्त्राणाञ्च यथाऽऽम्नातानामेव प्रयोग इष्यते इति । जयाभ्यातानांश्चेच्छया जुहोतीति कुत एतत् ॥ येन कर्मणेर्त्सेदिति वचनात् ॥ येन कर्मणा ऋद्धिमिच्छेत्तत्र जयान् जुहोतीति वचनं भवति । अतश्चान्यत्रापि ऋद्धिमिच्छता जयाहोमः कर्तव्य इति गम्यते ॥ अग्निर्भूतानामित्येवमादिष्वधिपतिः समावत्विति सर्वत्रानुषङ्गः । एवमेव स्मर्यत इति । एवञ्च सति अन्नꣳ साम्राज्यानाम्मरुतो गणानामिति च विशेषेणैव पाठः पितरः पितामहा इत्येवमादि परं मृत्यवितिचैक इति यावत्सूत्रम् । एतैश्च मन्त्रैर्होमः कर्तव्य इति । एके प्राशनान्ते परम्मृत्यविति जुह्वति । एवमपि हि स्मर्यत इति ॥ ॥ * ॥ ॥ ५ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ प्रदक्षिणमग्निम् ॥ अग्निं प्रदक्षिणं कृत्वा ऽऽनीय कन्यावासःपरिधापनादि कुर्वन्त्येक आचार्याः एके नेति विकल्पः ॥ अग्नेः पश्चात्तेजनीं तृणपुलकम् कटं वा प्रसिद्धम् तयोरन्यतरं दक्षिणपादेन प्रवृत्य आक्रम्य तदुपरि पादं कृत्वेति यावत् उपविशति वरः अन्वारब्धो ब्रह्मणा संस्पृष्टः । आघारौ पूर्वोत्तरौ उत्तराघारे प्रतिनिगद्य होमत्वम्, नह्यत्र मन्त्रोऽस्ति । आज्यभागौ आग्नेयसौम्यौ महाव्याहृतयस्तिस्रो भूर्भुवः स्वरिति । त्वन्नो अग्न इत्यादिमन्त्रपञ्चकं सर्वप्राय-

श्चित्तं प्राजापत्यं प्रजापतिदेवत्यो होमः॥ स्विष्टकृत् । अग्नये स्विष्टकृते स्वाहे-त्युपरिष्टाद्वक्ष्यति ॥ एतच्चतुर्दशाहुतिकं नित्यं सर्वकर्मसु भवति ॥ यत्र यत्र होमो-ऽस्ति । यथा घृताक्तानि कुशेण्ड्वानि जुहुयादिति ॥ यत्र पुनः स्रस्तरारोहणलाङ्ग-लयोजनादौ होमो नास्ति तत्रैतन्न भवति ॥ प्राङ्महाव्याहृतिभ्य इति । यत्राज्य-व्यतिरिक्तमन्यद्धविर्भवति पत्नादाविव तत्र महाव्याहृतिहोमात्प्राक् स्विष्टकृद्धोमः अन्यत्र सर्वाहुत्यन्ते । सर्वप्रायश्चित्तेति सूत्रारम्भो राष्ट्रभृदादिनामागन्तुकत्वादन्ते निवेशो मा भूदिति तेन सर्वप्रायश्चित्तं त्वन्नो अग्ने इत्यादिमन्त्रपञ्चकं प्राजापत्य-न्तहोमः ॥ तयोरन्तरं मध्यं वक्ष्यमाणहोमस्य स्थानं विवाहे एव दर्शितम् । राष्ट्र-भृतः ऋताषाडित्यादि द्वादश मन्त्रानिच्छन्नपि विवाहे एव जुहोति । जयाभ्याता-नांश्च मन्त्रलिङ्गाश्चित्तञ्चचित्तिश्चेत्यादि प्रजापतिर्जयानिन्द्रायेत्येव मन्त्रा जया-मन्त्राः । शेषा अग्निर्भूतानामित्यादयोऽभ्यातानसञ्ज्ञाः तेच. तेच तांश्चेच्छन्नपि विवाहे एव जुहोति । जानन् शब्दो विकल्पार्थः । च शब्दो राष्ट्रभृद्भिः सन्नियोगार्थः जयाभ्यातानान् स्वेच्छया जुहोतीति । कुतः येन कर्मणा ईर्त्सेत् ऋद्धिमिच्छेत्तत्र जयान् जुहुयादिति वचनमस्ति । ततश्चान्यत्रापि ऋद्धिमिच्छता जयाहोमः कार्य इति गम्यते ॥ चित्तञ्चेति ॥ अत्र केचिच्चतुर्थ्यन्तेन प्रयोगमिच्छन्ति तदयुक्तम् नह्येतानि देवतापदानि किन्तु मन्त्रा एव मन्त्राणां च यथाम्नातानामेव प्रयोग इष्यते इति । स्वाहाकारस्त्वन्ते भवत्येव । स्वाहाकार प्रदाना इति श्रुतेः । त्यागेतु भवत्येव चतुर्थ्यन्तम् अमन्त्रत्वात्त्यागस्य ॥ अथ मन्त्रार्थः ॥ चित्तमि-त्यादिद्वादशमन्त्राणां परमेष्ठी० यजुः० लिङ्गोक्ता जयाहोमे ॥ चित्तञ्चेति प्रजापति-र्यथेन्द्राय जयान् प्रायच्छत् । चकारोऽप्यर्थः । तथाचित्तादि च मह्यमपि प्रयच्छ-त्विति क्रियां विपरिणमय्योत्तरत्र सम्बन्धः ॥ तस्मै च मुहुतमस्तु ॥ तत्र चित्तं ज्ञानाधारं हृदयम् । चित्तिस्तत्रत्या चेतना आकूतञ्चाभिमतम् आकूतिश्चाभिमानः यद्वा चित्तं ज्ञानेन्द्रियम् जातावेकवचनम् चित्तिस्तद्देवता आकूतङ्कर्मेन्द्रियम् आकू-तिस्तद्देवता । विज्ञातं शिल्पादिज्ञानम् विज्ञातिमपरोक्षम् । मनः प्रसिद्धम् शक्करीः शक्कर्यः तच्छक्तयः । दर्शपूर्णमासौ तद्देवते बृहद्रथन्तरे सामनी तद्देवते वा । प्रथम-मन्त्रोक्तवाक्यार्थः सर्वत्र सम्बध्यते ॥ प्रजापतिरिति परमेष्ठी० त्रिष्टुप्० इन्द्रो० जयाहोमे० । प्रजापतिः परमेश्वरः । जयतिशत्रूनिति जयान् मन्त्रानिन्द्राय प्रायच्छ-द्ददौ किमर्थम् वृष्णे अभिमतार्थवर्षणाय । इन्द्रविशेषणम्वा ॥ ततः स इन्द्रः पृत-

त्ताजयेषु सेनाविजयाख्यकर्मसु उग्रः प्रचण्डो बभूव ॥ किञ्च ततस्तस्मै इन्द्राय सर्वाविशः प्रजाः समनमन्त सम्यक् नेमुः ॥ स इ इवार्थे सचेन्द्रो हव्यः हवनीय इज्य इति यावत् बभूव । स्वाहा । तस्मै सुहुतमस्तु ॥ तथा च तैत्तिरीया श्रुतिः ॥ स इन्द्रः प्रजापतिमुपाधावत्स तस्मा एतान् जयान् प्रायच्छत् तान् अजुहोत् ततो देवा असुरान् अजयन्त यदजयस्तज्जयानां जयत्वमिति ॥ अग्निर्भूतानामिति ॥ एवमादिष्वधिपतिः समावत्विति सर्वत्रानुषङ्गः । अस्मिन्ब्रह्मन्नित्यादेश्च एवमेव स्मर्यत इति एवं च सत्यन्नꣳ साम्राज्यानामधिपति मरुतोगणानामधिपतय इति च ॥ विशेषणैरेव पाठः । अग्निर्भूतानामित्यष्टादश मन्त्रा अभ्यातानसञ्ज्ञाः ॥ तथा च श्रुतिः ॥ यद्देवा अभ्यातानैरसुरान् अभ्यातन्वत तदभ्यातानानामभ्यातानत्व-मिति ॥ अभ्यातन्वत आयुधानि प्राहिण्वत ॥ अथ मन्त्रार्थः ॥ तत्राग्निरित्यष्टाद-शानां प्रजापतिः ॥ पङ्क्तिर्लिङ्गोक्ता अभ्यातानहोमे ॥ अग्निः प्रजापतिः भूतानां स्थावरादीनामधिपतिरीशः स मा माम् अवतु पातु क्क अस्मिन् ब्रह्मन् ब्रह्मणि लुप्तसप्तम्यन्तं ह्येतत् । अस्मिन्ब्रह्मकर्मणि होमादौ पुनरस्मिन्क्षत्रे क्षत्रकर्मणि प्रजा-पालनादौ पुनरस्यामाशिषि ब्राह्मणैः सम्पादितेऽष्टा शंसने ॥ पुत्रादिसुखं काम-नायां वा कुत्र अस्यां कन्यायाम् किम्भूतायाम् पुरोधायां पुरस्थितायाम् । अस्मिन्कर्मणि विवाहे अस्यां देवहूत्याम् देवताह्वाने देवतोद्देशेन होमे वा स्वाहा सुहुतमस्तु ॥ अयञ्च वाक्यार्थ उपरिष्टादपि सप्तदशसु सम्बध्यते शिष्टं स्पष्टम् ॥ ततो अग्निरैत्वित्यादि परम्मृत्यवित्यन्तैश्च मन्त्रैर्होमः कार्यः ॥ अथ मन्त्रार्थः । तत्र चतुर्णाम्प्रजापतिस्त्रिष्टुप् लिङ्गोक्ता आज्यहोमे ॥ अग्निः एतु आ एतु आगच्छतु । किम्भूतः देवतानां यज्ञभुजाम् प्रथम आद्यः प्रधानत्वात् । सचाग्निः अस्यै अस्याः कन्यायाः प्रजाम् भाविपुत्रादिरूपां मुञ्चतु मोचयतु कुतः मृत्युपाशात् यद्वा मृत्युपाशान् अत्ति भस्मीकरोतीति मृत्युपाशात् । अस्यै कन्यायै प्रजाम् मुञ्चतु ददातु । तच्च प्रजामोचनम् राजावरुणोऽनुमन्यताम् अनुजानातु । यथा येनानुज्ञा-नेन प्रकारेण च इयङ्कन्या पौत्रम्पुत्रभवम् अघन्दुःखन्नरोदात् नरोदिति ॥ अस्यै अस्याः प्रजाः दीर्घमायुः निर्दुष्टबहुकालजीवनन्नयतु प्रापयतु । इयञ्च अशून्योपस्था सफलप्रसवा अवन्ध्यात्वायेति यावत् अवन्ध्योत्सङ्गा वा अस्तु भवतु ॥ जीवता-मेव दीर्घायुषाम् माता चास्तु जीवपुत्राभवत्वित्यर्थः ॥ किञ्च पौत्रम् पुत्रसम्बन्ध-जम् आनन्दं सुखसन्दोहम् अभि अधिगम्य आभिमुख्येन सर्वभावेन वा प्राप्य विविधं बुध्यताम् जानातु सर्वज्ञाऽस्त्वित्यर्थः ॥ यद्वा पौत्रमानन्दं प्राप्य विशिष्टतया

बुध्यताम् निद्रासुखापेक्षान्त्यक्त्वा जागर्त्विति ॥ हे अग्ने यजन्तन्त्वायत इति हे यजत्र। यस्मात्त्वं सर्वप्रत्यक् अतो नोऽस्माकं विश्वानि सर्वाणि कर्माणि अयथा अन्यथा वा कृतानि प्रतिषिद्धत्वेन प्रतिकूलानि वा तानि स्वस्ति यथास्यात्तथा धेहि अनुकूलानि कृत्वा स्थापय किञ्च दिव आस्वर्गमभिव्याप्य आपृथिव्याः पृथिवीमभिव्याप्य च यन्महि महिमा तमस्मासु धेहि स्थापय। किञ्च अस्याम्पृथिव्यां जातं यत् द्रविणं वसु चित्रन्नानारूपं स्वर्णरत्नादिभेदेन प्रशस्तम्पवित्रं यच्च दिवि स्वर्गे अमृतादि तदप्यस्मासु धेहि हे अग्ने नोऽस्मान् एहि आगच्छ अस्मद्गृहानागत्य नोऽस्माकं सुगम्पन्थाम्पन्थानम् अर्चिरादिमार्गम्प्रदिशन् उपदिशन् सम्पादयन्नितियावत् । आयुः निर्दुष्टजीवनन्धेहि देहि किम्भूतम् अजरम् जरारोगादिपराभवरहितम् अजरम् इत्यग्निविशेषणम्वा आयुः पुष्यन्नित्यर्थः । पुनः किम्भूतम् ज्योतिष्मत् प्रकाशकम् ऊर्जस्करमित्यर्थः ॥ तत्प्रतिबन्धको मृत्युरपि नोऽस्माकं भवत्प्रसादादपैतु अपगच्छतु अमृतम् आनन्दं च नोऽस्मान् आगात् आगच्छतु वैवस्वतोयमश्च नोऽस्माकम् अभयं त्वत्सम्बन्धेन पापाभावाद्दुःखहेतुभयाभावं कृणोतु करोतु परम्मृत्यविति च जुहोति। एके परंमृत्यविति प्राशनान्ते जुह्वति तेन विकल्पः । तत्र सङ्कुसुकस्त्रिष्टुप् मृत्युराज्यहोमे विनियोगः ॥ ५ ॥ ॥ * ॥

हरिहरः ॥ प्रदक्षिणमग्निम्पर्याणीयैके ॥ एके आचार्याः अग्नेः प्रदक्षिणङ्कारयित्वा वासःपरिधानं समञ्जनं समीक्षणञ्च मन्यन्ते एके न मन्यन्ते ततो विकल्पः ॥ **पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्योपविशति ॥** समीक्षणानन्तरमग्निम्प्रदक्षिणीकृत्याग्नेः पश्चिमतः प्राङ्मुख उपविशति दक्षिणतो वरस्य वधूः किङ्कृत्वा दक्षिणपादेन तेजनीन्तृणपूलिकाङ्कटं वा तृणमयं स्रस्तरं प्रवृत्य प्रक्रम्य उल्लङ्घ्येत्यर्थः । दक्षिणपादेनोल्लङ्घयन् चलन् चलित्वा उभयोः संस्कार्यत्वात्सवधूकः ॥ **अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तम्प्राजापत्यꣳ स्विष्टकृच्चैतन्नित्यꣳ सर्वत्र ॥** अत्र वैवाहिकहोमप्रसङ्गेन सर्वकर्मसाधारणीम्परिभाषाङ्करोत्याचार्यः । तद्यथा ब्रह्मणा दक्षिणबाहौ दक्षिणहस्तेन अन्वारब्धे कर्तरि आघारसञ्ज्ञके आज्याहुती यथा मनसा प्रजापतये स्वाहा इदम्प्रजापतये मनसा त्यागमर्थ्य इन्द्राय स्वाहा इदमिन्द्राय । आज्यभागौ आज्यभागसञ्ज्ञकौ होमौ यथा अग्नये स्वाहा इदमग्नये सोमाय स्वाहा इदं सोमाय । महाव्याहृतयः भूराद्यास्तिस्रः यथा। ॐ भूः स्वाहा इदमग्न० । इदं भूर्वा इति त्यागः तथैव ॐ भुवः स्वाहा इदं

वाय० इदं भुव इति वा ॐ स्वः स्वाहा इदं सूर्याय इदं स्वरिति वा । सर्वप्रायश्चित्तसञ्ज्ञकाः पञ्चाहुतयः ॥ यथा त्वन्नो अग्न इत्यादि प्रमुमुग्ध्यस्मत्स्वाहा । सत्वन्नो अग्ने० मुहयो न एधि स्वाहा इदमग्नीवरुणाभ्यां० । द्वाभ्यान्त्यागः । अयाश्चाग्ने स्यनभिशस्तिपाश्च सत्यमित्वमया असि । अयानोयज्ञं वहास्ययानोधेहि भेषजꣳ स्वाहा इदमग्नये अयसे० । येते शतम्वरुणये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्न्नो अद्यसवितोऽतविष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ उदुत्तममित्यादि अदितये स्याग स्वाहा इदं वरुणाय० प्राजापत्यं प्रजापतिदेवताको होमः यथा प्रजापतये स्वाहा इदम्प्रजापतये० ॥ स्विष्टकृच्च स्विष्टकृद्धोमः यथा अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृ० चकारः सर्वसमुच्चयार्थः ॥ एतन्नित्यꣳ सर्वत्र ॥ एतदाघारादिस्विष्टकृदवसानं सर्वत्र सर्वेषु होमात्मकेषु कर्मसु नित्यम् यत्र होमाभावस्तत्र नास्ति ॥ यथा स्तरारोहणलाङ्गलयोजनपायसब्राह्मणभोजनेषु ॥ अन्ते विहितस्य स्विष्टकृद्धोमस्य कर्मविशेषे स्थानान्तरमाह ॥ प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः ॥ महाव्याहृतिभ्यः प्राक् पूर्वं स्विष्टकृद्धोमो भवति चेद्यदि आज्यात्सकाशादन्यदपि चरुप्रभृतिहविर्भवति । केवलाज्ययागे सर्वाहुतिशेषे भवति ॥ सर्वप्रायश्चित्तं प्राजापत्यान्तरमेतदावापस्थानं विवाहे ॥ सर्वप्रायश्चित्तन्त्वन्नो अग्न इत्यारभ्य उदुत्तममित्यन्तमाहुतिपञ्चकम् । प्राजापत्यः प्राजापत्याहुतिः सर्वप्रायश्चित्तञ्च प्राजापत्यश्च सर्वप्रायश्चित्तप्राजापत्यौ तयोरन्तरम् सर्वप्रायश्चित्तप्राजापत्यान्तरम् एतदावापस्थानम् कस्मिन्कर्मणि विवाहे । आवापस्थानम् आवापश्चान्यत्र विहितस्य होमजपादेः कर्मणः कर्मान्तरप्रक्षेपः । आवापस्य आगन्तुकत्वेन अन्ते निवेशो युक्तः न्यायात् तन्निवृत्त्यर्थन्तमेवाह ॥ राष्ट्रभृतइच्छन् ॥ विवाहे वैवाहिके होमकर्मणि राष्ट्रभृतः राष्ट्रभृत्सञ्ज्ञकाः आहुतीः आवपेदित्यध्याहारः ॥ जयाभ्यातानाँश्च ॥ जयाश्च अभ्यातानाश्च जयाभ्यातानाः तान् जयाभ्यातानाँश्च आवपेत् । किङ्कुर्वन् इच्छन् राष्ट्रभृज्जयाभ्यातानानां होमफलं कामयन् किम्प्रमाणमिति चेत् ॥ जानन्येन कर्मणेर्त्सेदिति वचनात् ॥ येन कर्मणा अस्मिन्कर्मणि आप्य तेन यत्फलं भवतीति जानन् विदन् तत्कर्मफलमिच्छन्तस्मिन् कर्मणि तत्कर्म आवपेदिति वचनात् श्रुतेरित्यर्थः ॥ तत्र राष्ट्रभृतो यथा ॥ ऋताषाड् ऋतधामाग्निर्गन्धर्व इत्यादिका द्वादश मन्त्रा राष्ट्रभृत्सञ्ज्ञकाः ॥ चित्तञ्च चित्तिश्चा-

कूतञ्चाकूतिश्च विज्ञातञ्च विज्ञातिश्च मनश्च शक्करीश्च दर्शश्च पौर्णमासञ्च बृहच्च रथन्तरञ्च प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु । तस्मै विशः समनमन्तसर्वाः स उग्रः स इ हव्यो बभूव स्वाहा ॥ .चित्तञ्चेत्येवमादीनाम्पदानाञ्चतुर्थ्यन्तानाङ्केचिदिच्छन्ति तदसाम्प्रतम् । कुतः नह्येतानि देवतापदानि किन्तु मन्त्रा एवैते मन्त्राश्च यथाऽऽम्नाता एव प्रयुज्यन्ते ॥ अग्निर्भूतानामधिपतिः समावत्विन्द्रो ज्येष्ठानां यमः पृथिव्यावायुरन्तरिक्षस्य सूर्योदिवश्चन्द्रमानक्षत्राणाम्बृहस्पतिर्ब्रह्मणोमित्रः सत्यानां वरुणो ऽपाᳬ समुद्रः स्रोत्यानामन्नᳬ साम्राज्यानामधिपतितन्मावतु सोमश्रोषधीनाᳬ सविता प्रसवानाᳬ रुद्रः पशूनान्त्वष्टारूपाणां विष्णुः पर्वतानाम्मरुतो गणानामधिपतयस्तेमावन्तु पितरः पितामहाः परेवरेततास्ततामहाः इह मावन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यान्देवहूत्याᳬ स्वाहेति ॥ अभ्यातानसञ्ज्ञका ह्येते अष्टादश मन्त्राः ॥ सर्वत्रानुषजति ॥ अग्निर्भूतानामित्यादिषु पितरः पितामहा इत्यन्तेष्वष्टादशसु मन्त्रेषु प्रतिमन्त्रं यथा लिङ्गं यथा वचनं समावत्वित्यादि देवहूत्याᳬ स्वाहेत्यन्तं वाक्यैकदेशमनुषजति संयुनक्ति ॥ अग्निरैत्वित्यादि परम्मृत्यविति चैके प्राशनान्ते ॥ अग्निरैत्वित्यादिकाः परम्मृत्यवित्यन्ताः पञ्चमन्त्राः परम्मृत्यविति च जुहुयात् ॥ एके आचार्याः परम्मृत्यवित्येतामाहुतिं प्राशनान्ते संस्रवप्राशनान्ते जुहुयादितीच्छन्ति उदकस्पर्शः ॥ इति हरिहरभाष्ये प्रथमकाण्डेपञ्चमीकण्डिका ॥ ५ ॥ * ॥

गदाधरः ॥ प्रदक्षिणमग्निम्पर्याणीयैके ॥ एके आचार्या अग्नेः प्रदक्षिणङ्कारयित्वा कन्यायाः वासःपरिधानादि कर्तव्यमिति वदन्ति अपरे तु समीक्षणान्ते अग्नेः प्रदक्षिणकरणं वदन्ति अतश्च विकल्पः ॥ पश्चादग्नेस्तेजनीङ्कटंवादक्षिणपादेन प्रवृत्योपविशति ॥ ततो वरोऽग्नेः पश्चात्स्थापितां तेजनीङ्कटं वा दक्षिणपादेन प्रवृत्य आक्रम्य उल्लङ्घ्याग्नेः पश्चादुपविशति ॥ तेजनी तृणपूलिकोच्यते कटः प्रसिद्धः । अत्र पश्चादुपवेशनं वचनात् वचनाभावेतु सर्वत्रोत्तरत उपचारो यज्ञ इत्यनेन उपवेशनम् स्मृत्यन्तराद्वरस्य दक्षिणतः कन्या उपविशति ॥ तेजनीङ्कटमिति द्वितीयानिर्देशादेतयोः संस्कारः ॥ ननूपयुक्तमुपयोक्ष्यमाणं वा द्रव्यं संस्कार्यम् नचानयोरन्यतर उपयुक्तमुपयोक्ष्यमाणं वा भवति ततश्च कथं संस्कारः सत्यम् यद्यप्यत्र शब्देनोपयोगो नोक्तस्तथाप्यासने द्रव्याकाङ्क्षत्वादेतस्य च

प्रयोजनाकाङ्क्षत्वादेवं कल्प्यते उपवेशनार्थोऽयं संस्कार इति तेन तेजन्युपरि कट-
स्योपरि वोपवेशनम् एवं च दृष्टार्थतालाभः आक्रमणं च तया सह कर्तव्यमिति
भर्तृयज्ञहरिहरौ ॥ **अन्वारब्ध आघारावाज्यभागौमहाव्याहृतयः सर्वप्रायश्चित्तं
प्राजापत्यꣳस्विष्टकृच्च** ॥ आघारौ आज्यभागौ च विधीयेते। आघारः पूर्व उत्तरश्च
तत्र तूष्णीम्पूर्वः॥ हरिहरेण प्रजापतये स्वाहेति पूर्वाघारो दर्शितः तदतीवाशुद्धम्।
नह्यत्र मन्त्रोऽस्ति दर्शपूर्णमासयोः परिभाषातः प्राप्तः स्वाहाकारोऽपि प्रतिषिध्यते ।
नस्वाहेति च नानिरुक्तꣳहिमनोनिरुक्तꣳ ह्येतद्यस्तूष्णीमिति ॥ ननु आघारादिपृष्ठ-
भावेन वेद्यादिकङ्कुतो नायाति उच्यते गृह्यस्थालीपाकानाङ्कर्मेत्युपक्रम्य एष एव विधि-
र्यत्र क्वचिद्धोम इत्यनेनैवं ज्ञायते यावन्तोऽत्र पदार्था उक्तास्तावन्त एव भवन्ति नान्ये।
उत्तराघारे प्रतिनिगद्य होमत्वम् नह्यत्र मन्त्रोऽस्ति । एवमाज्यभागयोरपि महाव्या-
हृतयो महाव्याहृतिका मन्त्रास्त्रयः ॥ भूर्भुवः स्वस्तिस्रो महाव्याहृतय इत्युक्तत्वात् ॥
सर्वप्रायश्चित्तं च त्वन्नोअग्न इत्यादिमन्त्रैः पञ्चाहुतयो हूयन्ते तासां सञ्ज्ञा ॥ प्राजा-
पत्यम्प्रजापतिदेवताको होमः । स्विष्टकृत्स्विष्टकृद्धोमम् । यजमानो ब्रह्मणा अन्वा-
रब्ध आघारादि स्विष्टकृदन्तङ्करोति अन्वारम्भश्च कुशेन निगमपरिशिष्टात् ॥
**एतन्नित्यꣳ सर्वत्र** ॥ एतदाघारादि स्विष्टकृदन्तङ्कर्म यत्र यत्र होमः तत्र सर्वत्र
भवति । यत्र पुनर्होम एव नास्ति यथा स्रस्तरारोहणे लाङ्गलयोजने च तत्रैतन्न
भवति ॥ **प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः** ॥ चेद्यदि आज्यद्र-
व्यादन्यद्द्रव्यं चर्वादिकमपि भवति तदा महाव्याहृतिहोमात्प्राक् पूर्वं स्विष्टकृद्धोमो
भवति चर्वादिद्रव्यशेषादेव केवलाज्यहोमे तु सर्वहोमान्ते आज्येनैव स्विष्टकृत्॥
**सर्वप्रायश्चित्तम्प्राजापत्यान्तरमेतदावापस्थानं विवाहे** ॥ सर्वप्रायश्चित्तञ्च
त्वन्नोअग्न इत्यादिमन्त्रैः पञ्च होमाः प्राजापत्यम्प्रजापतिदेवताको होमः एत-
योरन्तरम्मध्यं सर्वप्रायश्चित्तं प्राजापत्यान्तरमेतद्विवाहे विवाहकर्मणि आवापस्थानं
वक्ष्यमाणानां राष्ट्रभृदादीनाम् अनुष्ठानकाल इत्यर्थः ॥ **राष्ट्रभृत इच्छन्** ॥ अस्मिन्
विवाहकर्मणि इच्छन्निच्छया राष्ट्रभृत्सञ्ज्ञका होमाः स्युः ॥ ऋताषाड्ऋतधामाग्नि-
र्गन्धर्व इत्यादिभिर्मन्त्रैराग्निका द्वादशहोमा राष्ट्रभृतः ॥ **जयाभ्यातानाँश्च जान-
न्येनकर्मणेर्त्सेदिति वचनात्** ॥ जयाश्च अभ्यातानाश्च जयाभ्यातानाः तान् जया
भ्यातानान् जानन् इच्छञ्जुहोति अतश्च विकल्पः ॥ चशब्दो राष्ट्रभृद्भिः सन्नि-
योगार्थः ॥ इच्छया जुहोतीति कुत इतिचेत् ॥ **येन कर्मणेर्त्सेदिति वचनात्** ॥ येन

कर्मणा ऋद्धिमिच्छेत्तत्र जयाञ्जुहोतीति वचनं भवति ॥ अतश्चान्यत्रापि ऋद्धिमिच्छता जयाहोमः कार्य इति ज्ञायते जैमिनिस्तु जयादीनामनारभ्याधीतानां येन कर्मणेच्छेत्तत्र जयाञ्जुहुयादित्यादिभिर्वाक्यैरेव सामान्यतो लौकिकवैदिककर्माङ्गत्वे प्राप्ते जयादयस्तुवैदिकास्तेन यत्राहवनीयोऽस्ति तत्रैते स्युरिति सिद्धान्तितवान् ॥ जयाहोमानाम्मन्त्रानाह ॥ चित्तञ्च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञातिश्चमनश्चशक्वरीश्चदर्शश्च पौर्णमासञ्च बृहच्चरथन्तरं च प्रजापतिर्जेयानिन्द्रायवृष्णेप्रायच्छदुग्रः पृतनाजयेषु । तस्मै विशः समनमन्त सर्वाः सउग्रः सइहव्योबभूवस्वाहेति ॥ मन्त्रार्थः चित्तञ्चेति प्रजापतिर्यथेन्द्राय जयान्प्रायच्छत् तथा चित्तादि च मह्यमपि प्रयच्छत्वितिक्रियां विपरिणम्योत्तरत्र सम्बन्धः तस्मै च सुहुतमस्तु । तत्र चित्तं ज्ञानाधारं हृदयम् चित्तिस्तत्रत्या चेतना । आकूतञ्चाभिमतमाकूतिश्चाभिमानः यद्वा चित्तं ज्ञानेन्द्रियम् । जातावेकवचनम् । चित्तिस्तद्देवता आकूतङ्कर्मेन्द्रियम् आकूतिस्तद्देवता विज्ञातं शिल्पादिज्ञानमपरोक्षम् विज्ञातिस्तद्देवता मनः प्रसिद्धम् शक्वरीः शक्वर्यस्तच्छन्दस्कयः दर्शपौर्णमासौ तद्देवते बृहद्रथन्तरे सामनी तद्देवते वा । सर्वत्र प्रथममन्त्रोक्तवाक्यार्थः सम्बध्यते ॥ प्रजापतिः परमेश्वरः जयन्ति शत्रूनिति जयाः तान् जयान्मन्त्रानिन्द्राय प्रायच्छत् ददौ किमर्थम् वृष्णे अभिमनोरथवर्षणाय इन्द्रविशेषणं वा । ततः स इन्द्रः पृतनाजयेषु असुरसेनाविजयाख्यकर्मसु उग्रः प्रचण्डो बभूव । किञ्च ततस्तस्मै इन्द्राय विशः प्रजाः समनमन्त सम्यङ् नेमुः ॥ सइ इवार्थे स चेन्द्रः हव्यः हवनीयः इज्यः बभूव स्वाहा तस्मै सुहुतमस्तु ॥ तथाच तैत्तिरीया श्रुतिः ॥ देवासुराः संयत्ता आसन् स इन्द्रः प्रजापतिमुपाधावत्स तस्मा एताञ्जयान्प्रायच्छत्तानजुहोत्ततो देवा असुरानजयंस्तज्जयानाञ्जयत्वमिति । अत्र प्रजापतिर्जयानित्येकेनापि जयालिङ्गेन छत्रिन्यायेन त्रयोदशमन्त्रा जया इत्युच्यन्ते । इमानि शाखान्तरोपदिष्टानि देवतापदानि एषाम्प्रयोगकाले सम्प्रदानलक्षणेन सम्प्रयोगश्चित्ताय स्वाहेत्यादीनि भर्तृयज्ञः नेति कर्कादयः नचेमानि देवतापदानि किन्तर्हि मन्त्राश्चैते तेच यथाऽऽम्नाता एव प्रयोक्तव्याः ॥ अभ्यातानसञ्ज्ञकान्मन्त्रानाह ॥ अग्निर्भूतानामधिपतिः समावत्विन्द्रो ज्येष्ठानांयमः पृथिव्यावायुरन्तरिक्षस्य सूर्योदिवश्चन्द्रमानक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोपाꣳ समुद्रः स्रोत्यानामन्नꣳ साम्राज्यानामधिपति

तन्मावतु सोम ओषधीनाꣳ सविता प्रसवानाꣳ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानाम्मरुतोगणानामधिपतयस्तेमावन्तुपितरः पितामहाः परेवरेततास्ततामहाः । इहमावन्त्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यान्देवहूत्याꣳस्वाहा ॥ मन्त्रार्थः अग्निः प्रजापतिः भूतानां स्थावरादीनामधिपतिः ईशः स मा मामवतु पातु क्व अस्मिन्ब्रह्मणि अस्मिन्ब्रह्मकर्मणि होमादौ पुनरस्मिन्क्षत्रे क्षत्रकर्मणि प्रजापालनादौ पुनरस्यामाशिषि ब्राह्मणैः सम्पादितेऽष्टाशंसने पुत्रादिसुखकामनायां वा कुत्र अस्याङ्कन्यायाम् किम्भूतायाम् पुरोधायाम् पुरस्थितायाम् अस्मिन्कर्मणि विवाहे अस्यान्देवहूत्याम् देवताह्वाने देवतोद्देशेन होमे वा स्वाहा सुहुतमस्तु अयञ्च वाक्यार्थ उपरिष्टादपि सप्तदशसु सम्बध्यते शेषम् स्पष्टम् ॥ एतेऽष्टादश मन्त्रा अभ्याताना: । अग्निर्भूतानामित्यादि सुगन्नुपन्थामित्यन्ता द्वाविंशतिरभ्याताना इति कर्ककारिकाकारौ ॥ इति सर्वत्रानुषजति ॥ एतेषु मन्त्रेषु प्रतिमन्त्रं यथालिङ्गं यथावचनं समावत्वित्यादि देवहूत्यां स्वाहेत्यन्तं वाक्यैकदेशमनुवक्तव्यम् ॥ तच्चास्माभिः प्रयोगलेखने प्रदर्शयितव्यम् ॥ अग्निरैतु प्रथमोदेवतानाꣳ सोऽस्यै प्रजाम्मुञ्चतु मृत्युपाशात् । तदयꣳराजावरुणोऽनुमन्यतां यथेयꣳ स्त्रीपौत्रमघन्नरोदात्स्वाहा । इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्थाजीवतामस्तुमातापौत्रमानन्दमभिविबुध्यतामियꣳ स्वाहा । स्वस्तिनो अग्नेदिव आपृथिव्याविश्वानिधेह्ययथायजत्र । यदस्यां महिदिविजातम्प्रशस्तन्तदस्मासुद्रविणन्धेहिचित्रꣳस्वाहा । सुगन्नुपन्थाम्प्रदिशन्नएहि ज्योतिष्मध्येह्यजरन्न आयुः । अपैतुमृत्युरमृतम्म आगाद्वैवस्वतोनो अभयङ्कृणोतु स्वाहेति ॥ अग्निरैतु प्रथम इत्यादिचतुर्भिर्मन्त्रैश्चतस्र आज्याहुतीर्जुहोति ॥ अग्निरैतु प्रथम इति प्रथमा इमामग्निरिति द्वितीया स्वस्ति न इति तृतीया सुगन्नुपन्थामिति चतुर्थी ॥ मन्त्रार्थः ॥ अग्निः एतु आगच्छतु किम्भूतः देवतानां यज्ञभुजां प्रथमः आद्यः प्रधानत्वात् । सचाग्निः असौ अस्याः कन्यायाः प्रजां भाविपुत्रादिरूपां मुञ्चतु मोचयतु कुतः मृत्युपाशात् । यद्वा मृत्युपाशात्* । अग्निः अस्यै कन्यायै प्रजाम्मुञ्चतु ददातु तच्च प्रजामोचनं राजा वरुणोऽनुमन्यताम् अनुजानातु । यथा येनानुज्ञानेन प्रकारेण वा इयङ्कन्या पौत्रं पुत्रभवं अघन्दुःखं नरोदात् शोकम्प्राप्य न

* अस्मिन्नत्रप्रकरणे जयरामभाष्ये एतस्यार्थः स्फुटः ।

रोदिष्यति कदाचिदपि अपत्यवियोगो मा भवतु इत्यर्थः ॥ १ ॥ इमाङ्कन्याङ्गार्हपत्यो- ऽग्निस्त्रायताम् रक्षतु गार्हपत्याभिधो भाव्यग्निः पालयतु । इमाम्पत्नीमग्निहोत्रिणीं कृत्वा रक्षतु। अस्यै अस्याः प्रजान्दीर्घमायुः निर्दुष्टबहुकालजीवनन्नयतु प्रापयतु ॥ इयञ्च अशून्योपस्था सफलप्रसवा अवन्ध्यातयेति यावत् । यद्वा नित्यं भर्तृसङ्गतोत्सङ्गा अस्तु भवतु जीवतामेव दीर्घायुषां माताचास्तु जीवपुत्रा भवत्वित्यर्थः । किञ्च पौत्रम् पुत्रसम्बन्धजमानन्दंसुखम् अभि अधिगम्य आभिमुख्येन सर्वभावेन वा प्राप्य विविधं बुध्यताम् जानातु सर्वज्ञाऽस्त्वित्यर्थः ॥ यद्वा पौत्रमानन्दं विशिष्टतया बुध्यताम् निद्रासुखापेक्षान्त्यक्त्वा जागर्त्विति ॥ २ ॥ हेअग्ने यजन्तन्त्रायत इति यजत्रः हेयजत्र यस्मात्त्वं सर्वप्रत्यक् अतो नोऽस्माकं विश्वानि सर्वाणि कर्माणि अयथा अन्यथा कृतानि कर्माणि स्वस्ति सम्पूर्णानि यथा स्यात्तथा धेहि अनुकूलानि कृत्वा स्थापय किञ्च दिव आस्वर्गं लोकमभिव्याप्य आपृथिव्याः पृथिवीमभिव्याप्यच यत् महि महिमा तमस्मासु धेहि स्थापय किञ्च अस्याम्पृथिव्यां जातं यद्द्रविणं वसु चित्रं नानारूपं स्वर्णरत्नादिभेदेन प्रशस्तं प्रशस्यं अप्रम् यच्च दिवि स्वर्गे जातं तदप्यस्मासु धेहि ॥ ३ ॥ हेअग्ने नोऽस्मान् एहि आगच्छ अस्मद्गृहानागत्य नोऽस्माकं सुगं सुखगम्यंपन्थाम् पन्थानम् अर्चिरादिमार्गं प्रदिशन् उपदिशन् सम्पादयन्निति यावत् ॥ आयुर्निर्दुष्टजीवनन्धेहि देहि किम्भूतम् अजरं जरारोगादिपराभवरहितम् अजरमित्यग्निविशेषणं वा विभक्तिव्यत्ययेन । पुनः किम्भूतम् ज्योतिष्मत्प्रकाशकम् तत्प्रतिबन्धको मृत्युरपि नोऽस्माकं भवत्प्रसादादपैतु अपगच्छतु । अमृतमानन्दञ्च नोऽस्मान् आगात् आगच्छतु, वैवस्वतो यमश्च नोऽस्माकम् अभयं त्वत्सम्बन्धेन पापाभावाद्दुःखहेतुभयाभावं कृणोतु करोतु ॥ परम्मृत्यविति च ॥ चकारादाहुतिं जुहोति परम्मृत्यविति अनेन मन्त्रेण मन्त्रस्यपित्र्यत्वादुदकस्पर्शः ॥ एके प्राशनान्ते ॥ एके आचार्याः संस्रवप्राशनान्ते इमामाहुतिमिच्छन्ति तस्मिन्पक्षे परम्मृत्यविति होमान्ते पुनरेतस्य संस्रवप्राशनम् ॥ इति श्रीत्रिरग्निचित्संम्राट्स्थपति श्रीवामनात्मजदीक्षितगदाधरकृते गृह्यभाष्येपञ्चमी कण्डिका ॥ ५ ॥ * ॥

मूलम् ॥ कुमार्याभ्राता शमीपलाशमिश्राँल्लाजानञ्जलिनाञ्जलावावपति ॥ १ ॥ ताञ्जुहोतिसꣳहतेनतिष्ठती अर्यमणं देवङ्कन्याऽग्निमयक्षत। सनो अर्यमा देवः प्रेतोमुञ्चतुमापतेः स्वाहा। इयन्नार्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तुमेपतिरे-

धन्तां ज्ञातयोममस्वाहा । इम्माँल्लाजानावपाम्यग्नौ समृद्धिकरणान्तव। ममतुभ्य च संवननं तदग्निरनुमन्यतामियꣳ स्वाहेति ॥ २ ॥ अथास्यै दक्षिणꣳ हस्तं गृह्णाति साङ्गुष्ठं गृभ्णामि ते सौभगत्वायहस्तम्मयापत्याजरदष्टिर्यथासः । भगोऽअर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्यायदेवाः । अमोऽहमस्मिसात्वꣳ सात्वमस्यमोऽअहम् । सामाहमस्मिऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि विवहावहै सहरेतोदधावहै प्रजां प्रजनयावहै पुत्रान्विन्द्यावहै बहून् ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णूसुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतमिति ॥ ३ ॥ ६ ॥

कर्कः। कुमार्याभ्राताशमीपलाशमिश्राँल्लाजानञ्जलिनाञ्जलावावपति ताञ्जुहोतिसꣳ हतेनतिष्ठती॥ संहतेनाञ्जलिना तिष्ठती प्रतिमन्त्रं लाजान् जुहोति । अर्यमणन्देवमित्येवमादिभिर्मन्त्रैः । तान् जुहोतीति वचनात्तुरीयायां वेलायां सर्वहोमः ॥ अथास्यै दक्षिणꣳ हस्तं गृह्णातिसाङ्गुष्ठं गृभ्णामितइति ॥ अनेन मन्त्रेण । अस्यै इति चतुर्थी षष्ठ्यर्था ॥ ६ ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ कुमार्या भ्राताइति । स्वाञ्जलिना कुमार्या अञ्जलौ आवपति प्रक्षिपति । सा च संहतेन मिलितेनाञ्जलिनातिष्ठतीति तिष्ठन्ती तान् लाजान् चतुर्थांशमितान् जुहोति ॥ अर्यमणन्देवमित्येवमादिभिर्मन्त्रैः प्रतिमन्त्रन्तान् जुहोतीति वचनात् तृतीयवेलायाम् अञ्जलिस्थसर्वहोमः । चतुर्थम् शूर्पकुष्ठयेति शूर्पावशिष्टानां सर्वहोमस्य वक्ष्यमाणत्वात्। आवपनन्तु सकृदेव आवृत्तेरश्रवणात् ॥ अथमन्त्रार्थः तत्राथर्वणोऽनुष्टुप् अग्निर्लाजाहोमे । एवन्त्रयाणामपि । कन्यायाः पूर्वः प्रथमम् अर्यमणं सूर्यम् देवङ्कान्तम् अग्निम् अग्निस्वरूपम् वरलाभाय अयच्छत् अयजत् । लिङ्व्यत्ययश्छान्दसरूपम् । सचार्यमा देवस्ताभिरिष्टो इतो नोऽस्मान् इदानीम्परिणीता कन्या इतः पितृकुलत्वात् प्रमुञ्चतु प्रमोचयतु मापतेः पत्युः कुलत्वात्सहचरीत्वाद्वा मा प्रमोचयतु । यद्वा वरो ब्रूते । कन्येयम् अर्यमणम् अग्निरूपेणायजत्। सोर्यमादेवः पतेः पत्युः मत्तः सकाशात् इमांन्नो प्रमुञ्चतु मा प्रमोचयतु। इतः अस्याः कन्यायाः सकाशात् मा माम् नो प्रमुञ्चत्विति॥ अत्रेदं मन्त्रत्रयं कन्यैव

वरपाठिता पठति । इयन्नारी वधूः उप पत्युःसमीपे ब्रूते । किङ्कुर्वती लाजान् भृष्टव्रीहीन् आवपन्तिका अग्नौ विभागशः प्रक्षिपन्ती स्वार्थे कः किम्ब्रूते तदाह मे मम पतिरायुष्मान् सकलदीर्घायुरस्तु भवतु मम ज्ञातयो बान्धवा एधन्तां वर्द्धन्तामिति । किञ्च हेपते इमाँल्लाजान् अग्नौ आवपामि प्रक्षिपामि किम्भूतान् तव समृद्धिकरणं समृद्धिहेतूनित्यर्थः अतो मम कन्यायाः तुभ्यच तवच भर्तुः सलोपश्छान्दसः संवननं वशीकरणम् अन्योन्यमनुरागः तदयमग्निरर्यमा अनुमन्यताम् अनुमोदनङ्कुरुताम् इयञ्च स्वाहा तत्पत्नी अनुमन्यताम् अथास्यै अस्याः षष्ठ्यर्थे चतुर्थी हस्तं साङ्गुष्ठं गृभ्णामीति मन्त्रेण वरो गृह्णाति अथ मन्त्रार्थः तत्र याज्ञवल्क्यस्त्रिष्टुप् लिङ्गोक्ता हस्तग्रहणे । हेकन्ये ते तव साङ्गुष्ठं हस्तं करं गृभ्णामि गृह्णामि हृग्रहोर्भश्छन्दसि इति भत्वम् यथा येन गृहीतेन हस्तेन मया पत्या सह जरदष्टिः जरच्छरीरा बहुवर्षायुष्मती आसः भवसीत्यर्थेनिपातः॥ ग्रहणमेव तावत्कृत्यम् तत्राह भगादयस्त्वयोदेवास्त्वा त्वाम् मह्यम् अदुः दत्तवन्तः किमर्थम् गार्हपत्याय गृहस्वामिनीत्वाय भाविगार्हपत्यं सेवितुं वा किञ्च सौभगत्वाय सुभगानां समूहः सौभगं तस्य भावस्तत्वन्तस्मै तदर्थन्निरतिशयानन्दावाप्तये इत्यर्थः ॥ किम्भूतान्त्वाम् पुरन्धिः पुरन्धिम् द्वितीयार्थे प्रथमा श्रेष्ठाम् सुरूपवतीम् वा तथा च श्रुतिः पुरन्धिर्योषित्येवं रूपन्दधातीति ॥ भगत्वादिविशेषणैरेव विशिष्टार्थनिष्पादकत्वद्योतनार्थम् ॥ अमोहमिति भरद्वाज उष्णिक् विष्णुर्हस्तग्रहणे ॥ हे कन्ये यत अमो विष्णुरहमस्मि अमति सर्वत्रगच्छति सर्वं जानातिवेति न मिनोति हिनस्तीति वा अमः तथा सोति सुवति सूते वा विश्वमिति सा लक्ष्मीस्त्वमसि किञ्च सा देवी त्रयीरूपा त्वमसि अमो देवत्रयरूपोऽहमस्मि किञ्च अहम् सामास्मि त्वञ्च ऋगसि अहन्द्यौरस्मि त्वञ्च पृथिव्यसि तद्गुणाश्रितावावामित्यर्थः ॥ ताविति ॥ अथर्वणोऽनुष्टुप् विष्णुर्हस्तग्रहणे तावेव आवाम् विवहावहै विवाहं करवावहै सह संयुक्तौ भूत्वा रेतः पुत्रदेहरूपं दधावहै धारयाव ततः प्रजां पुत्रं प्रजनयावहै तत्पुत्रान् पुत्रपौत्रादीन् बहून् विन्द्यावहै लभावहै ॥ ते सन्त्विति ॥ प्रजापतिर्यजुर्विष्णुर्हस्तग्रहणे ॥ ते च पुत्रा जरदष्टयः शतायुषः सन्तु आवामपि सम्प्रियौ सम्यक् प्रीतौ परस्परं प्रेमशालिनौ रोचिष्णू सुदीप्तौ शोभमानौ वा सुमनस्यमानौ शोभनमनोवृत्तिङ्कुर्वाणौ सुमनसोभावः सौमनस्यम् सुमनस्यं वा तत्कुर्वाणावित्यर्थः आस्वेति मन्तुक्रियां विपरिणमय्य योज्यम् इन्द्रियपाटवमाशास्ते

अयं च पुत्रादिसहिताः शतं शरदो वत्सरान्पश्येम रूपग्रहणसमर्थाः स्मस्ततथा शतं शरदो जीवेम निरुपद्रुतप्राणान्धारयाम तथैव शरदः शतं शृणुयाम निर्दुष्टं शब्दग्रहणसमर्थमस्माकं श्रवणेन्द्रियम्भवत्वित्यर्थः ॥ ६ ॥ ॥ * ॥

हरिहरः॥ कुमार्या भ्राता शमीपलाशमिश्रांल्लाजानञ्जलिनाञ्जलावावपति ताञ्जुहोति सꣳहतेन तिष्ठती ॥ कुमार्याः कन्यायाः भ्राता शमीपलाशमिश्रान् शमीपत्रयुक्तान् लाजान् भ्रष्टानि धान्यानि अञ्जलिना कृत्वा वध्वा अञ्जलौ आवपति निक्षिपति तान् जुहोति सा च अञ्जलिस्थान् लाजान् संहतेन मिलितेनाञ्जलिना जुहोति विवाहाग्नौ प्रक्षिपति तिष्ठतो ऊर्ध्वा ॥ अर्यमणन्देवङ्कन्या अग्निमयक्षत सनो अर्यमादेवः प्रेतो मुञ्चतु मा पतेः स्वाहा। इयन्नार्युपब्रूते लाजानावपन्तिका आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा। इमांल्लाजानावपाम्यग्नौ समृद्धिकरणन्तव मम तुभ्य च संवननन्तदग्निरनुमन्यतामियꣳ स्वाहेति ॥ अर्यमणन्देवमिति प्रथमम् इयन्नार्युपब्रूत इति द्वितीयम् इमांल्लाजानावपामीति तृतीयम् ॥ अथास्यै दक्षिणꣳ हस्तं गृह्णाति साङ्गुष्ठं गृभ्णामि ते सौभगत्वाय हस्तम्मया पत्या जरदष्टिर्यथासः । भगोऽर्यमासविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः । अमोऽहमस्मि सात्वꣳ सात्वमस्यमो अहम् । सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवीत्वं तावेहि विवहावहै सहरेतोदधावहै प्रजाम्प्रजनयावहै पुत्रान्विन्द्यावहै बहून्ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतमिति ॥ अथ लाजाहोमानन्तरं अस्यै अस्याः कुमार्या दक्षिणं हस्तं गृह्णाति स्वदक्षिणहस्तेन आदत्ते कीदृशं हस्तं साङ्गुष्ठं अङ्गुष्ठेन सहितम् गृभ्णामि ते सौभगत्वायेत्यादि शृणुयाम शरदः शतमित्यन्तं मन्त्रम्पठति वरः ॥ इति हरिहरभाष्ये प्रथमकाण्डे षष्ठी कण्डिका ॥ ६ ॥ ॥ * ॥

गदाधरः ॥ कुमार्या भ्राता शमीपलाशमिश्रांल्लाजानञ्जलिनाञ्जलावावपति ॥ कुमार्याः कन्याया वध्वा भ्राता शमीपत्रैर्मिश्रितान् लाजानञ्जलिना कन्यायाः अञ्जलौ आवपति प्रक्षिपति लाजाशब्देन भृष्टव्रीहय उच्यन्ते ॥ ताञ्जुहोति सꣳहतेन तिष्ठत्यर्यमणन्देवङ्कन्या अग्निमयक्षत । सनो अर्यमा देवः

प्रेतोमुञ्चतु मापतेः स्वाहा । इयन्नार्युपब्रूते लाजानावपन्तिका आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा । इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणन्तव । मम तुभ्यच संवननं तदग्निरनुमन्यतामियꣳस्वाहेति ॥ ततः कुमारी तिष्ठती ऊर्द्ध्वा तांल्लाजान् स्वाञ्जलौ स्थितान् सꣳहतेन अविरलेन ञ्जलिना अर्यमणमित्यादि त्रिभिर्मन्त्रैर्जुहोति । अविच्छिन्नाञ्जलिना स्रुचेव जुहुयादित्याश्वलायनः ॥ तत्रैकैकेन मन्त्रेण प्रक्षिप्तलाजानान्तृतीयांशन्तृतीयांशञ्जुहोति एवञ्च होमत्रयम्भवति अत्र कारिकाकारः तिष्ठन्त्यास्तिष्ठता पत्या गृहीताञ्जलिनैव सा । अञ्जलिस्थांस्त्रिधा सर्वान् प्राङ्मुखी प्रतिमन्त्रतः । प्राजापत्येन तीर्थेन दैवेनैवेति बह्वृचाः । अन्यो भ्रातुरभावे स्याद्वान्धवो जातिरेवचेति ॥ भ्राता भ्रातृस्थानोवेत्याश्वलायने गृह्ये ॥ भ्रातृस्थाने पितृव्यस्य मातुलस्यच यः सुतः । मातृष्वसुः सुतस्तद्वत्सुतस्तद्वत्पितृष्वसुरिति बह्वृचकारिकायाम् ॥ द्रव्यत्यागे तु वरस्य कर्तृत्वम् प्रधानꣳस्वामी फलयोगादित्युक्तत्वात् मन्त्रार्थः कन्याः पूर्वाः प्रथममर्यमणं सूर्यं देवङ्कान्तम् अग्निमग्निस्वरूपम् वरलाभाय अयक्षत अयजन् ॥ लिङि छान्दसरूपम् ॥ स चार्यमा देवस्ताभिरिष्टो यतोऽतो नोऽस्मान् इदानीम्परिणीता कन्या इतः पितृकुलम्प्रमुञ्चतु प्रमोचयतु मापतेः पत्युः कुलात्सहचरित्वाद्वा मा प्रमोचयतु यद्वा वरो ब्रूते कन्याः यम् अर्यमणम् अग्निरूपेणायजन् सोऽर्यमा देवः पतेः पत्युर्मत्तः सकाशादिमान्नो प्रमुञ्चतु मा प्रमोचयतु इत अस्याः कन्यायाः सकाशान्मा मान्नो प्रमुञ्चतु अत्रेदम्मन्त्रत्रयङ्कन्यैव वरपाठिता पठति ॥ इयन्नारी वधूः उप पत्युःसमीपे ब्रूते किङ्कुर्वती लाजान् भृष्टव्रीहीन् आवपन्तिका अग्नौ विभागशः प्रक्षिपन्ती स्वार्थे कः किं ब्रूते तदाह मे मम पतिरायुष्मान् सकलदीर्घायुरस्तु भवतु मम ज्ञातयः एधन्ताम् वर्द्धन्तामिति ॥ किञ्च हेपते इमानग्नौ आवपामि प्रक्षिपामि किम्भूतान् तव समृद्धिकरणम् समृद्धिहेतवे अतो मम कन्यायाः तुभ्यच तवच भर्तुः मलोपश्छादसः संवननं वशीकरणमन्योन्यमनुरागः तदयमग्निरर्यमा अनुमन्यताम् अनुमोदनङ्कुरुताम् इयञ्च स्वाहा तत्पत्नी अनुमन्यताम् ॥ अथास्यै दक्षिणꣳहस्तं गृह्णाति साङ्गुष्ठं

गृभ्णामि ते सौभगत्वाय हस्तं मयापत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः । अमोऽहमस्मिसात्वꣳसात्वमस्यमो अहम् । सामाहमस्मिऋक्त्वं द्यौरहम्पृथिवीत्वम् । तावेवविवहावहै

सहरेतोदधावहै प्रजाम्प्रजनयावहै पुत्रान्विन्द्यावहै बहून् ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतमिति ॥ अस्यै इति चतुर्थी षष्ठ्यर्थे अस्याः कुमार्याः दक्षिणं साङ्गुष्ठमङ्गुष्ठसहितं हस्तं गृह्णाति वरः स्वहस्तेनादत्ते गृभ्णामि ते इतिमन्त्रेण अथशब्दोऽत्र स्वस्थाने तिष्ठता कर्तव्यमितिद्योतनार्थः मन्त्रार्थः हेकन्ये ते तव हस्तं करं गृभ्णामि गृह्णामि ॥ हृग्रहोर्भश्छन्दसि इति भत्वम् यथा येन गृहीतहस्तेन मया पत्या भर्त्रा सह जरदष्टिः जरच्छरीरा बहुवर्षायुष्मती आसः भवसीत्यर्थे निपातः ' ग्रहणमेवतावत्कृत्यन्तत्राह ॥ भगादयस्त्वया देवास्त्वा त्वाम्मह्यमदुः दत्तवन्तः किमर्थम् गार्हपत्याय गृहस्वामिनीत्वाय भाविगार्हपत्यं सेवितुं वा किञ्च सौभगत्वाय सुभगानां समूहः सौभगं तस्य भावः सौभगत्वं तस्मै तदर्थम् निरतिशयानन्दावाप्तय इत्यर्थः ॥ किम्भूतान्त्वां पुरन्धिः पुरन्धिर्द्वितीयार्थे प्रथमा श्रेष्ठा सुरूपवती वा तथाच श्रुतिः पुरन्धिर्योषेति योषित्येवरूपं दधातीति हेकन्ये यत अमो विष्णुरुद्रब्रह्माऽहमस्मि अमति सर्वत्र गच्छति सर्वं जानातिवेति न मिनोति हिनस्तीति वा अमः तथा सौति सुवति सूते वा विश्वमिति सा लक्ष्मीस्त्वमसि किञ्च सा देवी त्रयीरूपा त्वमसि अमो देवत्रयरूपोऽहमस्मि । किञ्च अहं सामास्मि त्वं ऋगसि अहन्द्यौरस्मि त्वम्पृथिव्यसि तावेवावां विवहावहै विवाहङ्करवावहै सह संयुक्तौ भूत्वा रेतः पुत्रदेहरूपं दधावहै धारयाव । ततः प्रजां स्त्रीरूपां सन्ततिम्प्रजनयावहै उत्पादयाव पुत्रान् पुत्रपौत्रादीन् बहून् विन्द्यावहै लभावहै तेच पुत्रा जरदष्टयः शतायुषः सन्तु आवामपि सम्प्रियौ सम्यक् प्रीतौ परस्परप्रेमशालिनौ रोचिष्णू सुदीप्तौ शोभमानौ वा सुमनस्यमानौ शोभनमनोवृत्तिङ्कुर्वाणौ सुमनसोभावः सौमनस्यम् तत्कुर्वाणावित्यर्थः सन्त्विति-क्रियां विपरिणमय्य योज्यम् इन्द्रियपाटवमाशास्ते वयञ्च पुत्रादिसहिताः शतं शरदो वत्सरान्पश्येम रूपग्रहणसमर्थाः स्याम तथा शतं शरदो जीवेम निरुपद्रवप्राणान्धारयाम तथैव शरदःशतं शृणुयाम निर्दुष्टं शब्दग्रहणसमर्थमस्माकं श्रवणेन्द्रियम् भवत्वित्यर्थः ॥ इतिश्रीत्रिरग्निचित्सम्राट्स्थपति श्रीवामनात्मजदीक्षितगदाधरकृते गृह्यभाष्ये प्रथमकाण्डे षष्ठी कण्डिका ॥ ६ ॥ ॥ * ॥

मूलम् ॥ अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेन आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव । अभितिष्ठ पृतन्यतोव-

बाधस्व पृतनायतइति ॥ १ ॥ अथ गाथाङ्गायति सरस्वति प्रेद-मव सुभगे वाजिनीवती । यान्त्वा विश्वस्य भूतस्य प्रजाया-मस्याग्रतः यस्यां भूतꣳ समभवद्यस्यां विश्वमिदञ्जगत् । तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यश इति ॥ २ ॥ अथ परि-क्रामतः तुभ्यमग्रेपर्यवहन्सूर्यां वहतु नासह । पुनः पतिभ्यो-जायान्दाग्ने प्रजया सहेति ॥ ३ ॥ एवं द्विरपरं लाजादि ॥ ४ ॥ चतुर्थꣳ शूर्पकुष्ठया सर्वाँल्लाजानावपति भगाय स्वा-हेति ॥ ५ ॥ त्रिः परिणीतां प्राजापत्यꣳ हुत्वा ॥ ६ ॥ * ॥ ७ ॥

कर्कः ॥ अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेनारोहेममश्मान-मिति ॥ एनां वधूमुत्तरतोऽग्नेर्व्यवस्थितमश्मानमारोहयत्यारोहेममश्मानमित्यनेन मन्त्रेण प्रकृतकर्तृत्वञ्चात्र वरस्य मन्त्रश्च । अथ गाथां गायति सरस्वति प्रेद-मवसुभगे इति वर एव अथ परिक्रामतस्तुभ्यमग्रइति अनेन मन्त्रेण वर-वध्वौ मन्त्रश्च लिङ्गाद्वरस्यैव । एवन्द्विरपरं लाजादिकर्म भवति ॥ चतुर्थꣳ शूर्पकुष्ठयासर्वाँल्लाजानावपति॥ अग्रं शूर्पस्य कुष्ठा तया शूर्पकुष्ठया सर्वाँल्लाजा-नावपति कुमार्याः पाणौ भगाय स्वाहेत्यनेन मन्त्रेण तानेव जुहोति कुमारी ॥ त्रिः परिणीताम्प्राजापत्यꣳ हुत्वेति ॥ त्रिः परिणीतामिति त्रिर्ग्रहणमितरथा वृत्तिव्युदासार्थम् उक्तं हि परिभाषायाम् .विवृत्त्यावृत्य वेतरथा वृत्तिरिति ॥ ७ ॥

जयरामः ॥ अथैनां वधूमुत्तरतोऽग्नेरवस्थापितमश्मानमारोहयति दक्षिणपादेन वर आरोहेममश्मानमिति मन्त्रेण प्रकृतकर्तृत्वं चात्रवरस्य मन्त्रपाठश्च ॥ तस्यार्थः तत्राथर्वणोऽनुष्टुप् वधूर्देवता अश्मारोहणे । हे कन्ये इमम्पुरोवर्त्तिन-मश्मानम्प्रस्तरमारोह आरुह अधितिष्ठेति यावत् ॥ आरोहणेन संस्कृता त्वमश्मेव पाषाणवत्स्थिरा दृढाङ्गी भव ॥ किञ्च अभि अधिकृत्य आक्रम्य तिष्ठ कान् पृतनां संग्राममिच्छन्ति पृतन्यन्ति त एव पृतन्यतः तान्पृतन्यतः कलहकारिण इत्यर्थः ततश्च पृतनाभिः सेनाभिर्यतन्ते इति पृतनायतः तान्पृतनायतः अव अवाचीनान्कृ-त्वा बाधस्व भग्नोद्यमान्कुरुष्व । अथ अश्मारूढायाङ्कन्यायां वरो गाथां गीयते स्तूयते अनयेति गानं तिष्ठत्यस्यामिति वा गाथा तां गायति अस्यार्थः तत्र विश्वाव-सुरनुष्टुप् सरस्वती गाने हे सरस्वति वैखरी वाक् सुभगे कल्याणि वाजिनीवति

वाजः अन्नं तदस्ति अस्यामिति वाजिनी अन्नशाला यद्वा वाजाः पक्षाः सन्त्यस्या इति वाजिनी हंसी तद्वति इदं युग्मम् कर्म च प्राव प्रकृष्टतया अव रक्ष यां त्वा त्वाम् अस्य विश्वस्य भूतस्य जातस्य पृथिव्यादेर्वा प्रजायां प्रकृष्टां जनित्रीमाहुः मन्त्राः किम्भूताम् अग्रतः प्रथमाम् तदेव प्रपञ्चयति यस्यामिति यस्याम्प्रकृतिरूपायां त्वयि इदं सर्वं विश्वं तथा भूतं पृथिव्यादि सर्वञ्जगत् अस्तङ्गच्छत् आस प्रलये लीनमित्यर्थः पुनः सृष्ट्यादौ च यस्याः सकाशात् समभवत् जातम् शेषं स्पष्टम् ॥ अथ वधूवरौ अग्निम्परिक्रामतः प्रदक्षिणं कुरुतः । तुभ्यमग्रइति मन्त्रेण ॥ मन्त्रश्च लिङ्गाद्वरस्यैव तस्यार्थः तत्राथर्वणोऽनुष्टुप् अग्निः तत्प्रादक्षिण्ये ॥ अग्ने तुभ्यं त्वदर्थमेव सोमादयः अग्रे पूर्वं जन्मदिनादारभ्य पर्यवहन् परिगृहीतवन्तः ततः सूर्याम् नवोद्गतकान्तिम् पतिभ्यः सोमादिभ्यः इमान् भवान् वहतु प्राप्नोतु । किम्भूतः ना पुरुषः परमपुरुषार्थहेतुरित्यर्थः ॥ उद्वाचताम् ॥ जायां जायात्वेन पुनः पश्चात्स्वभोगानन्तरं प्रजया पुत्रैः सह मह्यं त्वम् दाः देहि सन्धिरार्षः ॥ एवन्द्विरपरं लाजादिकर्म भवति ॥ चतुर्थहोमे शूर्पस्य कुष्ठया कोणेन सर्वान् शूर्पावशिष्टांल्लाजान् कुमार्या अञ्जलावावपति भ्राता तांश्च भगाय स्वाहेति कुमारी जुहोति ॥ त्रिः परिणीतामिति त्रिर्ग्रहणमितरथावृत्तिव्युदासार्थम् इतरथा वृत्तिश्चोक्ता-परिभाषायाम् विवृत्त्यावृत्य वा इतरथावृत्तिरिति परितोऽग्नेर्नीतां परिणीतामिति पदस्य प्राजापत्यम्प्रजापतये हुत्वा उदीचीम्प्रक्रामयतीत्यन्वयः प्रक्रामयिताचात्र वर एव प्रस्तुतत्वात् ॥ ७ ॥

हरिहरः ॥ अथैनामश्मानमारोहयति । उत्तरतोऽग्नेर्दक्षिणपादेनारोहेममश्मानमश्मेवत्वꣳ स्थिराभव । अभितिष्ठ पृतन्यतोवबाधस्व पृतनायतइति ॥ अथ पाणिग्रहणानन्तरमेनां वधूमश्मानम् दृषदमुत्तरतोग्नेर्ध्रियमाणन्दक्षिणपादेन कृत्वा आरोहयति आरोहेममित्यादिपृतनायत इतिमन्त्रेण ॥ अथ गाथाङ्गायति ॥ अथ अश्मारोहणानन्तरङ्गाथाङ्गायति ताङ्गाथामाह ॥ सरस्वति प्रेदमवसुभगेवाजिनीवती। यान्त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः यस्याम्भूतꣳ समभवद्यस्यां विश्वमिदं जगत् तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यश इति ॥ इमम्मन्त्रम्पठति गाथागाने अथ परिक्रामतस्तुभ्यमग्रे पर्यवहन्सूर्यां वहतुनासह पुनःपतिभ्योजायान्दाऽग्ने प्रजयासहेति ॥ अथ गाथायां समाप्तायामग्निम्प्रादक्षिण्येन परिक्रामतो वधूवरौ तत्र मन्त्रः ॥ तुभ्यमग्रेपर्यवहन्नि-

त्यादिकस्य प्रजयासहेत्यन्तस्य मन्त्रस्य वरपठितस्यान्ते ॥ अत्र हस्तग्रहणादि परिक्रमणान्तेषु कर्मसु वर एव मन्त्रान्पठति ॥ एवन्द्विरपरँल्लाजादि ॥ एवमुक्त-प्रकारेण द्विः वारद्वयमपरम्पुनरपि लाजादि कुमार्याभ्रातेत्यारभ्यपरिक्रमणान्तङ्कर्म भवति ॥ चतुर्थꣳ शूर्पकुष्ठ्यासर्वाँल्लाजानावपति भगायस्वाहेति ॥ ततस्तृ-तीयपरिक्रमणानन्तरङ्कुमार्या भ्राता शूर्पकुष्टया शूर्पस्य कोणेन सर्वान् यावच्छूर्पे-ऽवशिष्टान् लाजान् कुमार्या अञ्जलौ आवपति निक्षिपति तान् लाजान् तिष्ठती कुमारी भगायस्वाहेति मन्त्रेण चतुर्थञ्जुहोति ततः समाचारात्तूष्णीं चतुर्थम्परिक्र-मणम् वधूवरौ कुरुतः नेतरथावृत्तिम् इतरथावृत्तेः कारणस्य व्यवायस्याभा-वात् ॥ ब्रह्माग्न्योरन्तरागमनं हि इतरथावृत्तिकारणम् कुत इतिचेत् हविः पात्र-स्वाम्यृत्विजां पूर्वंपूर्वमन्तरमृत्विजां च यथापूर्वमिति परिभाषासूत्रात् तेन परि-क्रमणङ्कुर्वन्तौ वधूवरौ ब्रह्माग्न्योर्मध्ये न गच्छेताम् ॥ त्रिः परिणीतां प्राजापत्यꣳ हुत्वा ॥ पूर्ववदुपविश्य प्रजापतये स्वाहेति ब्रह्मान्वारब्धो हुत्वा इदं प्रजापतय इति त्यागं विधाय ॥ इति श्रीहरिहरकृते पारस्करगृह्यसूत्रभाष्ये सप्तमीकण्डिका ॥ ७ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

गदाधरः ॥ अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेनारोहेमम-श्मानमश्मेव त्वꣳ स्थिराभव। अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतइति ॥ अथ धृतकर एव वर एतां वधूमुत्तरतोऽग्नेः स्थापितमश्मानम्पाषाणं दक्षिणपादेन कृत्वा आरोहयत्यारोहेममश्मानमित्यनेन मन्त्रेण मन्त्र एव कारितार्थे वासु-देवेन कुमार्या दक्षिणपादं हस्तेन गृहीत्वा अश्मानमुपरि वरः करोतीत्युक्तम् कारि-कायाम् ॥ गत्वोभावुत्तरेणाग्निन्तस्याः सव्येतरक्रमम्। सव्येनादाय हस्तेन वधूपा-दन्तु दक्षिणम् ॥ शिलामारोहयेत्प्रागायतां दक्षिणपाणिनेति। मन्त्रपाठश्च वरस्य न कुमार्याः मन्त्रार्थः हेकन्ये इमम्पुरोवर्तिनमश्मानम्प्रस्तरमारोह आक्रम अधिति-ष्ठेति यावत्। आरोहणेन संस्कृता त्वमश्मेव पाषाणवत् स्थिरा दृढा भव किञ्च अभि अधिकृत्य आक्रम्य तिष्ठ कान् पृतनां संग्राममिच्छन्ति पृतन्यन्ति त एव पृत-न्यतः तान् पृतन्यतः कलहकारिण इत्यर्थः ॥ ततश्च पृतनाभिः सेनाभिर्यतन्त इति पृतनायतः तान्पृतनायतः। अव अवाचीनान्कृत्वाबाधस्व भग्नोद्यमान् कुरु ॥ अथ गाथां गायति सरस्वति प्रेदमवसुभगे वाजिनीवती। यान्त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः। यस्यां भूतꣳ समभवद्यस्यां विश्वमिदं जगत्। तामद्य

गाथां गास्यामि यास्त्रीणामुत्तमं यशइति ॥ अथ कन्याया दक्षिणपादे अश्मनि निहित एव वरः सरस्वतिप्रेदमवेति इमां गाथां गायति मन्त्रार्थः हेसरस्वति वाग्देवते सुभगे कल्याणि वाजिनीवती वाजः अन्नन्तदस्ति अस्यामिति वाजिनी-वती अन्नवती यद्वा वाजाः पक्षाः सन्त्वित्यस्या इति वाजिनी हंसी तद्वतीदं युग्मं कर्म च प्राव प्रकृष्टतया अव रक्ष ॥ त्वा त्वामस्य विश्वस्य भूतस्य जातस्य पृथिव्यादेर्वा प्रजायां प्रकृष्टां जनित्रीमाहुः किम्भूतामग्रतः प्रथमाम् तदेव प्रपञ्चयति । यस्याम् प्रकृतिरूपायां त्वयीदं सर्वं विश्वं तथा भूतं पृथिव्यादि सर्वं जगत् अस्तं गच्छत् आम प्रलये लीनमित्यर्थः ॥ पुनः सृष्ट्यादौ च यस्याः सका-शात्समभवत् जातन्तस्याः सरस्वत्याः सम्बन्धिनीन्तां गाथां गुणप्रभावस्तुतिप्र-काशिकामद्य गास्यामि या श्रुता सती स्त्रीणामुत्तमं श्रेष्ठं यशः कीर्तिन्ददाति ॥ अथ परिक्रामतस्तुभ्यमग्रेपर्यवहन्त्सूर्यां वहतुनासह । पुनः पतिभ्यो जायां दाग्नेप्रजयासहेति ॥ अथ धृतकरावेव वरवध्वौ अग्नेः परिक्रमणं कुरुतस्तुभ्यम-ग्रइत्यनेन मन्त्रेण मन्त्रश्च लिङ्गाद्वरस्यैव ॥ मन्त्रार्थः ॥ हे अग्ने तुभ्यन्त्वदर्थमेव सोमादयः अग्रे पूर्वं जन्मदिनादारभ्य पर्यवहन् परिगृहीतवन्तः ततः सूर्याम् सूर्य-सम्बन्धिनीम्भार्यामिमाम् भवान्वहतु किं भूतः ना पुरुषः परमपुरुषार्थहेतुरि-त्यर्थः ॥ तां जायां जायात्वेन पुनः पश्चात्स्वभोगानन्तरं प्रजया पुत्रैः सह मह्यम् दाः देहि ॥ सन्धिरार्षः ॥ एवमनेन प्रकारेण द्विरपरँल्लाजादि कुमार्याभ्रातेत्या-द्यारभ्य परिक्रमणान्तं यावत्कर्मोक्तन्तावद् द्विः वारद्वयमपरं पुनर्भवति ॥ चतुर्थं शूर्पकुष्ठया सर्वांल्लाजानावपति भगाय स्वाहेति ॥ तृतीयप्रक्रमे समाप्ते चतु-र्थलाजाहोमं जुहुयात् ॥ तत्रायं विशेषः कुमार्या भ्राता शूर्पकुष्ठया शूर्पकोणेन शूर्पे अवशिष्टान् सर्वांल्लाजान् कुमार्या अञ्जलावावपति तान्कुमारी भगाय स्वाहेत्यनेन मन्त्रेण जुहोति ॥ अत्र हरिहरमिश्रैरबुद्धैव पाण्डित्यं कृतमस्ति तत्र तेषाङ्-ग्रन्थः ॥ ततः समाचारात्तूष्णीं चतुर्थम्परिक्रमणं वधूवरौ कुरुतः नेतरथावृत्तिम् । इतरथावृत्तेः कारणस्य व्यवायस्याभावात् । ब्रह्माग्न्योरन्तरागमनं हीतरथावृत्ति-कारणं कुत इति चेत् ॥ हविष्पात्रस्वाम्यृत्विजां पूर्वं पूर्वमन्तरमृत्विजाञ्च यथापूर्व-मिति परिभाषा सूत्रात् तेन परिक्रमणङ्कुर्वन्तौ वधूवरौ ब्रह्माग्न्योर्मध्ये न गच्छे-ताम् इति सर्वोप्ययं ग्रन्थस्तावदशुद्धः ॥ न हीतरथावृत्तिकारणं व्यवायः ॥ कि-न्तर्हि वचनादप्रदक्षिणावर्तनङ्कृत्वा प्रदक्षिणावर्तनं वा कृत्वा इतरथावृत्तिः का-र्या ॥ तथा च परिभाषा सूत्रम् विवृत्यावृत्यवेतरथावृत्तिरिति ॥ अयमर्थः ॥ विवृत्या-

प्रदक्षिणमावर्त्तनं कृत्वा आवृत्य प्रदक्षिणमावर्त्तनङ्कृत्वा इतरथावृत्तिः प्रत्यावृत्तिः कर्तव्या । यत्र शास्त्रतः प्रदक्षिणावृत्तिः कृता तत्र तदानीमेवाप्रदक्षिणावृत्तिरविहिताऽपि सर्वत्र कर्तव्या यत्र चाप्रदक्षिणावृत्तिः कृता तत्र तदानीमेव प्रदक्षिणावृत्तिरविहिताऽपि सर्वत्र कर्तव्या यत्र चाप्रदक्षिणावृत्तिः कृता तत्र प्रदक्षिणावृत्तिरित्यर्थः ॥ ब्रह्माग्न्योर्मध्ये वधूवरौ न गच्छेतामित्येतस्य हेतूपन्यासार्थं हविष्पात्रेति सूत्रन्दर्शितन्तदपि विपरीतम् नह्येतत्सूत्राद्ब्रह्माग्न्योर्मध्ये वधूवरौ न गच्छत इत्यायाति किन्त्वेतस्मादेव सूत्रान्मध्ये गमनम् हविष्पात्रेत्यस्यार्थः ॥ हविर्व्रीह्यादि पात्राणि शूर्पादीनि स्वामी कर्मजन्यफलभोक्ता यजमानः पत्नी च ऋत्विजो ब्रह्माद्याः एतेषामेकत्र समावेशे सति पूर्वम्पूर्वमस्मिन्सूत्रे प्रथमम्प्रथममुपदिष्टमन्तरमग्निसन्निकृष्टम्भवति अर्थात्पश्चात्पश्चादुपदिष्टन्तदपेक्षया बहिर्भवति हविरादीनामितस्ततो नयने ऋत्विग्यजमानानाञ्चेतस्ततो गमनागमने कर्मार्थमुपवेशने च सर्वत्राप्ययमन्तर्बहिर्भावो ज्ञेय इत्यर्थः ॥ ऋत्विजां ब्रह्मादीनामेकत्र समावेशने चान्तर्बहिर्भावः ततश्च वधूवरावग्नेः प्रदक्षिणङ्कुर्वन्तौ अन्तरङ्गत्वा तन्मध्य एव गच्छेतामिति ॥ तथाच कारिकायाम् ॥ दम्पत्योर्गच्छतोस्तत्र ब्रह्माग्नी अन्तरागतिरिति ॥ त्रिःपरिणीताम्प्राजापत्यꣳ हुत्वा ॥ त्रिः परिणीतां सतीं कुमारीम्प्राजापत्यं प्रजापतिदेवताकहोमं कृत्वा त्रिर्ग्रहणमितरथावृत्तिव्युदासार्थम् उक्तं हि परिभाषायाम् विवृत्यावृत्य वेतरथावृत्तिरिति ॥ अत्राचारात्तूष्णीञ्चतुर्थम्परिक्रमणङ्कुरुत इति वासुदेवगङ्गाधरहरिहररेणुदीक्षिताः ॥ इतिश्रीत्रिरग्निचित्सम्राट्स्थपति श्रीवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये प्रथमकाण्डे सप्तमीकण्डिका ॥ ७ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ अथैनामुदीचीꣳ सप्तपदानि प्रक्रामयति एकमिषे द्वे ऊर्ज्जे त्रीणि रायस्पोषाय चत्वारिमायो भवाय पञ्च पशुभ्यः षडृतुभ्यः सखे सप्तपदा भव सामामनुव्रता भव ॥ १ ॥ विष्णुस्त्वानयत्विति सर्वत्रानुषजति ॥ २ ॥ निष्क्रमणप्रभृत्युदकुम्भꣳ स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवति ॥ ३ ॥ उत्तरतएकेषाम् ॥ ४ ॥ ततएनाम्मूर्द्धन्यभिषिञ्चति आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमिति ॥ ५ ॥ आपोहिष्ठेति च तिसृभिः ॥ ६ ॥ अथैनाꣳ सूर्य-

मुदीक्षयति तच्चक्षुरिति ॥ ७ ॥ अथास्यैदक्षिणाꣳ समधिहृदय-
मालभते ममव्रते ते हृदयं दधामि मम चित्तमनुचित्तन्ते
अस्तु मम वाचमेकमना जुषस्वप्रजापतिष्ट्वानियुनक्तु मह्य-
मिति ॥ ८ ॥ अथैनामभिमन्त्रयते सुमङ्गलीरियं वधूरिमाꣳ
समेत पश्यत सौभाग्यमस्यैदत्वायाथास्तं विपरेतनेति ॥
९ ॥ तांदृढ पुरुषउन्मथ्यप्रागवोदग्वाऽनुगुप्तआगारआनडुहेरो-
हिते चर्मण्युपवेशयति इहगावो निषीदन्त्विहाश्वा इह पू-
रुषाः । इहों सहस्रदक्षिणोयज्ञइह पूषानिषीदन्त्विति ॥ १० ॥
ग्रामवचनं च कुर्युः ॥ ११ ॥ विवाहश्मशानयोर्ग्रामं प्रविशता-
दितिवचनात् ॥ १२ ॥ तस्मात्तयोर्ग्रामः प्रमाणमिति श्रुतेः ॥ १३ ॥
आचार्यायवरन्ददाति ॥ १४ ॥ गौर्ब्राह्मणस्यवरः ॥ १५ ॥
ग्रामो राजन्यस्य ॥ १६ ॥ अश्वोवैश्यस्य ॥ १७ ॥ अधिरथꣳ
शतन्दुहितृमते ॥ १८ ॥ अस्तमिते ध्रुवं दर्शयति । ध्रुवमसि
ध्रुवन्त्वापश्यामि ध्रुवैधिपोष्येमयि मह्यन्त्वादाद्बृहस्पतिर्म-
यापत्याप्रजावतीसंजीवशरदः शतमिति ॥ १९ ॥ सा यदि न
पश्येत्पश्यामीत्येव ब्रूयात् ॥ २० ॥ त्रिरात्रमक्षारालवणाशि-
नौस्यातामधः शयीयाताꣳ संवत्सरं न मिथुनमुपेयातान्द्वा-
दशरात्रꣳ षड्रात्रन्त्रिरात्रमन्ततः ॥ २१ ॥ ॥ * ॥ ॥ ८ ॥

कर्कः । अथैनामुदीचीꣳ सप्तपदानि प्रक्रामयत्येकमिषे द्वे ऊर्ज्जे त्रीणि रायस्पोषाय चत्वारि मायोभवाय पञ्चपशुभ्यः षड्ऋतुभ्यः सखे सप्तपदा भव सामामनुव्रता भव विष्णुस्त्वा नयत्विति ॥ एभिर्मन्त्रैः प्रतिमन्त्रम् विष्णुस्त्वानयत्विति च सर्वत्रानुषङ्गः तुल्ययोगित्वात्साकाङ्क्षत्वाच्च पूर्वमन्त्राणाम् ॥ निष्क्रमणप्रभृत्युदकुम्भꣳ स्कन्धेकृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवति ॥ निष्क्रमणकालादारभ्योदकुम्भं स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतस्तिष्ठेदन्यः उत्तरत एकेषामाचार्याणाम्मतम् ततश्च विकल्पः ॥ तत एनाम्मूर्द्धन्यभिषिञ्चत्यापः शिवाः शिवतमा इति ॥ अनेन मन्त्रेणैनां वधूं शिरस्यभिषि-

ऋति ॥ आपोहिष्ठेति च तिसृभिः ॥ चशब्दात्त्रिभिरभिषेकः ॥ अथैनाꣳ सूर्य-मुदीक्षयति तच्चक्षुरिति ॥ उदीक्षयतीति कारितत्वादध्येषणा सूर्यमुदीक्षस्वेति ॥ तच्चक्षुरित्यनेन मन्त्रेणोदीक्षते ॥ अथास्यै दक्षिणाꣳ समधिहृदयमालभते ममव्रतेत इति ॥ अस्या वध्वा दक्षिणांसमधिबाहुन्नीत्वा हृदयमालते ममव्रते त-इत्यनेन मन्त्रेण ॥ अथैनामभिमन्त्रयते सुमङ्गलीरियमिति ॥ अनेन मन्त्रेण ॥ तान्दृढपुरुष उन्मथ्य प्राग्वोदग्वाऽनुगुप्तआगारआनडुहे रोहिते चर्मण्यु-पवेशयतीहगावोनिषीदन्त्विति ॥ तामिति वधूम् उन्मथ्योत्क्षिप्य प्राच्या-न्दिश्युदीच्यां वाऽनुगुप्तागारे देशे आनडुहे रोहिते चर्मणि उपवेशयतीहगाव इत्य-नेन मन्त्रेण ॥ ग्रामवचनं च कुर्युर्विवाहश्मशानयोः ॥ कुत एतत् ग्रामम्प्रवि-शतादिति वचनात् ॥ तस्मात्तयोर्ग्रामः प्रमाणमिति श्रुतेः ॥ तयोर्विवाहश्मशा-नयोः । श्रुतिग्रहणंच ग्रामवचनप्रामाण्यज्ञापनार्थम् ॥ ग्रामशब्देन किमभिधीयत इति चेत् ग्रामम्प्रविशतादितिवचनात् स्त्रियो ग्रामशब्देनाभिधीयन्ते । ताश्च यत्स्मरन्ति तदपि कर्तव्यमिति ॥ आचार्याय वरन्ददाति ॥ वरशब्दार्थज्ञापना-याह ॥ गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वोवैश्यस्याधिरथꣳ शत-न्दुहितृमते ददातीत्यनुवर्तते ॥ दुहितृमांश्च यस्य दुहितर एव सन्ति न पुत्रास्तस्मै रथादिकं गवां शतन्दत्वा दुहितरं तस्योद्वहेत् ॥ प्रतिषिद्धाह्यसौ ना-भ्रातृकामुपयच्छेदिति वचनात्तत्परिक्रयायाधिरथदानम् ॥ अस्तमिते ध्रुवन्दर्श-यति ध्रुवमसीति ॥ अनेन मन्त्रेण कारितार्थे चायम्मन्त्रः ॥ पश्यामीत्यश्रान्त-र्भूतो णिच् ॥ यदुक्तम्भवति दर्शयामीति तदुक्तम्भवति पश्यामीति मन्त्रोऽप्येव-मेव व्यवस्थितः ॥ ध्रुवैधिपोष्येमयिमह्यन्त्वादाद्बृहस्पतिर्मया पत्या प्रजावती सञ्जीवशरदः शतमिति कुमार्य्यावोच्यते ॥ सा यदि न पश्येत्पश्यामीत्येवब्रू-यात् ॥ न तु न पश्यामीति ॥ त्रिरात्रमक्षारालवणाशिनौ स्याताम् ॥ वरवध्वौ ॥ अधः शयीयाताम् ॥ खट्वाद्युदासार्थोऽयमधः शब्दो नास्तरणव्युदासार्थः ॥ संवत्सरन्नमिथुनमुपेयातां द्वादशरात्रꣳ षड्रात्रन्त्रिरात्रमन्ततः ॥ ८ ॥

जयरामः ॥ अथेति परिणयानन्तरम् एकमिषे इत्येभिर्मन्त्रैः प्रतिमन्त्रं विष्णुस्त्वा नयत्विति सर्वत्राऽनुषजति साकाङ्क्षत्वात् तुल्ययोगित्वाच्च पूर्वमन्त्रा-णाम् ॥ अथ मन्त्रार्थः तत्र सर्वत्र प्रजापतिर्यजुर्लिङ्गोक्ताः प्रक्रामणे ॥ इषे अन्नाय

ऊर्जे बलाय । रायस्पोषाय धनपुष्ट्यै । मायः सुखन्तस्य भवः उत्पत्तिः पश्वादिभ्यः तत्तत्सुखाय । सखे इहामुत्रमिश्रसात्वं सप्तपदा भूरादिसप्तलोकप्रख्याता भव मामनुव्रता अनुवर्तिनी च भव निष्क्रमणप्रभृति निष्क्रमणकालादारभ्योदकुम्भं स्कन्धे कृत्वा अग्नेर्दक्षिणतस्तिष्ठेदन्यः उत्तरतः एकेषाम्मतम् अतोविकल्पः ॥ तत उदकुम्भाज्जलं गृहीत्वा एनां कन्यां मूर्द्धनि वरोऽभिषिञ्चति आपः शिवाइति मन्त्रेण ॥ आपोहिष्ठेति च इति चकारात् त्रिभिरप्यभिषेकः ॥ अथमन्त्रार्थः आपः शिवाइति प्रजापतिर्यजुरापोऽभिषेचने ॥ याः आपः शिवाः कल्याणहेतवः शिवतमाः अतिशयाभ्युदयकारिण्यः शान्ताः सुखकर्त्र्यः शान्ततमाः परमानन्ददात्र्यः ता आपः ते तव भेषजम् आरोग्यम् कृण्वन्तु कुर्वन्तु ॥ आपोहिष्ठेत्यादेः सिन्धुद्वीपो गायत्री आपोमार्जने ॥ अथैनामुदीक्षयतीति कारितार्थत्वाद्वरस्याध्येषणा सूर्यमुदीक्षस्वेति ॥ ततश्च तच्चक्षुरिति मन्त्रेणोदीक्षते कन्या ॥ तत्र दध्यङ्ङाथर्वणः पुरउष्णिक् सूर्यस्तदीक्षणे ॥ अथास्यै अस्याः वध्वाः दक्षिणांसमधि दक्षिणांसस्योपरि स्वहस्तन्नीत्वा तस्या हृदयमालभते स्पृशति वरो ममव्रते इति मन्त्रेण ॥ अस्यार्थः ॥ तत्र परमेष्ठीत्रिष्टुप् प्रजापतिर्हृदयालम्भे । हे कन्ये इत्यध्याहारः ममव्रते शास्त्रविहितनियमादौ ते तव हृदयं मनः बृहताम् मरीच्यादीनां पतिर्बृहस्पतिः ब्रह्मा दधातु धारयतु किञ्च ममचित्तमनु ममचित्तानुकूलं ते तव चित्तमस्तु ॥ त्वं च मम वाचं वचनमेकमना अव्यभिचारिमनोवृत्तिर्जुषस्व हृष्टचित्तादरेण कुरुष्व ॥ त्वा त्वां च स एव बृहस्पतिर्मह्यंमदर्थम्मामप्रसादयितुमित्यर्थः नियुनक्तु नियोजयतु ॥ अथैनां वधूं वरोऽभिमन्त्रयते सुमङ्गलीरिति मन्त्रेण ॥ अस्यार्थः ॥ तत्र प्रजापतिरनुष्टुप्विवाहाधिष्ठात्र्योऽभिमन्त्रणे ॥ हेविवाहदेवताः इयंवधूः सुमङ्गलीः शोभनमङ्गलरूपा विसर्गश्छान्दसः अत इमां कन्यां समेत सङ्गच्छत सङ्गत्य च इमां पश्यत मङ्गलदृष्ट्याविलोकयत किञ्च अस्यैकन्यायै सौभाग्यन्दत्वा अस्तं स्वस्वगृहम्प्रति याथ यातेत्यर्थः न विपरेतनविशिष्टमुखतया पराइत न अपगच्छत पुनरपि पुत्रादिमङ्गलमाशास्य पुनरागमनाय व्रजतेत्यर्थः । यद्वा यद्यस्तं याथ तर्हि न विपरेतेति अस्तङ्गृहा इति श्रुतेः तां वधूं दृढपुरुषो दृढाङ्गपुरुषोऽन्यो वरोवा उन्मथ्य उत्थाप्य प्राग्वा पूर्वस्यान्दिशि उदग्वा उत्तरस्याम् अनुगुप्ते वस्त्रादिनाच्छादिते आगारे गृहे तत्र च प्राग्ग्रीवे उत्तरलोम्नि आस्तीर्णे चर्मणि उपवेशयति । इहगावइति मन्त्रेण ॥ अस्यार्थः ॥ तत्र प्रजापतिरनुष्टुप् लिङ्गोक्तोपवेशने

इह कन्यानिवेशने गावः अश्वाः पुरुषाश्च निषीदन्तु वसन्तु ॥ इहपादावृत्तिः कर्तृभेदापेक्षया । किञ्च उपवार्थे । इहैव सहस्रङ्गावोदक्षिणायस्यस यज्ञः पूषापुष्टि-करोनिषीदतु । पूषावै सहस्रदक्षिण आसेति श्रुतेः ॥ ग्रामवचनं वृद्धस्त्रीवाक्यं विवाहे मरणे च प्रमाणम् । कुतः । ग्रामम्प्रविशतादिति वचनाद्धेतोः ॥ तस्मादित्यादि श्रुतेश्च ॥ ताश्च यत्स्मरन्ति तत्कर्तव्यमित्यर्थः ॥ आचार्याय वरो वरन्ददाति । वरशब्देन किमभिधीयते तदाह ॥ गौर्ब्राह्मणस्येत्यादि ॥ दुहितृमते यस्य दुहि-तर एव न पुत्रास्तस्मै रथाधिकं गवां शतं दत्वा तद्दुहितरमुद्वहेत् ॥ प्रतिषिद्धा ह्यसौ नाभ्रातृकामुपयच्छेदिति तत्परिक्रयायाधिरथदानम् अस्तमिते इति दिवाविवाहे अस्तमिते सूर्ये ध्रुवमीक्षस्वेति प्रैषेण वरो वधूं प्रेषयति रात्रिविवाहेतु गोदानानन्त-रमेव । सा ध्रुवमसीति मन्त्रस्य वरपठितस्यान्ते समीक्षते कारितार्थैचाऽयम्मन्त्रः ॥ कारयिताचात्र वर एव मन्त्रलिङ्गात् अथ मन्त्रार्थः . तत्र परमेष्ठी पङ्क्तिः प्रजापतिरीक्षणे ॥ हेवधु त्वं ध्रुवं ध्रुवा शाश्वती असि भवसि यतस्त्वा त्वां ध्रुवं तारकाविशेषं पश्यामि दर्शयामि अत्रान्तर्भूतोणिच्ज्ञेयः अतस्त्वं मयि ध्रुवा शाश्वती पोष्यापोषणीया मत्प्रजापोष्ट्रीवा एधि भव वर्द्धयेति वा एतदर्थमेव बृहस्पति-र्ब्रह्मा त्वा त्वाम्मह्यमदात् दत्तवान् अतो मयापत्या भर्त्रासह प्रजावती पुत्रपौत्रादि युक्ता शतं शरदो वर्षाणि सम्यक् जीव प्राणिहि सा यदि न पश्यति पश्यामीत्येवं ब्रूयात् नतु न पश्यामीति त्रिरात्रमिति वधूवरौ । अधइति खट्वाव्युदासो नास्त-रणाव्युदासः संवत्सरम्मिथुनन्नोपगच्छेताम् । अन्ततः अत्र संवत्सरादौ त्रिरात्र पक्षोह्यन्तिमः संवत्सरादिविकल्पास्तु शक्त्यपेक्षया व्यवस्थिता ज्ञेयाः संवत्सरादि पक्षाशक्तौ त्रिरात्रपक्षाश्रयेऽपि चतुर्थीकर्मानन्तरम्पञ्चम्यादिरात्रावभिगमनम् चतु-र्थीकर्मणः प्राक्तस्या भार्यात्वमेव नोत्पन्नं विवाहैकदेशत्वाच्चतुर्थीकर्मणः ॥ ८ ॥

हरिहरः । अथैनामुदीचीꣳ सप्तपदानि प्रक्रामयत्येकमिषेद्वेऊर्जे त्री-णिरायस्पोषाय चत्वारिमायो भवाय पञ्चपशुभ्यः षडृतुभ्यः सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वानयत्विति सर्वत्रानुषजति ॥ अथ प्रा-जापत्यहोमानन्तरमेनां वधूम् उदीचीमुदङ्मुखीम् सप्तपदानि प्रक्रामयति । सप्त प्रक्रमान् दक्षिणपादेन कारयति उत्तरोत्तरं वरः कथम् भूताम् त्रिः परिणीताम् त्रीन्वारान् अग्नेः प्रादक्षिण्येनानीतामिति व्यवहितेन सम्बन्धः कुतः पाठक्रमादर्थक्रमो बलीयानिति न्यायात् । एकमिष इत्यादिभिः सप्तभिर्मन्त्रैः तद्यथा एकमिषे

विष्णुस्त्वानयत्विति वरेणोक्ते मन्त्रे वधूरेकम्पदमुदग्ददाति । तथा द्वे ऊर्जे विष्णुस्त्वानयत्विति मन्त्रान्ते द्वितीयम् त्रीणि रायस्पोषाय विष्णुस्त्वानयत्वित्युक्ते तृतीयम् । चत्वारि मायोभवाय विष्णुस्त्वानयत्वित्युक्ते चतुर्थम् । पञ्च पशुभ्यो विष्णुस्त्वानयत्वित्युक्ते पञ्चमम् । षडृतुभ्यो विष्णुस्त्वानयत्वित्युक्ते षष्ठम् सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वानयत्वित्युक्ते सप्तमम् । विष्णुस्त्वानयत्वित्येतावन्मन्त्रभागम् सर्वत्रैकमिष इत्यादिसर्वेषु मन्त्रेषु अनुषजति संबध्नाति ॥ **निष्क्रमणप्रभृत्युदकुम्भꣳ स्कन्धेकृत्वादक्षिणतोऽग्नेर्वाग्यतः स्थितोभवत्युत्तरतएकेषाम् ॥** निष्क्रमणप्रभृति पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामतीत्यादित आरभ्य कश्चित्पुरुषो जलपूर्णं कलशं स्कन्धे निधाय वधूवरयोः पृष्ठत आगत्याग्नेर्दक्षिणस्यान्दिशि मौनी स्थित आस्ते केषाञ्चित्पक्षे उत्तरतः ॥ **तत एनां मूर्द्धन्यभिषिञ्चत्यापः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्तेकृण्वन्तु भेषजमित्यापोहिष्ठेति च तिसृभिः ॥** ततस्तस्मात्स्कन्धस्थितादुदकुम्भादाचारादाम्रादिपल्लवसहितेन हस्तेन जलमादायैनां वधूम् मूर्द्धनि शिरस्यभिषिञ्चति वरः आपः शिवा इत्यादिना भेषजमित्यन्तेन मन्त्रेण पुनस्तथैवोदकमादाय आपोहिष्ठेत्यादि आपोजनयथाचन इत्यन्ताभिस्तिसृभिर्ऋग्भिरभिषिञ्चतीति चकारादनुषज्यते ॥ **अथैनाꣳ सूर्यमुदीक्षयति तच्चक्षुरिति ॥** अथाभिषेकादुपरि सूर्यमुदीक्षस्वेति प्रैषेण सूर्यमेनां वधूं वर उदीक्षयति सूर्यनिरीक्षणङ्कारयतीत्यर्थः ॥ साच वरप्रेषिता सती तच्चक्षुरितिमन्त्रेण स्वयम्पठितेन सूर्यन्निरीक्षते दिवाविवाहपक्षे ॥ **अथास्यैदक्षिणाꣳ समधिहृदयमालभते ॥** अथ सूर्येक्षणानन्तरमस्यै इति षष्ठ्यर्थे चतुर्थी ॥ अस्या वध्वाः दक्षिणांसमधि दक्षिणस्य स्कन्धस्योपरि हस्तन्नीत्वा तस्याहृदयमालभते वरः स्पृशति ॥ **ममव्रते तेहृदयं दधामिमम चित्तमनुचित्तन्ते अस्तु । मम वाचमेकमनाजुषस्व प्रजापतिष्ट्वानियुनक्तु मह्यमिति ॥** अनेन मन्त्रेण ॥ **अथैनामभिमन्त्रयते । सुमङ्गलीरित्यादि विपरेतनेत्यन्तं सूत्रम् ॥** अथ हृदयालम्भनानन्तरमेनां वधूम् वरोऽभिमन्त्रयते । सुमङ्गलीरित्यादिना मन्त्रेण अत्र शिष्टसमाचारात् उत्तरत आयतना हि स्त्रीतिश्रुतिलिङ्गाच्च वधूं वरस्य वामभागे उपवेशयति ॥ **तान्दृढपुरुषउन्मथ्यप्राग्वोदग्वाऽनुगुप्त आगार आनडुहे रोहिते चर्मण्युपवेशयति । इह गावइति ॥** ततस्तां वधूं दृढपुरुषः बलवान् कश्चित्पुमानुन्मथ्योत्थाप्य प्राक् पूर्वस्यान्दिशि उदक् उदीच्यां वा दिशि पूर्वक-

ल्पिते अनुगुप्ते सर्वतः परिवृते आगारे गृहे तत्र च पूर्वमास्तीर्णे आनडुहे आर्षभे रोहिते लोहितवर्णे चर्मणि अजिने प्राग्ग्रीवे उत्तरलोम्नि उपवेशयति इह गाव इत्यादिना निषीदन्त्विति अस्य मन्त्रस्य पाठान्ते । केचन जामातैव दृढपुरुष इत्याहुः तत्पक्षे जामातैव वधूमुत्क्षिप्य मन्त्रमुक्त्वा चर्मण्युपवेशयति ततं आगत्य यथास्थानमुपविश्य ब्रह्मणाऽन्वारब्धः स्विष्टकृद्धोमं विधाय संस्रवप्राश्य ब्रह्मणे पूर्णपात्रवरयोरन्यतरन्दक्षिणात्वेन दत्वा स्वकीयाचार्याय ब्राह्मणः परिणेता गां वरन्ददाति । क्षत्रियश्चेद्वरस्तदा ग्रामन्ददाति । वैश्यश्चेदश्वम् । **अधिरथꣳ शतन्दुहितृमते** ॥ यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत ताङ्कन्याम्पुत्रिकाधर्मशङ्कयेति मनुवचनात् ॥ अभ्रातृमतीपरिणयनम्प्रतिषिद्धम् तदतिक्रम्य यदिकश्चित्तामुद्वहेत् तदा तस्याः पुत्रिकात्वदोषपरिहाराय च एकेन रथेन अधिकं गवां शतं तत्पित्रे दत्वा उद्वहेत् ॥ **ग्रामवचनं च कुर्युः** ॥ अत्र विवाहे ग्रामशब्दवाच्यानां स्वकुलवृद्धानां स्त्रीणां श्मशाने च वाक्यं कुर्युः ॥ अङ्कुरार्पण हरिद्राक्षतचन्दनादि धर्मप्रतिपादकम् ॥ कस्मात् विवाहश्मशानयोर्ग्रामं प्राविशतादितिवचनात् तस्मात्तयोर्ग्रामःप्रमाणमितिश्रुतेः विवाहे च श्मशाने च ग्रामम् स्वकुलवृद्धाः स्त्रियः प्राविशतात् शास्त्रातिरिक्तं कर्तव्यमाचारम्पृच्छेदिति वचनात् इति स्मृतेः ॥ न केवलं स्मृतेः श्रुतेश्चापि का सा श्रुतिः ॥ **तस्मात्तयोर्ग्रामः प्रमाणमिति** ॥ यतः स्वकुलवृद्धाः स्त्रियः पूर्वपुरुषानुष्ठीयमानं सदाचारं स्मरन्ति तस्मात्तयोर्विवाहश्मशानयोर्ग्रामः प्रमाणम् सदाचारबोधकमित्यर्थः ॥ **आचार्यायवरन्ददाति** ॥ वरः स्वकीयाचार्याय वरन्ददाति । वरशब्दार्थमाह ॥ **गौर्ब्राह्मणस्य वरो ग्रामोराजन्यस्याश्वोवैश्यस्य** ॥ **अस्तमितेध्रुवन्दर्शयति** ॥ दिवा विवाहश्चेत्तदा अस्तमिते सूर्ये अमुकि ध्रुवमीक्षस्वेति प्रैषेण वधूम् ध्रुवन्तारकाविशेषं दर्शयति । रात्रौ विवाहश्चेत्तदा वरदानानन्तरमेव । तद्यथा ध्रुवमसीत्यादिं सञ्जीव शरदः शतमित्यन्तं वरेण पाठितेन मन्त्रेण वधूर्ध्रुवमीक्षते ॥ **सा यदि न पश्येत्पश्यामीत्येव ब्रूयात्** ॥ सा वधूर्यदि ध्रुवन्नेक्षेत तथापि पश्यामीत्येवं वदेत् न विपरीतम् ॥ **त्रिरात्रमक्षारालवणाशिनौस्यातामधः शयीयाताम्** ॥ विवाहदिनमारभ्य त्रिरात्रम् त्रीणि अहोरात्राणि अक्षारालवणाशिनौ अक्षारं च अलवणं च अक्षारालवणं तदश्नीत इत्येवं शीलौ अक्षारालवणाशिनौ स्याताम् भवेताम् । अधः आस्तरणास्तृतायां भूमौ न खट्वायां शयीयाताम्

स्वपेताम् ॥ संवत्सरन्नमिथुनमुपेयातान्द्वादशरात्रꣳ षड्रात्रं त्रिरात्रमन्ततः ॥
संवत्सरं वर्षं यावन्मिथुनम् अभिगमनं नोपेयातां नोपगच्छेताम् । अथवा द्वादश रात्रम् अथवा षड्रात्रम् यद्वा त्रिरात्रम् अन्ततः संवत्सरादिपक्षाणामन्ते त्रिरात्रमित्यर्थः ॥ संवत्सरादिविकल्पास्तु शक्त्यपेक्षया व्यवस्थिता विज्ञेयाः संवत्सरादिपक्षाशक्तौ त्रिरात्रपक्षाश्रयणेऽपि चतुर्थीकर्मानन्तरं पञ्चम्यादिरात्रावभिगमनम् चतुर्थीकर्मणः प्राक् तस्या भार्यात्वमेव न संवृत्तम् विवाहैकदेशत्वाच्चतुर्थीकर्मणः ॥

अथ पद्धतिः ॥ अथ प्रकृतं विवाहकर्माह ॥ तत्र पुण्येऽहनि मातृपूजापूर्वकं वरस्य पिता स्वपितृभ्यः पुत्रविवाहनिमित्तं नान्दीमुखं श्राद्धं विधाय वैवाह्यं पुत्रं मङ्गलतूर्यवेदघोषेण कन्यापितृगृहमानयति कन्यापिता च मातृपूजापूर्वकं कन्याविवाहनिमित्तकं स्वपितृभ्यो नान्दीमुखं श्राद्धं विधाय मण्डपद्वारमागतं वरमभ्युत्थानादिभिः प्रतीक्ष्य मधुपर्केणार्चयेत् ॥ तद्यथा अर्चयिता आसनमानाय्य तस्यासनस्य पश्चात्तिष्ठन्तमर्घ्यम्प्रति साधुभवानास्तामर्चयिष्यामो भवन्तमिति ब्रवीति । तत आचार्यस्तत्सम्बन्धिनः पुरुषाः विष्टरम्पद्यम्पादार्थमुदकमर्घमाचमनीयम्मधुपर्कन्तत्समीपमानयन्ति ॥ अथार्चयिता एकं विष्टरमादाय तिष्ठति अन्यः कश्चिद्ब्राह्मणो विष्टरो विष्टरो विष्टर इति श्रावयति । प्रतिगृह्यतामित्यर्घ्यस्य हस्तयोर्ददाति । अर्घ्यश्च वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि यो माकश्चाभिदासतीत्यनेन मन्त्रेण विष्टरमासने निधाय तदुपर्युपविशति । ततोऽन्येन पाद्यम्पाद्यम्पाद्यमिति श्राविते पादार्थमुदकमर्चयिता अर्घ्याय प्रतिगृह्यतामित्युक्त्वा समर्पयति ॥ अथार्घ्यस्तत्पात्रम्भूमौ निधायाञ्जलिना जलमादाय विराजोदोहोऽसि विराजोदोहमशीयमयि पाद्यायै विराजोदोह इति मन्त्रेण ब्राह्मणो दक्षिणम्पादं प्रक्षाल्य तथैव वामं प्रक्षालयति ॥ क्षत्रियादयस्त्वन्ये सव्यम्पादम्प्रक्षाल्यानेनैव विधिना दक्षिणम्प्रक्षालयन्ति । ततः पुनर्विष्टरो विष्टरो विष्टर इत्यन्येन श्राविते प्रतिगृह्यतामिति यजमानदत्तं विष्टरम्प्रतिगृह्य वर्ष्मोऽस्मीति मन्त्रेण पादयोरधस्तान्निदधाति । ततोऽर्घोऽर्घोऽर्घ इत्यन्येन श्राविते‍ऽर्चयिता प्रतिगृह्यतामित्युक्त्वा अर्घ्यायार्घम् ॥ आपः स्थ युष्माभिः सर्वान्कामानवाप्रवानीति मन्त्रं पठितवते प्रयच्छति । अर्घ्यश्चार्घम्प्रतिगृह्य मूर्द्धपर्यन्तमानीय समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टास्माकं वीरामापरासेचिमत्पय इत्यनेन मन्त्रेण निनयन्नभिमन्त्रयते । अथाचमनीयमाचमनीयमाचमनीयमित्यन्येन श्राविते‍ऽर्चयिताऽर्घ्याय प्रतिगृह्यतामित्युक्त्वा आचमनीयम्प्रयच्छति । अर्घ्यश्च प्रतिगृह्य आमागन्यशसा

सꣳसृज वर्चसा तस्मा कुरु प्रियं प्रजानामधिपतिम्पशूनामरिष्टिन्तनूनामिति मन्त्रेण सकृदाचम्य स्मार्तमाचमनं करोति ॥ अथ मधुपर्कोमधुपर्कोमधुपर्क इत्यन्येनोक्ते प्रतिगृह्यतामिति यजमानेनोक्ते यजमानहस्तस्थितमुद्घाटितम्मधुपर्कं मित्रस्य त्वा चक्षुषा प्रतीक्षे इति मन्त्रेण प्रतीक्ष्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहु-भ्याम्पूष्णो हस्ताभ्याम् प्रतिगृह्णामीति मन्त्रेणाञ्जलिना प्रतिगृह्य सव्ये पाणौ निधाय दक्षिणस्य पाणेरुपकनिष्ठिकयाऽङ्गुल्या नमः श्यावास्यायान्नशने यत्तआविद्धन्तत्ते निष्कृन्तामीति मन्त्रेण सकृदालोड्य पुनर्मन्त्रेणैवं द्विरालोडयति अनामि-काङ्गुष्ठाभ्यामादाय बहिर्निक्षिप्य पुनरेवं द्विर्वारमालोडनं निरुक्षणं च करोति ॥ ततो यन्मधुनो मधव्यम्परमꣳ रूपमन्नाद्यम् तेनाहम्मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति मन्त्रेण अनामिकाङ्गुष्ठाभ्यामादाय त्रिः प्राश्नाति ॥ मधुव्वाताऋतायत इत्यादिभिस्तिसृभिर्ऋग्भिः प्रत्यृचं त्रिः प्राश्नाति वा प्राशित-शेषं पुत्राय शिष्याय वा दद्यात्सर्वं वा भक्षयेत् पूर्वस्यान्दिशि असञ्चरे प्रदेशे वा क्षिपेत् । ततः स्मार्त्तेन विधिनाऽऽचम्य वाङ्मआस्येऽस्त्विति कराग्रेण मुखं स्पृशति नसोर्मे प्राणोऽस्त्विति दक्षिणवामे नासारन्ध्रे अक्ष्णोर्मे चक्षुरस्त्विति दक्षिणोत्तरे चक्षुषी कर्णयोर्मे श्रोत्रमस्त्विति दक्षिणं श्रोत्रं संस्पृश्य पुनः कर्णयोर्मे श्रोत्रमस्त्विति वामम् एवम् बाह्वोर्मे बलमस्त्विति दक्षिणोत्तरौ बाहू ऊर्वोर्मे ओजोऽस्त्विति युगपदूरू अरिष्टानि मेऽङ्गानि तनूस्तन्वामे सह सन्त्विति शिरः-प्रभृतीनि पादान्तानि सर्वाण्यङ्गान्युभाभ्यां हस्ताभ्यामालभेत । एवमाचान्तोदकाय खड्गहस्तो यजमानः गौर्गौर्गौरालभ्यतामिति ब्रूयात् ततोऽर्घ्यः मातारुद्राणान्दु-हितावसूनाꣳस्वसादित्यानाममृतस्यनाभिः प्रनुवोचञ्चिकितुषे जनायमागामनागा-मदितिंवधिष्ट ममचामुकशर्मणो यजमानस्य च पाप्मानꣳहनोमीति गवालम्भपक्षे प्रतिब्रूयात् उत्सर्गपक्षेतु मातारुद्राणामित्यादि पाप्माहत ओमित्युपांशूक्त्वा उत्सृ-जत तृणान्यत्त्वित्युच्चैः प्रतिब्रूयात् ततो वरो बहिःशालायामीशान्यान्दिशि चतु-र्हस्तायां सिकताच्छन्नायां वेदिकायां लौकिकं निर्मथ्यं वाऽग्निं स्थापयित्वा पश्चादग्ने-स्तृणपुलकं कटं वा स्थापयेत् । अथ कन्यापिता वस्त्रचतुष्टयं वराय प्रयच्छति वरश्च तेषु मध्ये जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपा वा शतं च जीव शरदः सुवर्चारयिं च पुत्राननुसंव्ययस्वायुष्मतीदम्परिधत्स्ववास इत्यनेन मन्त्रेण एकं कुमारीम्परिधापयति । द्वितीयं या अकृन्तन्नवयं या अतन्वत याश्च देवीस्तन्तूनभितोततन्थ तास्त्वादेवीर्जरसे संव्ययस्वायुष्मतीदम्परिधत्स्व वास इति

मन्त्रेण । स्वयंच परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूचीरायस्पोषमभिमंव्ययिष्य इति मन्त्रेण एकम्परिधत्ते । यशसामाद्यावा-पृथिवी यशसेन्द्राबृहस्पती यशोभगश्चमा विदद्यशोमाप्रतिपद्यतामिति द्वितीयम् ॥ अथ कुमार्याः पिता एतौ परिहिताहतसदशवस्त्रौ कन्यावरौ समञ्जयति परस्परं समञ्जेथामिति प्रैषेण ततो वरः कन्यासम्मुखीभूतः समञ्जन्तु विश्वेदेवाः समा-पोहृदयानि नौ सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ इतिमन्त्रम्पठति ॥ अथ कन्यादानं करोति पित्रादिःकन्यादानाधिकारी । तत्र वाक्यम् अमुकगोत्र-स्यामुकप्रवरस्यामुकशर्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौ-त्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्राय इति वरपक्षे । अमुकगोत्रस्या-मुकप्रवरस्यामुकशर्मणः प्रपौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्रीमिति कन्यापक्षे । एवमेव पुनर्द्विवारम-भिहिते अथ कन्यापिता कुशजलाक्षतपाणिः उदङ्मुखोपविष्टः प्राङ्मुखोपविष्टाय वराय प्रत्यङ्मुखोपविष्टां कन्याम् । अमुकगोत्रायामुकप्रवरायामुकशर्मणे ब्राह्म-णाय इति ब्राह्मणवरपक्षे इतरवरपक्षेतु वर्मणे अमुकगुप्तायामुकदासायेतिविशेषः अमुकगोत्राममुकप्रवराममुकनाम्नीमिमाङ्कन्याम् सालङ्काराम् प्रजापतिदैवताम् पुराणोक्तशतगुणीकृतज्योतिष्टोमातिरात्रसमफलप्राप्तिकामः कन्यादानफलप्राप्तिका-मो वा भार्यात्वेन तुभ्यमहं सम्प्रददे इत्युक्त्वा सकुशाक्षतजलं कन्यादक्षिणहस्तं वरदक्षिणहस्ते दद्यात् वरश्च द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्वित्यनेन मन्त्रेण तां प्रतिगृह्णीयात् अथ कोऽदादिति कामस्तुतिम्पठेत् । ततः कृतैतत्क-न्यादानप्रतिष्ठासिध्यर्थं सुवर्णं गोमिथुनञ्च दक्षिणान्दद्यात् । अत्राऽऽचारात् अन्य-दपि *यौतकत्वेन सुवर्णरजतताम्रगोमहिष्यश्वग्रामादि कन्यापिता यथासम्भवन्द-दाति अन्येऽपि बान्धवादयः यथासम्भवं यौतकं प्रयच्छन्ति । केचन यौतकं होमान्ते प्रयच्छन्ति अत्र देशाचारतो व्यवस्था एवंपित्रादत्तां गृहीत्वा प्रति-ग्रहस्थानान्निष्क्रामति । यदैषिमनसादूरंदिशोऽनुपवमानोवा । हिरण्यपर्णोवैकर्णः सत्वामन्मनसांकरोत्वमुकि इत्यन्तेन मन्त्रेण । अथ निष्क्रमणप्रभृत्येको जलपूर्णक-लशं स्कन्धे निधायाग्नेर्दक्षिणतो वाग्यत ऊर्ध्वस्तिष्ठति उत्तरतो वा अभिषेकपर्य-न्तम् ॥ अथैनौ वधूवरौ अग्निसमीपमागतौ कन्यापिता परस्परं समीक्षेथामिति प्रैषेण समीक्षयति ततः प्रेषितोवरः समीक्षमाणां कन्यां समीक्षमाणः अघोरचक्षुर-

* कन्यादानमारभ्य चतुर्थीकर्मपर्यन्तं विवाहशब्देनोच्यते तन्मध्ये कन्ययास्वपित्रादिभ्योयद्धनम्प्राप्तन्तद्यौतकम् ॥

तत्र मनुः । अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च । पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ चन्द्रिकायां बौधायनः । सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ॥ हेमाद्रौ पाद्मे । प्रेतशय्याप्रतिग्राही पुनः संस्कारमर्हति । वृद्धमनुः । जीवन् यदि समागच्छेद् घृतकुम्भे निमज्य च । उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेदिति । मिताक्षरायां पराशरः । यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः । अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति । स चरेत् त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च ॥ जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् । शातातपः । लशुनं गृञ्जनं जग्ध्वा पलाण्डुञ्च तथा शुनम् । उष्ट्रमानुषकेभाश्वखरासभीक्षीरभोजनात् । उपायनं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः । अपरार्कादिसर्वग्रन्थेषु पित्रादिव्यतिरेकेण ब्रह्मचारिणः प्रेतकर्मकरणे पुनरुपनयनमित्युक्तम् । त्रिस्थलीसेतौ । कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् । गण्डकीबाहुतरणात्पुनः संस्कारमर्हति । पराशरः । अजिनं मेखला दण्डो भैक्ष्यचर्या व्रतानि च । निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥ य एकं वेदमधीत्यान्यवेदमध्येतुमिच्छति तस्य पुनरुपनयनमिति हरदत्तः । नेत्यन्ये । सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इत्यापस्तम्बवचनात् । यमः । पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥ इदं च युगान्तरविषयम् । इति पुनरुपनयनम् । त्रुटितानां मेखलादीनां प्रतिपत्तिमाह । मनुः । मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्रास्य विनष्टानि गृहीत्वाऽन्यानि मन्त्रवत् । अथ गर्गमते पदार्थक्रमः । श्राद्धम् । वपनम् । विप्रभोजनम् । बटोरपि । अग्निस्थापनम् । अलङ्कृतस्यानयनम् । पश्चादग्नेरवस्थापनम् । ततो ब्रह्मासनादिबर्हिस्तरणान्तं कर्म । ततो ब्रह्मचर्यमागामिति वाचनम् । ब्रह्मचार्यसानीति च । वासः परिधापयति । मेखलाबन्धनम् । बटोर्मन्त्रपाठः । मन्त्रेण यज्ञोपवीतपरिधानम् । तत आचमनम् । उत्तरीयधारणं मन्त्रेण । दण्डप्रतिग्रहः । दीक्षाबद्धा । अञ्जलिनाऽञ्जलिपूरणमद्भिः । प्रैषपूर्वकं सूर्यावेक्षणम् । हृदयालम्भनम् । दक्षिणहस्तग्रहणादि भूतेभ्यः परिदानान्तम् । ततो हस्तविसर्गः । ततः प्रदक्षिणं परिक्रम्योपवेशनम् । तत आचार्यस्योपयमनादानादिपर्युक्षणान्तम् । आचार्यस्यान्वारम्भो माणवककर्तृकः । तत्र आघारावाज्यभागौ चतुर्दशाहुतयः । संस्रवप्राशनादिदक्षिणादानान्तम् । ततो ब्रह्मचारिशासनं ब्रह्मचार्यसीत्यादि पूर्ववत् । ततो बर्हिर्होमादिब्राह्मणभोजनान्तम् । अथ सावित्रव्रतादेशः । तत्रोपलेपनादिबर्हिस्तरणान्तम् । ततः कुमार

उत्थाय हस्तेनोदकं गृहीत्वाऽग्निमुखो भूत्वाऽग्नेव्रतपते व्रतं चरिष्यामि सावित्र्यं सद्यःकालं तच्छकेयं तन्मे राध्यतामिति व्रतग्रहणं करोति। ततो ब्रह्मचारिण उपवेशनम्। ब्रह्मचारिण आचार्यस्यान्वारम्भः सर्वाहुतिषु । तत उपयमनादानादि आज्यभागान्तम्। ततो वेदाहुतयः षोडश। प्रतिवेदं चतस्रश्चतस्रः। एवं षोडश। ततः प्रजापतये देवेभ्य इत्याद्याः सप्त। ततो महाव्याहृत्यादिस्विष्टकृदन्ता दश। आज्यभागाद्या एताः सप्तत्रिंशदाहुतयो व्रतानामादेशे विसर्गे च होतव्याः। ततः संस्रवप्राशनादि ब्रह्मणे दक्षिणादानान्तम्। तत अथास्मै सावित्रीमन्वाहेत्यादि यथोक्तं सावित्रीप्रदानम्। ततो माणवकस्य तत्सवितुरित्यनेन मन्त्रेण सन्ध्योपासनम्। सन्ध्योपासनान्ते तत्सवितुरित्यनेनैवाग्निपरिचरणम्। तदन्ते गोत्रनामग्रहणपूर्वकं सर्वेषामभिवादनम्। ततो भिक्षाचर्यचरणम्। भिक्षानिवेदनम् भिक्षां भो इत्येवम्। आचार्यस्तु भिक्षां भो इत्येवं भिक्षां स्वीकुर्यात्। ततो ब्रह्मचारी शुचिर्भूत्वा स्वासने उपविशति। ततो बर्हिर्होमादिविप्रभुक्त्यन्तम्। अथानन्तरं सावित्रव्रतवत् सन्ध्योपासनाग्निपरिचरणम्। तत उपलेपनादिबर्हिस्तरणान्तम्। तत उत्थाय हस्तेनोदकं गृहीत्वाऽग्निमभिमुखो भूत्वाऽग्ने व्रतपते व्रतमचारिषं सावित्रं सद्यःफलं तदशकं तन्मे राधीतिमन्त्रेण सावित्रव्रतोत्सर्गं करोति। उपयमनकुशादानादिपर्युक्षणान्तम्। अन्वारम्भः। आघारावाज्यभागौ। वेदाहुतयः षोडश। प्रजापतय इत्याद्याः सप्त। महाव्याहृत्यादिस्विष्टकृदन्ता दश। एवं सप्तत्रिंशदाहुतयः। प्राशनादिविप्रभुक्त्यन्तं पूर्ववत्। सावित्रव्रतादेशे ब्रह्मणे दक्षिणादानान्ते सावित्र्या सन्ध्यावन्दनमग्निपरिचरणं च यत्कृतम् व्रतोत्सर्गे तदभावः। ततः अप्स्वन्तरिति दण्डस्याप्सु प्रक्षेपः। वातो वा इति मेखलाया अ०। वातरꣳहा भवेति यज्ञोपवीतस्या०। नमो वरुणायेति कुमारस्य दधिघृतशर्कराणां प्रत्येकं प्राशनम्। इति सावित्रव्रतोत्सर्गः। अथाग्नेयव्रतम्। तत्रोपलेपनादिबर्हिस्तरणान्तम्। ततो ब्रह्मचारिणो मेखलाबन्धनम्। यज्ञोपवीतधारणम्। दण्डसमर्पणम् ग्रहणं च। मेखलादिषु पूर्वोक्ता एव मन्त्राः। व्रतग्रहणं पूर्ववत्। अग्ने व्रतपत इति। आग्नेयं सांवत्सरिकम् तच्छ०राध्यतामिति। आग्नेयं यथाकालं तच्छके०ध्यतामितीदानीं प्रयोगं कुर्वन्ति। ततः स्वस्थाने उपवेशनम्। आचार्यान्वारम्भः॥ उपयमनादानादिपर्युक्षणान्तम्। आघाराद्याः स्विष्टकृदन्ताः सप्तत्रिंशदाहुतयोऽत्रापि होतव्याः। ततः प्राशनादिब्राह्मणभोजनान्तम्। ततः स्मृत्युक्तं माध्यान्हिकं सन्ध्योपासनम्। ततोऽग्नेः पश्चादुपविश्य पाणिनाऽग्निं परिसमूहतीत्यादि त्र्यायुषकर-

णान्तं यथोक्तम्। तत्र विशेषः। गात्रालम्भने कर्कमतेऽध्याहारः॥ अङ्गानि च म आप्यायन्तामिति गर्गपद्धतौ। त्र्यायुषकरणान्ते शिवो नामेति जपः। यदि बटुर्मेधाकामः स्यात्तदा सदसस्पतिमितित्र्यृचेन मेधां याचते। श्रीकामश्चेदिमम्मे इति श्रियं या०। ततो मेखलास्थान्प्रवरान्प्रदक्षिणोपचारेण स्पृष्ट्वाऽमुकसगोत्रोऽमुकशर्म्माऽहं भो वैश्वानर अभिवादयामि। एवं वरुणाचार्यवृद्धानाम्। भिक्षाचर्यच० गुरवे नि०। अनुज्ञातस्तां स्वीकृत्य मातृहस्ते समर्पयति। बर्हिर्होमादिविप्रभुक्त्यन्तम्। इत्युपनये पदार्थाः। ततः सन्ध्याकालेऽञ्जलिप्रक्षेपान्ते सूर्योपस्थानं वारुणीभिर्ऋग्भिरिमम्मेत्यादिभिः। मित्रःसᳲसृज्येत्यादिभिः प्रातः। उद्वयमित्यादिभिर्मध्याह्ने। ततो दण्डं गृहीत्वाऽग्निपरिचरणम्। मध्याह्ने सायाह्ने च सन्ध्योपासनान्ते प्रत्यहमग्निपरिच०। एके प्रातरप्यग्निपरिचरणमिच्छन्ति। ततो वाग्विसर्गः। पूर्वोक्ता एव ब्रह्मचारिधर्मा ज्ञेयाः। सन्ध्योपासनादीनि स्वस्वकाले कार्याणि तेषां कालातिक्रमे कर्मणां भ्रेषे प्रायश्चित्तमुच्यते। परिसमूहनादि कृत्वाऽन्वग्निरिति मन्त्रेणाग्नेराहरणम्। पृष्टोदिवीति स्थापनम्। ताᳪसवितुर्म्तत्सवितुर्विश्वानि देवेत्यादिभिः सावित्रमन्त्रैस्त्रिभिः प्रज्वालनम्॥ नात्र ब्रह्मोपवेशनादि। पूर्णाहुतिवदाज्यं संस्कृत्यानादिष्टं कार्यम्। अथाग्नेयव्रतस्थितो ब्रह्मचारी समिधाऽग्निन्दुवस्येत्येवमाद्याग्नेयवेदविभागं संवत्सरपर्यन्तं पठित्वा व्रतमुत्सृजति। संवत्सरे पूर्ण आग्नेयव्रतविसर्गः। तत्र परिसमूहनादिविप्रभुक्त्यन्तमाग्नेयव्रतादेशवत् भवति। एतावान्विशेषः। यस्मिन्काले आग्नेयव्रतग्रहणं कृतं तस्मिन्सन्ध्यावन्दनम्। अग्निपरिच०। आग्नेयव्रतविसर्गः। अग्नेव्रतपतेव्रतमचारिषं सांवत्सरिकं तदशकं तन्मेराधीति मन्त्रेण। ततोऽनन्तरमामभिक्षानिवृत्तिः। दण्डादीनामप्सु प्रक्षेपः। व्रतादौ ग्रहणान्तेषाम्। इत्याग्नेयव्रतविसर्गः। अथ शुक्रियव्रतादेशः। तत्रोपलेपनादि बर्हिस्तरणान्तं कृत्वा मेखलायज्ञोपवीतदण्डानां धारणपूर्वकं व्रतग्रहणम्। अग्नि० सि शुक्रियं सांवत्सरिकं तच्छकेयमिति विशेषः। तत उपयमनादिविप्रभुक्त्यन्तमाग्नेयव्रतादेशवत्। शुक्रियवेदव्रतस्थित ऋचं वाचमित्यादि शुक्रियवेदविभागं पठति संवत्सरं यावत्। उत्तमेऽहनि अपराह्णकालान्ते शिशोमुखे त्रिगुणेन पटेन एकस्यान्दिशि बद्धेन नाभिमात्रं यावन्माणवकस्य प्रच्छादनम् मूर्धानमारभ्य ग्रन्थेः शिरस उपरिकरणम्। ततः सावित्र्या वेदशिरसा' हिरण्मयेन पात्रेणेति मन्त्रैरवगुण्ठनम्। एवं प्रच्छादितो ब्रह्मचारी सूर्योदयं यावत्तिष्ठति। रात्रौ ग्रामे वा गोष्ठे वा देवायतने वाऽधः शयनम्। रात्रौ गृहे यदि स्थितिस्तदा व्युष्टायां रात्रौ ग्रामाद्बहिर्गमनम्।

ततोऽवगुण्ठनीविसर्गः । ततोऽदृश्रमस्य । उदुत्यम् । चित्रं देवानामुदितेऽर्के जपः । ततो व्रतस्थाने माणवकमानीय शुक्रियव्रतस्य विसर्गः । तत्र परिसमूहनादिबर्हिस्तरणान्तम् । ततः प्राकृतं सन्ध्योपासनम् । अग्निस्वीकरणम् । ततोऽग्ने व्रत० मचारिषं शुक्रियं सांवत्सरिकं तद०धीति मन्त्रेणोत्सर्गः । उपयमनादानादिब्राह्मणभोजनान्तम् । ततस्ताम्रपात्रे उदकप्रक्षेपः । द्यौः शान्तिरिति शान्तिकरणम् । शान्तिपात्रमवगुण्ठनीयवस्त्रं च गुरवे दद्यात् । ततोऽप्स्वन्तरमृतमित्यादिभिः पूर्ववत्प्रत्यृचं दण्डमेखलायज्ञोपवीतानामप्सु प्रक्षेपः । दधिघृतशर्कराणां नमोवरुणायेति प्रतिमन्त्रं प्राशनम् । ततो वपनम् । व्रतग्रहणस्यादौ सर्वत्र शुक्रियादिषु मेखलायज्ञोपवीतदण्डानां धारणम् । अथौपनिषद्व्रतम् । उपलेपनादिबर्हिस्तरणान्तम् । ततोऽग्ने व्रत० औपनिषदं सांवत्सरिकं तच्छकेयं० राध्यतामिति व्रतग्रहणम् । तत उपयमनादानादिविप्रभुक्त्यन्तम् । औपनिषदे व्रते स्थितो द्वयाह प्राजापत्या इत्याद्यौपनिषदवेदविभागं संवत्सरं यावत्पठति । तत उत्तमेऽहनि निशामुखे अवगुण्ठनीयवस्त्रेणाच्छादनादि । उदिते अदृश्रमस्य । उदुत्तमम् । चित्रन्देवानामिति जपान्तं शुक्रियवत् । ततो व्रतस्थाने माणवकमानीय व्रतविसर्गः । तत्र परिसमूहनादि बर्हिस्तरणान्तं कृत्वा पूर्ववत्सन्ध्योपासनमग्निपरिचरणं च । ततोऽग्ने० व्रतमचारिषमौपनिषदं सांवत्सरिकं तद० तन्मे राधीति व्रतविसर्गः । तत उपयमनादानादिविप्रभुक्त्यन्तम् । ताम्रे उदकप्रक्षेपः ॥ द्यौः शान्तिरिति शान्तिकरणम् भाजनवस्त्रयोराचार्याय दानम् । दण्डादीनामप्सु प्रासनम् । दध्यादीनां प्राशनम् । इत्यौपनिषदं व्रतम् । अथ शौलभव्रतादेशः । तत्र परिसमूहनादिविप्रभुक्त्यन्तमौपनिषदव्रतादेशवत् । व्रतग्रहणे शौलभं सांवत्सरिकमिति प्रयोगः । शौलभिनीनामृचां पाठो व्रते स्थितस्य । अत्राप्युत्तमेऽहनि निशामुखे पटेन प्रच्छादनादि उदिते जपान्तम्पूर्ववत् । ततो व्रतस्थाने माणवकमानीय व्रतविसर्गः । तत्रैवं परिसमूहनादि बर्हिस्तरणान्तम् । ततः सन्ध्योपासनादि । ततो व्रतविसर्गः । अग्ने० रिषं शौलभं सांवत्सरिकं तद०धीति मन्त्रः । तत उपयमनादानादि ब्राह्मणभोजनान्तम् । तत उदकं पात्रे कृत्वा द्यौः शान्तिरिति शान्तिकरणम् । पात्रवस्त्रयोर्गुरवे दानम् । दण्डादीनामप्सु प्रक्षेपः । दधिमधुशर्कराणां नमो वरुणायेति प्रत्यृचं प्राशनम् । ततो वपनम् । इति शौलभम् । अथ गोदानव्रतादेशः । तत्र परिसमूहनादिविप्रभुक्त्यन्तम् । व्रतग्रहणस्यादौ मेखलायज्ञोपवीतदण्डानां धारणम् गोदानं सांवत्सरिकमिति मन्त्रे विशेषः । अस्मिन्व्रते

अवगुण्ठन्यादीनामभावः। त्रिष्ववगुण्ठनशुक्रियादिष्विति सूत्रणात्। ततः संवत्सरे पूर्णे गोदानव्रतविसर्गः। तत्र परिसमूहनादि बर्हिस्स्तरणान्तम्। ततः सन्ध्योपासनादि। अग्नेरयं गोदानं सांवत्सरिकं तदधीति मन्त्रेणोत्सर्गः। उपयमनादि विप्रभुक्त्यन्तं पूर्ववत्। अत्रास्मिन्विसर्गे दण्डमेखलायज्ञोपवीतानामप्सु प्रक्षेपाभावः। आचार्याय गोमिथुनदानम्। समाप्तानि व्रतानि। इति गर्गमते उपनयने पदार्थक्रमो व्रतानि च। इमानि च व्रतानि प्रक्षिप्तसूत्रे पठितानि कर्कमतानुसारिभिरप्यनुष्ठेयानि स्मृत्यन्तरे केषाञ्चित् चत्वारिंशत्संस्कारेषु पाठात्। इति श्री त्रिरग्निचित्सम्राट्स्थपतिश्रीवामनात्मजदीक्षितगदाधरकृते उपनयने पदार्थक्रमः।

अथ वेदारम्भे पदार्थक्रमः। तत्र स्मृतौ। उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्। वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्। कारिकायाम्॥ अप्रसुप्ते हरौ स स्यान्नानध्याये शुभेऽहनि। नास्तङ्गते जीवसिते बाले वृद्धे मलिम्लुचे॥ षष्ठीं रिक्तां शनिं सोमं भौमं हित्वोत्तरोडुषु। मृगादिपञ्चधिष्ण्येषु मूलाश्विन्योः करत्रये। पूर्वासु तिसृषूपेन्द्रभत्रये केन्द्रगैः शुभैः॥ तत्र मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम्। देशकालौ स्मृत्वा यजुर्वेदव्रतादेशं करिष्य इति सङ्कल्पः। ततः पञ्चभूसंस्कारपूर्वकं लौकिकाग्निस्थापनम्। ब्रह्मोपवेशनाद्याज्यभागान्तम्। ततःस्थाल्याज्येनैव जुहोति। अन्तरिक्षाय स्वाहा॥१॥ वायवे० २ ब्रह्मणे० ३ छन्दोभ्यः० ४ प्रजापतये० ५ देवेभ्यः० ६ ऋषिभ्यः० ७ श्रद्धायै० ८ मेधायै० ९ सदसस्पतये० १० अनुमतये० ११ ततो भूराद्याः स्विष्टकृदन्ताः। ततः प्राशनादिदक्षिणादानान्तम्। ततो विघ्नेशं सरस्वतीं हरिं लक्ष्मीं स्वविद्यां च पूजयेत्। यदि ऋग्वेदारम्भस्तदाऽऽज्यभागान्ते पृथिव्यै स्वाहा अग्नये स्वाहेति च हुत्वा ब्रह्मणे स्वाहेत्यादि समानम्। यदि सामवेदारम्भस्तदाऽऽज्यभागान्ते दिवे स्वा० सूर्याय स्वाहेति हुत्वा ब्रह्मणे स्वाहेत्यादि पूर्ववत्। यद्यथर्ववेदारम्भस्तदाऽऽज्यभागान्ते दिग्भ्यः स्वा० चन्द्रमसे स्वाहेति हुत्वा ब्रह्मणे स्वाहेत्यादि यथोक्तम्। यद्येकदा सर्ववेदारम्भस्तदैवम्। आज्यभागान्ते वेदारम्भक्रमेण प्रतिवेदं वेदाहुतिद्वयं द्वयं हुत्वा ब्रह्मणे छन्दोभ्य इत्याहुतिद्वयं हुत्वा प्रजापतय इत्याद्याः सप्त तन्त्रेण जुहुयात्। ततो महाव्याहृत्यादि समानम्। कारिकायाम्। तत्र प्रत्यङ्मुखायोपविष्टायाननमीक्षते॥ वेदारम्भमनुब्रूयाद्यथाशास्त्रमतन्द्रितः। मनुः। ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा। व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः॥ सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः। ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा। प्राञ्जलिः पर्युपासीत पवि-

त्रैश्चैव पावितः ॥ प्राणायामैस्त्रिभिः पूतस्तत ॐ कारमर्हति ॥ ॐ कारं व्याहृतीस्तिस्रः सपूर्वां त्रिपदान्ततः । उक्त्वाऽऽरभेच्च वृत्तान्तमन्वहं गौतमोऽब्रवीत् ॥ त्रिपदा गायत्री ॥ मनुः ॥ अध्येष्यमाणश्च गुरुर्नित्यकालमतन्द्रितः । अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ॥ दक्षः ॥ द्वितीये तु तथा भागे वेदाभ्यासो विधीयते । वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ॥ तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ याज्ञवल्क्यः ॥ हस्तौ सुसंयतौ धार्यौ जानुभ्यामुपरि स्थितौ ॥ तथा ॥ हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ पराशरः ॥ ज्ञातव्यः सर्वदैवार्थो वेदानां कर्मसिद्धये । पाठमात्रमधीती च पङ्के गौरिव सीदति ॥ व्यासः ॥ वेदस्याध्ययनं पूर्वं धर्मशास्त्रस्य चैवहि । अजानतोऽर्थं तद्व्यर्थं तुषाणां कण्डनं यथा ॥ मनुः ॥ योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ यमः ॥ य इमां पृथिवीं सर्वां सर्वरत्नोपशोभिताम् । दद्याच्छास्त्रं च शिष्येभ्यस्तच्च तच्च द्वयं समम् ॥ न निन्दान्ताडने कुर्यात्पुत्रं शिष्यं च ताडयेत् । अधोभागे शरीरस्य नोत्तमाङ्गे न वक्षसि ॥ अतोऽन्यथा हि प्रहरन् न्याययुक्तो भवेन्नरः ॥ न्याययुक्तो दण्डयुक्त इत्यर्थः । अत्र माणवकं कुलपरम्परागतं वेदमध्यापयेत् । तस्यैवाध्येतव्यत्वनियमात् । वसिष्ठः । पारंपर्यागतो येषां वेदः सपरिबृंहणः । तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥ अधीत्य शाखामात्मीयामन्यशाखान्ततः पठेत् । स्वशाखां यः परित्यज्य अन्यशाखामुपासते ॥ शाखारण्डः स विज्ञेयः सर्वकर्मबहिष्कृत इति ॥ इति वेदारम्भः ॥

मूलम् । वेदꣳ समाप्य स्नायात् ॥ १ ॥ ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकम् ॥ २ ॥ द्वादशकेऽप्येके ॥ ३ ॥ गुरुणाऽनुज्ञातः ॥ ४ ॥ विधिर्विधेयस्तर्कश्च वेदः ॥ ५ ॥ षडङ्गमेके ॥ ६ ॥ न कल्पमात्रे ॥ ७ ॥ कामन्तु याज्ञिकस्य ॥ ८ ॥ उपसङ्गृह्य गुरुꣳ समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानाम् ॥ ९ ॥ ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषो मनोहास्खलो विरुजस्तनूदूषुरिन्द्रिय*हातान्विजहामि यो रोचनस्तमिह गृह्णामी-

* दूषिरिन्द्रियहा अतितान्सृजामि इति जयरामसंमतः पाठः ।

त्येकस्मादपो गृहीत्वा ॥ १० ॥ तेनाभिषिञ्चते । तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति ॥ ११ ॥ येन श्रियमकृणुतां येनावमृशताꣳ सुराम् । येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यश इति ॥ १२ ॥ आपोहिष्ठेति च प्रत्यृचम् ॥ १३ ॥ त्रिभिस्तूष्णीमितरैः ॥ १४ ॥ उदुत्तममिति मेखलामुन्मुच्य दण्डं निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठते ॥ १५ ॥ उद्यन्भ्राजभृष्णुरिन्द्रो* मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मागमय । उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मागमय । उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरसि सहस्रसनिं माकुर्वाविदन्मागमयेति ॥ १६ ॥ दधि तिलान्वा प्राश्य जटालोमनखानि सꣳहृत्यौदुम्बरेण दन्तान्धावेत । अन्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमागमत् । स मे मुखं प्रमार्क्ष्यते यशसा च भगेन चेति ॥ १७ ॥ उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पयेति ॥ १८ ॥ पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणानिषिच्यानुलिप्य जपेत् ॥ सुचक्षा अहमक्षीभ्यां‡ भूयासꣳ सुवर्चा मुखेन । सुश्रुत्कर्णाभ्यां भूयासमिति ॥ १९ ॥ अहतं वासो धौतं वाऽमौत्रेणाच्छादयीत । परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूचीरायस्पोषमभिसंव्ययिष्य इति ॥ २० ॥ अथोत्तरीयम् ॥ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च माविन्दद्यशो मा प्रतिपद्यतामिति ॥ २१ ॥ एकञ्चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत ॥ २२ ॥ सुमनसः प्रतिगृह्णाति । या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय । ता† अहं

* भ्राजभ्राष्टिरितिभ्राजभृष्टिरिति च पाठान्तरम् ।

† नयान् इत्यपि पाठः ।

‡ ई च द्विवचने । ७ । १ । ७७ । अस्थ्यादीनामित्यङ् । अक्षीभ्यामक्षि नासिकाभ्याम् । इति वैदिकप्रक्रियायाम् ।

प्रतिगृह्णामि यशसा च भगेन चेति ॥ २३ ॥ अथावबध्नीते यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु । तेन सङ्ग्रथिताः सुमनस आबध्नामि यशोमयीति ॥ २४ ॥ उष्णीषेण शिरो वेष्टयते । युवा सुवासा इति ॥ २५ ॥ अलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ ॥ २६ ॥ वृत्रस्येत्यङ्क्ष्याक्षिणी ॥ २७ ॥ रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते ॥ २८ ॥ छत्रं प्रतिगृह्णाति । बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो माऽन्तर्धेहीति ॥ २९ ॥ प्रतिष्ठेस्थो विश्वतो मापातमित्युपानहौ प्रतिमुञ्चते ॥ ३० ॥ विश्वाभ्यो माना-ष्ट्राभ्यस्परिपाहि सर्वत इति वैणवं दण्डमादत्ते ॥ ३१ ॥ दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः ॥ ॥ ३२ ॥ ॥ ६ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

कर्कः ॥ वेदꣳ समाप्य स्नायात् । ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकम् । एवं हि श्रूयते । वेदमधीत्य स्नायादिति । ब्रह्मचर्यं वेति वर्षे विकल्पः । द्वादशकेऽप्येके । स्नानमिच्छन्ति । गुरुणाऽनुज्ञातः । स्नायादित्यनुवर्तते । गुर्वनुज्ञा च कर्माङ्गतया, न स्नानस्य कालान्तरमेतत् । वेदशब्देन किमभिधीयत इत्यत आह । विधिर्विधेयस्तर्कश्च वेदः । विधिर्विधायकं ब्राह्मणम् । विधेया मन्त्राः । तर्कशब्देनार्थवादोऽभिधीयते । तर्क्यते ह्यनेन सन्दिग्धोऽर्थः । यथा अक्ताः शर्करा उपदधाति तेजो वै घृतमिति । अञ्जनञ्च तैलवसादिनाऽपि सम्भवति । तत्र तेजो वै घृतमिति घृतसंस्तवात् तर्क्यते घृताक्ता इति । तेन विध्यर्थवादमन्त्रा वेदशब्देनाभिधीयन्त इत्युक्तम् । षडङ्गमेके । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड्भिरङ्गैरुपेतमेक आचार्या वेदमिच्छन्ति । एतस्मिन्हि अधिगते स्नानार्हो भवति । स्नानशब्देन द्वितीयाश्रमप्रतिपत्तिरुच्यते । तदनुष्ठानयोग्यता च षडङ्गेऽप्यधिगते वेदे भवति । अत एवोक्तम् । न कल्पमात्रे । कल्पशब्देन च ग्रन्थमात्रमभिधीयते । न ग्रन्थमात्रेऽधिगते स्नायीत । न ह्येतावता तदनुष्ठानयोग्यता भवति तस्मादर्थतो ग्रन्थतश्चाधिगम्य स्नानमिति । कामन्तु याज्ञिकस्य ॥ यज्ञं वेदेति याज्ञिकः तस्य कामं स्नानं भवति । षडङ्गमर्थतोऽनधिगम्यापि । उपसङ्-

गृह्य गुरुꣳ समिधोऽभ्याधायेत्यत आरभ्य यद्वां तदश्विनायश इत्येवमन्तं सूत्रम् । उपसङ्गृह्य गुरुमिति गुरोः पादोपसङ्ग्रहणं कृत्वा समिधोऽभ्याधायेति अग्निपरिचरणं कृत्वेत्यर्थः । अतश्च पूर्वं वेदाहुतिहोमः । एतदेव व्रतादेशनविसर्गेष्वित्युक्तम् । ननु च समिदाधानस्य पश्चात्कस्माद्वेदाहुतयो न भवन्ति । एवञ्च सूत्रानन्तर्यमनुगृहीतं भवति । नचेह वेदाहुतीनां क्रमान्तरविधानमस्ति । उपसङ्गृह्य गुरुꣳसमिधोऽभ्याधायेति च पाठानुग्रहः । नैतदेवम् । वेदाहुतीनां समिदाधानमेव पश्चाद्भवति । एवं हि श्रूयते । स यामुपयन्त्समिधमादधाति सा प्रायणीया याꣳ स्नास्यन्सोदयनीयेति । स्नानं चाष्टभिरुदकुम्भैः समिदाधानसमनन्तरमेव भवति । उत्तरतः परिश्रितस्याष्टानामुदकुम्भानां पुरस्तात् स्थित्वा कुशेषु प्रागग्रेषु येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्य इत्यनेन मन्त्रेण एकस्मादुदकुम्भादपो गृहीत्वा तेनाभिषिञ्चते तेन मामभिषिञ्चामि इत्यनेन मन्त्रेण अथ द्वितीयेन येन श्रियमकृणुतामित्यनेन मन्त्रेण । आपोहिष्ठेति च प्रत्यृचं त्रिभिरुदकुम्भैरभिषिञ्चति । तूष्णीमितरैरुदकुम्भैरभिषेकः । उदुत्तममिति मेखलामुन्मुच्य दण्डं निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठत उद्यन्भ्राजभृष्णुरित्यनेन मन्त्रेण । दधितिलान्वा प्राश्य जटालोमनखान्सꣳहृत्यौदुम्बरेण दन्तान्धावेताम्नाद्याय व्यूहध्वमिति अनेन मन्त्रेण दधितिलयोरन्यतरप्राशनं कृत्वा जटालोमनखानां संहारं च औदुम्बरेण दन्तान्प्रक्षालयेदन्नाद्याय व्यूहध्वमित्यनेन मन्त्रेण । उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पयेति । उत्सादनम् अङ्गोद्वर्तनं कृत्वा पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पयेत्यनेन मन्त्रेण । पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणानुपिच्यानुलिप्य जपेत्सुचक्षा अहमक्षिभ्यामिति । अहतं वासो धौतं वाऽमोत्रेणाच्छादयीत परिधास्यै० इत्यनेन मन्त्रेण । अथोत्तरीयं यशसा माद्यावापृथिवी० इत्यनेन मन्त्रेणाछादयीत । एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत । एकं चेद्वासो भवति तस्यैवोत्तरवर्गेण प्रच्छादयीत । तत्रापि मन्त्रो भवति । क्रियान्तरत्वात् । सुमनसः प्रतिगृह्णाति या आहरज्जमदग्नि० इत्यनेन मन्त्रेण । अथावबध्नीते, यद्यशोऽप्सरसामिन्द्र० इत्यनेन मन्त्रेण । उष्णीषेण शिरोवेष्टयते युवासुवासा इति । अनेन मन्त्रेण । अलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ आब-

ध्नाति । वृत्रस्येत्यनेन मन्त्रेणाङ्क्ते अक्षिणी । रोचिष्णुरसीत्यनेन मन्त्रेणात्मानमादर्शे प्रेक्षते । छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसि० इत्यनेन मन्त्रेण । प्रतिष्ठेस्थो विश्वतोमापातमित्युपानहौ प्रतिमुञ्चते युगपत् शक्यत्वाद् द्विवचनान्तत्वाच्च मन्त्रस्य । विश्वाभ्यो मेति वैणवं दण्डमादत्ते । दन्तप्रक्षालनादीनि नित्यमपि मन्त्रवन्ति भवन्तीति सूत्रशेषः । वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः । वासआदिषु नवेष्वेव मन्त्रो भवति ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ वेदमधीत्य स्नायादिति ब्रह्मचर्यं वेति वर्षे विकल्पः । द्वादशके व्रते एके स्नानमिच्छन्ति । गुरुणाऽनुज्ञातः सर्वत्र स्नायादित्यनुवर्त्तते । गुर्वनुज्ञा च कर्मान्तरं नतु स्नानकालान्तरमेतत् । वेदशब्देन किन्तदाह । विधिर्विधेयस्तर्कश्च वेद इति । विधिर्विधायकं ब्राह्मणम् विधेया मन्त्राः । तर्क्यते ह्यनेन सन्दिग्धोऽर्थ इति तर्कोऽर्थवादः । यथा अक्ताः शर्करा उपदधाति तेजो वै घृतमिति । अञ्जनं च तैलवसादिना च सम्भवति । तत्र तेजो वै घृतमिति घृतसंस्तवात्तर्क्यते घृताक्ता इति तेन विध्यर्थवादमन्त्रा वेद इत्युक्तम् । षडङ्गं शिक्षा कल्पो व्याकरणं निरुक्तञ्छन्दो ज्योतिषमिति । षड्भिरङ्गैरुपेतं वेदमधीत्य स्नायादित्येके । स्नानञ्च द्वितीयाश्रमप्रतिपत्तिः । तदनुष्ठानयोग्यता च षडङ्गे वेदेऽधिगते भवति । अत एवोच्यते न कल्पमात्र इति । नच कल्पमात्रे ग्रन्थमात्रेऽधिगते स्नानार्हो भवति । तस्माद्ग्रन्थतोऽर्थतश्चाधिगम्य स्नायात् । काममिच्छया । यज्ञं वेदेति याज्ञिकस्तस्येच्छया स्नानम्भवति । षडङ्गमर्थतोऽनधिगम्यापि । किङ्कृत्वा उपसङ्गृह्य गुरुम् । गुरोः पादोपग्रहणङ्कृत्वा । समिधोऽभ्याधायाग्निपरिचरणङ्कृत्वा इतश्च पूर्वं वेदाहुतिहोमः । एतदेव व्रतादेशनविसर्गेष्वित्युक्तत्वात् । ननु समिदाधानस्य पश्चाद्वेदाहुतयः कुतो न भवन्ति क्रमान्तरानभिधानात् । उपसङ्गृह्य गुरुंसमिधोऽभ्याधायेति पाठानुग्रहापत्तेश्च । मैवम् । यतो वेदाहुतीनां पश्चादेव समिदाधानन्ततश्च स्नानमिति । स यामुपयन्समिधमादधाति सा प्रायणीया याᳬस्नास्यन्त्सोदयनीयेति श्रुतेः । तस्मात्समिदाधानस्नानयोरव्यवहितकालत्वोपपादनाद्वेदाहुतीनाञ्च स्नानाङ्गत्वातिदेशाच्च समिदाधानात्पूर्वं वेदाहुतिहोम इत्युक्तम् । स्नानञ्चाष्टभिरुदकुम्भैः । क्रमेण परिश्रितस्य वस्त्रादिना परिवेष्टितसमावर्तनस्थानस्थितस्याग्नेरुत्तरपार्श्वे स्थापितानामष्टानामुदकुम्भानामुदक्संस्थानाम्पुरस्तात्पूर्वस्यान्दिशि आस्तीर्णेषु कुशेषु स्थित्वा प्रथमा-

दुदकमादाय गृहीत्वा आत्मानमभिषिञ्चत इत्यग्रिमेणान्वयः । अष्टाभ्य उदकुम्भेभ्योऽपाहरणे एक एव मन्त्रो येऽप्स्वन्तरग्नय इति । अभिषेचने तु भिद्यते । तत्र ग्रहणमन्त्रव्याख्या । तत्र येऽप्स्वन्तरित्यस्य प्रजापतिरग्निर्गायत्री आपो जलादाने० । हे अग्नयः ये भवन्त इह एतेषु उदकुम्भेषु वर्तमाने जले प्रविष्टाः । कथम् । अन्तः मध्ये कारणत्वेनेत्यर्थः । अग्नेराप इति श्रुतेः । तत्र ये गोह्यादयो विमङ्गलाः अतितान्सृजामि । अतिसृजनम्प्रक्षेपः विजहामीत्यर्थः । यश्च रोचनः सुमङ्गलस्तमनेन जलेन सह गृह्णामि । मङ्गलायोपपादयामि । के तेऽग्नयस्तानाह । गृह्णाति संवृणोति प्राणिजालमिति गोह्यः । उपगोह्योऽङ्गतापनः । मयून् विकृतमुखान् कृत्वा स्यति अन्तन्नयतीति मयूषः । मनस उत्साहं हन्तीति मनोहा । अस्खलः अप्रतीकार्यः । विरुजः विविधतया रुजति पीडयतीति विरुजः । तनूः शरीरावयवान् दूषयति विकृतान्करोतीति तनूदूषिः । इन्द्रियाणि हन्तीतीन्द्रियहा । एतानष्टौ विहायैकं रोचनं गृह्णामीति वाक्यार्थः । तथाच वृद्धमनुः । गोह्यादयोऽग्नयो ह्यष्टावमेध्यास्त्वशुभावहाः । शुभकृद्रोचनस्त्वेको मेध्यो दीप्तिकरः पर इति । अथाभिषेकमन्त्रव्याख्या । तेनमामिति द्वयोः प्रजापतिर्यजुरापोऽभिषेके० । तेन अभीष्टेन जलेनाहं मन्त्रलिङ्गात् आत्मानमभिषिञ्चामि । प्रयोजनमाह । श्रियै धर्मादिवृद्धये । यशसे कीर्त्यै । ब्रह्मणे वेदार्थम् । ब्रह्मवर्चसाय यागाध्यापनोत्कर्षजतेजसे । पुनर्येऽप्स्वन्तरिति द्वितीयादुदकुम्भादपो गृहीत्वा येन श्रियमितिमन्त्रेणाभिषिञ्चति । अस्यार्थः । हे अश्विनौ येन जलप्रभावेण भवन्तौ सुराणां श्रियं सम्पदं शोभां वा अकृणुताम् कृतवन्तौ श्रियास्तोयत उत्पन्नत्वात् । येन च सुराममृतम् अवमृशताम् प्राप्तवन्तौ । अटोऽदर्शनश्छान्दसम् । येन जलेनाक्ष्यौ उपमन्योरक्षिणी अभ्यषिञ्चताम् अभिषिक्तवन्तौ । वां युवयोर्यदेवम्भूतं यशस्तत् एतज्जलाभिषेकेण ममाप्यस्त्विति शेषः । साकाङ्क्षत्वात् । तृतीयादित्रयात् आपोहिष्ठादित्र्यृचेन यथाक्रममभिषेकः । इतरैस्त्रिभिरुदकुम्भजलैस्तूष्णीमभिषेकः । उदुत्तममिति मन्त्रेण मेखलामुन्मुच्य ऊर्ध्वङ्कण्ठदेशेनावतार्य दण्डन्निधाय भूमौ स्थापयित्वा । अनेनावसरप्राप्तन्दण्डाजिनयोर्निधानं लक्ष्यते तूष्णीम् । वस्त्रान्तरन्धृत्वा सूर्यमुपतिष्ठते । अथोपस्थानमन्त्रव्याख्या । उद्यन्नितिमन्त्रत्रयस्य प्रजापतिः शक्करी सविता उपस्थाने० । हे सूर्य यतो भवान् प्रातःसवने यावभिर्गमनशीलैर्ऋष्यादिसकलगणैश्च सन्निस्सेविता सेवितो वाऽस्यास्तिष्ठति तद्वत् । किम्भूतः । उद्यन् उद्गच्छन् । भ्राजभृष्टिः स्वप्रभयाऽन्यतेजोह्रासकः । आविदन् सर्वं शुभाशुभं जानन् । किञ्च यथा च

त्वम्प्रातःसवने दशसनिः दशसङ्ख्यातानां गवादीनां सनिर्दाताऽसि। षणु दाने । अतो मामपि दशसनिन्दशगुणदक्षिणादिदातारङ्कुरु । मा माम् वेदनं सर्वज्ञत्वञ्च गमय प्रापय । एवमुत्तरत्रापि व्याख्येयम् । एवं स्तुत्वा दधितिलयोरन्यतरम्प्राश्य जटालोमनखानि च संहृत्य अपनीय औदुम्बरेण काष्ठेन दन्तान्धावेत शोधयेत् अन्नाद्यायेति मन्त्रेण । अस्यार्थः । तत्राथर्वणोऽनुष्टुप् वनस्पतिर्दन्तधावने० । हे दन्ताः यूयम् अन्नाद्याय अन्नादनाय व्यूहध्वम् आत्मशुद्ध्यर्थमेकपङ्क्तिनिविष्टा भवत । यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमत् आगतः स एव सोमो मे मम मुखम्प्रमार्क्ष्यते शोधयिष्यति । केन यशसा सत्कीर्त्या भगेन षड्विधैश्वर्येणेति दन्तधावनस्य नित्यकामत्वादुभयफलसम्बन्धः । उत्साद्य अङ्गोद्वर्तनेन मलमपसार्य पुनःस्नात्वा मलस्नानङ्कृत्वा अनुलेपनमुपगृह्णीते आदत्ते प्राणापानौ मे इतिमन्त्रेण । अस्यार्थः । तत्र प्रजापतिर्यजुः प्राणापानौ चन्दनानुलेपे० । भो उपलेपनाधिदैवते मे मम प्राणापानौ वायू तर्पय प्रीणय । तथा मे चक्षुः चक्षुरिन्द्रियम् तथा मे श्रोत्रं श्रवणेन्द्रियञ्च तर्पय । पितरः शुन्धध्वमित्येतेन मन्त्रेण पाण्योरवनेजनं क्षालनोदकम् दक्षिणाग्रहणात्प्राचीनावीती भूत्वा दद्यात् । शुन्धध्वं शोधनं दक्षिणापदं लुप्तसप्तम्यन्तम् तेन दक्षिणस्यान्दिशि निषिच्य लिप्त्वा चन्दनेनात्मानमनुलिप्य जपेत् सुचक्षाअहमिति मन्त्रम् । अस्यार्थः । तत्र प्रजापतिर्यजुः सविता नेत्राभिमन्त्रणे० । हे सवितः अहमक्षिभ्यां नेत्राभ्याङ्कृत्वा सुचक्षाः सुदर्शनो भूयासम् । तथा मुखेन सुवर्चाः सुतेजाः भूयासमिति पूर्वत्र सम्बन्धः । तथा कर्णाभ्यां सुश्रुत् सुश्रवणो भूयासम् भवेयम् । अहतन्नवीनम् सदशम् अनुपहतं वा तत्रापि अमौत्रेण मौत्रो रजकस्तद्व्यतिरिक्तेन धौतं वा आच्छादयीत परिदधीत । परिधास्या इति मन्त्रेण । अस्यार्थः तदादिद्वयोराथर्वणो यजुर्लिङ्गोक्ता वासःपरिधाने० । हेवासोदेवते परिधास्यै अनेकशुभवस्त्रपरिधानाय तथा यशोधास्यै कीर्त्याधानाय तथा दीर्घायुत्वाय निर्दुष्टजीवनाय च इदं वासः संव्ययिष्ये परिधास्ये । किम्भूतः वासोदेवतानुग्रहेण जरदष्टिः आयुःपरिपाकवान् । पुरूचीः पुरुभिर्बहुभिः पुत्रधनादिभिरूचः संयोगोऽस्ति यस्य सः । ऊच समवाये । किम्भूतं वासः रायस्पोषम् रायो धनादिसमृद्धेः पोषं पोषणम्पुष्टिकरमित्यर्थः । किञ्चैतत्सम्बन्धेनाहं शतं शरदो वर्षाणि जीवामि। अथोत्तरीयं वास आच्छादयतीत्यनुषङ्गः । यशसामेति मन्त्रेण । अस्यार्थः । हे वासोदेवते द्यावापृथिवी द्यावाभूमी यशसा युक्तौ मा मामविन्दत् विंदताम्प्राप्नुतामिति

यावत् । विद्लृलाभे धातुः । विभक्तिवचनव्यत्ययेनान्वयः । तथा इन्द्राबृहस्पती अपि यशसा युक्तौ । मां अविन्दत् । तथा भगः सूर्योऽपि यशसा युक्तो मामविन्दत् । तच्चैतैः सम्पादितं यशो मा माम्प्रतिपद्यताम्, मयि सर्वदा तिष्ठत्वित्यर्थः । यद्वा तद्यशो माप्रतिपद्यताम् । प्रतिरत्रापार्थः मत्तो मा ऽपयात्वित्यर्थः । एकञ्चेत्तत्रापि परिधानमन्त्रम्पठित्वा वस्त्रार्द्धम्परिधाय द्विराचम्य उत्तरार्द्धङ्गृहीत्वा उत्तरीयमन्त्रम्पठित्वोत्तरीयङ्कृत्वा पुनर्द्विराचामेदित्यर्थः । एतन्मन्त्रद्वयं स्वकर्तृकपरिधाने बोद्धव्यम् । परकर्तृके तु परिधापने येनेन्द्रायेति मन्त्रान्तरमित्यविरोधः । सुमनसः पुष्पाणि या आहरदिति मन्त्रेण । अस्यार्थः । तत्र द्वयोर्भरद्वाजोऽनुष्टुप् सुमनसो देवता क्रमेण पुष्पादानबन्धनयोर्वि० । याः सुमनसः पुष्पाणि जमदग्निः प्रजापतिः श्रद्धाद्यर्थमाहरत् आददे । ताः सुमनसो यशसा कीर्त्या भगेनैश्वर्येण च सहाहं प्रतिगृह्णामि श्रद्धाद्यर्थम् । तत्र श्रद्धा धर्मादरः । मेधा धारणाशक्तिः । कामोऽभिलाषपूर्त्तिः । इन्द्रियन्तत्पाटवम् । अथेति सुमनसाङ्ग्रहणानन्तरम् तानि स्वशिरस्यवबध्नाति । यद्यशोऽप्सरसामिति मन्त्रेण । अस्यार्थः । हे सुमनसः इन्द्रो देवः अप्सरसाम् उर्वश्यादीनाङ्कुसुमावबन्धनेन यद्यशः सर्वजनप्रियत्वं चकार कृतवान् । तेन यशसा सङ्ग्रथिताः पुष्पानावध्नामि चूडायाम् । किम्भूतं यशः । विपुलं विशालम् । पृथु सन्ततन्दीर्घम् । तद्यशो मयि विषये तिष्ठत्विति शेषः । उष्णीषेण शिरो वेष्टनवस्त्रेण शिरो वेष्टयति । युवासुवासा इति मन्त्रेण । व्याख्यातश्चायम्मेखलाबन्धनप्रसङ्गे । कर्णवेष्टकौ कुण्डले कर्णयोरासुञ्चति । अलङ्करणमसीति मन्त्रेण । अस्यार्थः । तत्र प्रजापतिर्यजुरग्निः कर्णालङ्करणे० । हे कुण्डलदेवते त्वम् अलङ्करणम् अलङ्कारशोभाऽसि । अतस्त्वया [illegible] मम भूयो बहु वारं वारं वा अलङ्करणम्भूयादस्तु । वृत्रस्यासि कनीनक इत्यादि चक्षुर्मे देहीत्यन्तेन मन्त्रेणाङ्क्तेऽक्षिणी । तत्र प्रजापतिर्गायत्री अञ्जनं तत्करणे० । रोचिष्णुरसीत्येतावता मन्त्रेणादर्शे दर्पणे मुखम्प्रेक्षते । तत्र सूर्या यजुरादर्शो मुखनिरीक्षणे० । छत्रम्प्रतिगृह्णाति । बृहस्पतेरिति मन्त्रेण । अस्यार्थः । तत्र गौतमो गायत्री छत्रन्तद्ग्रहणे० । हे छत्र त्वं बृहस्पतेः पितामहस्य छदिः घर्मादिनिवर्तकोऽसि प्रथमम् । अतः पाप्मनो निन्दिताचरणान्मामन्तर्द्धेहि व्यवहितङ्कुरु तेजसः प्रतापात् यशसश्च सकाशान्माऽन्तर्द्धेहि माव्यवहितङ्कुरु तद्युक्तङ्कुर्वित्यर्थः । प्रतिष्ठेस्थ इति मन्त्रेणोपानहौ पादयोः प्रतिमुञ्चते परिधत्ते युगपत् शक्यत्वात् [illegible] मन्त्रस्य । अस्यार्थः । तत्र प्रजापतिर्यजुर्लिङ्गं उपानद्ग्रहणे० । हे उपानहौ [illegible] बते युवाम्प्रतिष्ठे स्थितिहेतू स्थः भवथः । अतो [illegible] सर्वस्मात्परिपालयता मां

पातं रक्षतम् । विश्वाभ्य इति मन्त्रेण वैणवन्दण्डमादत्ते । अस्यार्थः । तत्र याज्ञवल्क्यो यजुर्दण्डस्तद्ब्रह्मणे० । हे दण्ड विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यो राक्षसादिभ्यः सर्वतः सर्वावस्थाम् मा माम्परिपाहि सर्वभावेन रक्ष । दन्तप्रक्षालनादीनि तत्साधनानि प्राप्य नित्यमपि नित्यमेव मन्त्रो भवति । अपि एवार्थे । वासःप्रभृतिष्वपूर्वेष्वेव मन्त्रः ॥ ॥ ६ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ **वेदꣳ समाप्य स्नायाद्ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकम्** । वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतोऽर्थतश्च अन्तं नीत्वा स्नायात् वक्ष्यमाणेन विधिना स्नानं कुर्यात् । अथवा ब्रह्मचर्यं व्रतम् अष्टाचत्वारिꣳशकम् अष्टाचत्वारिंशद्वर्षं निर्वर्त्य समाप्य अवसानं प्रापय्य गुरुणाऽनुमतः स्नायादिति गतेन सम्बन्धः । **द्वादशकेऽप्येके गुरुणाऽनुज्ञातः** । एके सूत्रकाराः द्वादशकेऽपि द्वादशवर्षसमाप्येतिव्रते चरिते स्नायादिति मन्यन्ते तत्रापि गुरुणाऽनुज्ञातः । अत्रासूत्रितमपि उभयं वेदं व्रतं च समाप्य वा स्नायादित्यनुषज्यते । यतः पूर्वं स्नातकस्य त्रैविध्यमुक्तम् । **विधिर्विधेयस्तर्कश्च वेदः** । वेदं समाप्येत्युक्तम् । तत्र कियान् वेद इत्यपेक्षायामाह । विधिर्विधीयते इति विधिः अग्निं आदधीत अग्निहोत्रं जुहुयात् ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि विधायकं ब्राह्मणवाक्यम् । विधेयः विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति विधेयो मन्त्रः इषेत्वादिः । [ विधिर्विधेयस्तर्कश्च वेदः यदत्रैतस्मिन्दर्शने सति समस्तवैदिकसंहारात्मिका मीमांसाऽपि वेदशब्दवाच्या भवतीत्यादिना तर्कपदं मीमांसापरमङ्गीकृत्य वार्तिककारिताया मीमांसाया अपि वेदत्वमुक्तम् तद्विध्यादित्रयस्य वेदत्वप्रतिपादनार्थेयं स्मृतिरिति षडङ्गवेदत्वस्मृतितुल्यन्यायतया पूर्वपक्षसंयताभ्युपगमेनैव तद्दृष्टान्तेन कल्पसूत्राणां छन्दस्त्वाभावमुपपादयितुं । नत्वेवमेव स्मृतिव्याख्यानं सम्मतम् अध्येतृणां मीमांसायां वेदशब्दाप्रसिद्धेः नचाध्येतृप्रसिद्धिनिरपेक्षैवेयं स्मृतिर्विध्यादित्रयस्य वेदत्वं प्रतिपादयतीति वाच्यम् । तथासति तन्नैरपेक्ष्येण स्मृतिमात्रपर्यालोचने तत्स्वारस्येन विध्युद्देशमात्रस्यैव वेदत्वापत्तावर्थवादादीनामवेदत्वापत्तेः विधेयत्वमग्निहोत्रन्यायविस्तरयोरपि वेदत्वापत्तेश्च। अथाध्येतृप्रसिद्ध्यनुरोधेन विधिविधेयशब्दयोर्ब्राह्मणमन्त्रपरत्वान्नाव्याप्त्यतिव्याप्ती तर्हि स्मृतेरध्येतृप्रसिद्धिसापेक्षत्वापत्तौ कथन्तर्कतदप्रसिद्धवेदत्वप्रतिपादनपरता । नच तदंशे स्वातन्त्र्यम् अपेक्षानपेक्षाविध्यनुवादकृतवैरूप्यापत्तेः न्यायविस्तरातिप्रसङ्गानिवृत्तेश्च व्यवहारानु-

एतावान् ग्रन्थो मुद्रितपुस्तके नोपलब्धः ।

प्रविष्टपदार्थनिर्णये तद्विरोधेन शास्त्रस्यामर्थ्याच्च । तस्मादध्येतृप्रसिद्धस्यैव मन्त्र-ब्राह्मणात्मकस्य वेदस्य कश्चिद्विधिनाऽकविधायकः कश्चिन्मन्त्रात्मको विधेयः कश्चित्तत्र एष नेति नेति त्र्यम्बकाः पुरोडाशा इत्यादिवत् त्रैविध्यमनयैवोच्यत इति तात्त्विकोऽर्थः अतः षडङ्गा एव वेदस्मृतिरपि परमतोपन्यासात्पूर्वपक्षस्मृति-रेवेत्यलम् ]। तर्कोऽर्थवाद इति कर्कोपाध्यायः । यथा अक्ताः शर्करा उपद-धाति इति विधिः श्रूयते । तत्राञ्जनसाधनं घृतम् तैलं वसा च तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमिति अर्थवादात् घृतेनाक्ता इति निर्णी-यते अतस्तर्कोऽर्थवादः । तर्को मीमांसेति कल्पतरुकारः । चकारान्नामधेयभा-गसङ्ग्रहः । यतो वेदो विध्यर्थवादमन्त्रनामधेयभेदैश्चतुर्धा मीमांसकैर्विचा-र्यते । यथा अग्निहोत्राघारौ यागभेदौ । उद्भिद्बलभिदिति नामधेयानि । **षडङ्गमेके ।** एके सूत्रकाराः षडङ्गं वेदं समाप्य स्नायादित्याहुः । षट् शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं छन्दांसि अङ्गानि यस्य वेदस्य स षडङ्गः तं षडङ्गम् । **न कल्पमात्रे ।** कल्पमात्रे ग्रन्थमात्रे मन्त्रे वा ब्राह्मणे वा अधीते न स्नानमि-च्छन्ति । कल्पमात्राध्ययनस्य अनुष्ठानायोग्यत्वात् । यत अथातोऽधिकारः अथातो धर्मजिज्ञासा अथातो ब्रह्मजिज्ञासेत्यादिभिरधिकारसूत्रैः अधीतसकल-वेदस्याग्निहोत्रादिकर्मण्यधिकार इत्याचार्यैर्वर्ण्यते । **कामं तु याज्ञिकस्य ।** तु-शब्दः पक्षव्यावृत्तौ । काममिच्छया याज्ञिकस्य आध्वर्यवादियज्ञविद्याकर्मकुशलस्य स्नानमिच्छन्ति । अयमर्थः । मन्त्रब्राह्मणात्मकं वेदमधीत्य अवबुध्य च स्नायादि-त्येकः पक्षः । साङ्गं वेदमधीत्यावबुध्य च स्नायादित्यपरः । ग्रन्थमात्रमप्यधीत्य यज्ञविद्यां चाभ्यस्य स्नायादिति तृतीयः । यज्ञविद्याविरहेण ग्रन्थमात्रे अधीते न स्नायादिति निषेधः । यतो वेदाध्ययनं वेदविहिताग्निहोत्रादिकर्माद्यनुष्ठानप्रयो-जनम् । **उपसङ्गृह्य गुरुᳲ समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानां येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषोमनोहाऽस्खलोविरुजस्तनूदूपिरिन्द्रियहाअतितान्सृजामि यो रोचनस्तमिह गृह्णामीत्येकस्मादपो गृहीत्वा तेनाभिषिञ्चते । स्नायादि-**त्युक्तम् । तत्र कथं स्नायादित्यपेक्षिते आह । उपसङ्गृह्य उपसङ्ग्रहणविधिना प्रणा-म्य कं गुरुमाचार्यं समिधः पूर्वोक्तलक्षणास्तिस्रः परिसमूहनादित्र्यायुषकरणान्तेन विधिना आचार्यनिर्वर्तितसमावर्तनाङ्गहोमेऽग्नौ आधाय प्रक्षिप्य । अत्र समिधोऽ-

पातं रक्षतम् । विश्वाभ्य इति मन्त्रेण वैणवन्दण्डमादत्ते । अस्यार्थः । तत्र याज्ञवल्क्यो यजुर्दण्डस्तद्गृहणे० । हे दण्ड विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यो राक्षसादिभ्यः सर्वतः सर्वावस्थासु मा माम्परिपाहि सर्वभावेन रक्ष । दन्तप्रक्षालनादीनि तत्साधनानि प्राप्य नित्यमपि नित्यमेव मन्त्रो भवति । अपि एवार्थे । वासःप्रभृतिष्वपूर्वेष्वेव मन्त्रः ॥ ॥ ६ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ वेदꣳ समाप्य स्नायाद्ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकम् । वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतोऽर्थतश्च अन्तं नीत्वा स्नायात् वक्ष्यमाणेन विधिना स्नानं कुर्यात् । अथवा ब्रह्मचर्यं व्रतम् अष्टाचत्वारिꣳशकम् अष्टाचत्वारिंशद्वर्षं निर्वर्त्य समाप्य अवसानं प्रापय्य गुरुणाऽनुमतः स्नायादिति गतेन सम्बन्धः । द्वादशकेऽप्येके गुरुणाऽनुज्ञातः । एके सूत्रकाराः द्वादशकेऽपि द्वादशवर्षसमाप्येतिव्रते चरिते स्नायादिति मन्यन्ते तत्रापि गुरुणाऽनुज्ञातः । अत्रासूत्रितमपि उभयं वेदं व्रतं च समाप्य वा स्नायादित्यनुषज्यते । यतः पूर्वं स्नातकस्य त्रैविध्यमुक्तम् । विधिर्विधेयस्तर्कश्च वेदः । वेदं समाप्येत्युक्तम् । तत्र कियान् वेद इत्यपेक्षायामाह । विधिर्विधीयते इति विधिः अग्निं आदधीत अग्निहोत्रं जुहुयात् ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि विधायकं ब्राह्मणवाक्यम् । विधेयः विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति विधेयो मन्त्रः इषेत्वादिः । [विधिर्विधेयस्तर्कश्च वेदः यदत्रैतस्मिन्दर्शने सति समस्तवैदिकसंहारात्मिका मीमांसाऽपि वेदशब्दवाच्या भवतीत्यादिना तर्कपदं मीमांसापरमङ्गीकृत्य वार्तिककारिताया मीमांसाया अपि वेदत्वमुक्तम् तद्विध्यादित्रयस्य वेदत्वप्रतिपादनार्थेयं स्मृतिरिति षडङ्गवेदत्वस्मृतितुल्यन्यायतया पूर्वपक्षसंयताभ्युपगमेनैव तद्दृष्टान्तेन कल्पसूत्राणां छन्दस्त्वाभावमुपपादयितुं । नत्वेवमेव स्मृतिव्याख्यानं सम्मतम् अध्येतॄणां मीमांसायां वेदशब्दाप्रसिद्धेः नचाध्येतृप्रसिद्धिनिरपेक्षैवेयं स्मृतिर्विध्यादित्रयस्य वेदत्वं प्रतिपादयतीति वाच्यम् । तथासति तन्नैरपेक्ष्येण स्मृतिमात्रपर्यालोचने तत्स्वारस्येन विध्युद्देशमात्रस्यैव वेदत्वापत्तावर्थवादादीनामवेदत्वापत्तेः विधेयत्वमग्निहोत्रन्यायविस्तरयोरपि वेदत्वापत्तेश्च । अथाध्येतृप्रसिद्ध्यनुरोधेन विधिविधेयशब्दयोर्ब्राह्मणमन्त्रपरत्वान्नाव्याप्त्यतिव्याप्ती तर्हि स्मृतेरध्येतृप्रसिद्धिसापेक्षत्वापत्तौ क्वयन्तर्कतदप्रसिद्धवेदत्वप्रतिपादनपरता । नच तदंशे स्वातन्त्र्यम् अपेक्षानपेक्षाविध्यनुवादकृतवैरूप्यापत्तेः न्यायविस्तरातिप्रसङ्गानिवृत्तेश्च व्यवहारानु-

[ एतावान् ग्रन्थो मुद्रितपुस्तके नैवोपलब्धः ।

प्रविष्टपदार्थनिर्णये तद्विरोधेन शास्त्रस्यामर्थ्याच्च । तस्मादध्येतृप्रसिद्धस्यैव मन्त्रब्राह्मणात्मकस्य वेदस्य कश्चिद्विधिनाऽङ्गविधायकः कश्चिन्मन्त्रात्मको विधेयः कश्चित्स एष नेति नेति त्र्यम्बकाः पुरोडाशा इत्यादिवत् त्रैविध्यमनयैवोच्यत इति तात्त्विकोऽर्थः अतः षडङ्गा एव वेदस्मृतिरपि परमतोपन्यासात्पूर्वपक्षस्मृतिरेवेत्यलम्]। तर्कोऽर्थवाद इति कर्कोपाध्यायः । यथा अक्ताःशर्करा उपदधाति इति विधिः श्रूयते । तत्राञ्जनसाधनं घृतम् तैलं वसा च तन्मध्ये केनाक्ता इति संशये तेजो वैघृतमिति अर्थवादात् घृतेनाक्ता इति निर्णीयते अतस्तर्कोऽर्थवादः । तर्को मीमांसेति कल्पतरुकारः । चकारान्नामधेयभागसङ्ग्रहः । यतो वेदो विध्यर्थवादमन्त्रनामधेयभेदैश्चतुर्धा मीमांसकैर्विचार्यते । यथा अग्निहोत्राघारौ यागभेदौ । उद्भिद्वलभिदिति नामधेयानि । षडङ्गमेके । एके सूत्रकाराः षडङ्गं वेदं समाप्य स्नायादित्याहुः । षट् शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं छन्दांसि अङ्गानि यस्य वेदस्य स षडङ्गः तं षडङ्गम् । न कल्पमात्रे । कल्पमात्रे ग्रन्थमात्रे मन्त्रे वा ब्राह्मणे वा अधीते न स्नानमिच्छन्ति । कल्पमात्राध्ययनस्य अनुष्ठानायोग्यत्वात् । यत अथातोऽधिकारः अथातो धर्मजिज्ञासा अथातो ब्रह्मजिज्ञासेत्यादिभिरधिकारसूत्रैः अधीतसकलवेदस्याग्निहोत्रादिकर्मस्वधिकार इत्याचार्यैर्वर्ण्यते । कामं तु याज्ञिकस्य । तुशब्दः पक्षव्यावृत्तौ । काममिच्छया याज्ञिकस्य आध्वर्यवादियज्ञविद्याकर्मकुशलस्य स्नानमिच्छन्ति । अयमर्थः । मन्त्रब्राह्मणात्मकं वेदमधीत्य अवबुध्य च स्नायादित्येकः पक्षः । साङ्गं वेदमधीत्यावबुध्य च स्नायादित्यपरः । ग्रन्थमात्रमप्यधीत्य यज्ञविद्यां चाभ्यस्य स्नायादिति तृतीयः । यज्ञविद्याविरहेण ग्रन्थमात्रे अधीते न स्नायादिति निषेधः । यतो वेदाध्ययनं वेदविहिताग्निहोत्रादिकर्माद्यनुष्ठानप्रयोजनम् । उपसङ्गृह्य गुरुꣳ समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानां येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषोमनोहास्खलोविरुजस्तनूदूषिरिन्द्रियहाअतितान्सृजामि यो रोचनस्तमिह गृह्णामीत्येकस्मादपो गृहीत्वा तेनाभिषिञ्चते । स्नायादित्युक्तम् । तत्र कथं स्नायादित्यपेक्षिते आह । उपसङ्गृह्य उपसङ्ग्रहणविधिना प्रणम्य कं गुरुमाचार्यं समिधः पूर्वोक्तलक्षणास्तिस्रः परिसमूहनादिपर्युक्षणान्तेन विधिना आचार्यनिर्वर्तितसमावर्तनाङ्गहोमेऽग्नौ आधाय प्रक्षिप्य । अत्र समिधोऽ-

भ्याधायेत्युक्तम् । तत्समिदाधानं किं वेदाहुत्यादिसमावर्तनहोमात्पूर्वमुत पश्चात् । वेदाहुतिहोमः कुतः प्राप्त इतिचेत् । एतदेव व्रतादेशनविसर्गेष्वित्यतिदेशात् । तर्हि पूर्वं भवतु । उपसङ्गृह्य गुरुं समिधोऽभ्याधायेति पाठात् समिदाधानानन्तरं वेदाहुतीनामवसर इति गम्यते । नैतदेवम् । श्रुत्या हि वेदाहुतीनामवसरः समिदाधानात्पूर्वं समिदाधानञ्च स्नानात्पूर्वमिति क्रमस्य ज्ञापितत्वात् । कथं स यामुपयन् समिधमादधाति सा प्रायणीया यांꣳस्नास्यन्त्सोदयनीयेति श्रुतेः । तस्मात्समावर्तनहोमान्ते उपसङ्ग्रहणादि । परिश्रितस्य परिवेष्टितस्य सर्वतः प्रच्छादितस्य समावर्तनाङ्गहोमसाधनाग्निस्थापनप्रदेशस्योत्तरतः उत्तरस्मिन् भागे कुशेषु प्रागग्रेषु प्राक्कूलेषु आस्तीर्णेषु क्व पुरस्तात्प्राच्यान्दिशि केषां अष्टानामुदकुम्भानां दक्षिणोत्तरायतानां अष्टसङ्ख्याकानां अमलजलपूर्णानां आम्रादिशुभपल्लवमुखानां स्थित्वा स्थितिं कृत्वा ऊर्ध्वीभूयेत्यर्थः । ये अप्स्वन्तरग्नय इत्यादिना मन्त्रेण तमिह गृह्णामीत्यन्तेन एकस्मात् प्रथमातिक्रमे कारणाभावादिति न्यायेन प्रथमात् प्राञ्च्युदञ्चि च कर्माणि इत्यनेन न्यायेन दक्षिणस्य प्रथमत्वम् । अपः जलं दक्षिणहस्तेन गृहीत्वा तेन जलेन अभिषिञ्चति अभ्युक्षति आत्मानं शिरस्तः स्नानकर्ता तत्र मन्त्रः । तेन मामभिषिञ्चामि इत्यादि ब्रह्मवर्चसायेत्यन्तः । येन श्रियमकृणुतां येनावमृशताꣳसुराम् । येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यश इत्यापोहिष्ठेति च प्रत्यृचं त्रिभिस्तूष्णीमितरैः । एवम् एकोदकुम्भजलसाध्यं स्नानमभिधाय इतरसप्तोदकुम्भजलस्नानमात्रे मन्त्रविशेषाभिधानात् । येऽप्स्वन्तरग्नय इत्ययमेव सर्वोदकुम्भजलग्रहणे साधारणो मन्त्र इति प्रतीयते । ततः सर्वेभ्यो द्वितीयादिकुम्भेभ्यः प्रत्येकं येऽप्स्वन्तरिति मन्त्रेण जलमादाय वक्ष्यमाणैर्मन्त्रैर्यथाक्रममभिषिञ्चते । तद्यथा येनश्रियमिति द्वितीयं आपोहिष्ठेति तृतीयम् यो वः शिवतम इति चतुर्थम् तस्मा अरङ्गमिति पञ्चमम् । तूष्णीमितराणि त्रीणि स्नानानि । **उदुत्तममिति मेखलामुन्मुच्य दण्डन्निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठते उद्यन्भ्राजभृष्णुरित्यादि ।** उदुत्तममिति मन्त्रेण मेखलां रशनां उन्मुच्य उच्छब्दसामर्थ्यात् शिरोमार्गेण निस्सार्य निधाय तां च भूमौ निक्षिप्य अन्यद्वस्त्रं परिधाय आदित्यं सूर्यम् उद्यन्भ्राजभृष्णुरित्यादिभिर्मन्त्रैः उपतिष्ठते स्तौति ॥ **दधितिलान्वाप्राश्य जटालोमनखानि सꣳहृत्यौदुम्बरेण दन्तान् धावेतान्नाद्याय व्यूहध्वमिति ।** ततो दधितिलानामन्यतरं प्राश्य अशित्वा

जटाश्च लोमानि च नखानि च जटालोमनखानि तानि संहृत्य संहार्य वापयित्वेत्यर्थः । अत्र संहृत्येति णिचो लोपश्छान्दसः स्वयं संहर्तुमशक्यत्वात् । औदुम्बरेण द्वादशाङ्गुलसम्मितेन कनिष्ठिकाग्रतस्थूलेन उदुम्बरकाष्ठेन । अन्नाद्याय व्यूहध्वमिति मन्त्रेण दन्तान् धावेत प्रक्षालयेद्ब्राह्मणः । दशाङ्गुलेन राजन्यः अष्टाङ्गुलेन वैश्य इति विशेषः ॥ अत्र जटालोमनखवपननिमित्तादुत्तरत्र पुनः स्नात्वेति पुनःशब्दसामर्थ्याच्च स्नानमापद्यते अतो वपनानन्तरं स्नानाचमने विधाय दन्तान्प्रक्षालयेदिति सिद्धम् । **उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ म इति ।** उत्साद्य सुगन्धिना द्रव्येण शरीरमुद्वर्त्य पुनर्भूयः स्नात्वा शिरःप्रभृतीन्यङ्गानि प्रक्षाल्य अनुलेपनं चन्दनादि मुखस्य नासिकयोश्च उपगृह्णीते । मुखं नासिकां च अनुलिम्पति । प्राणापानौ मे तर्पयेत्यादिना श्रोत्रं मे तर्पयेत्यन्तेन मन्त्रेण । **पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणानुषिच्यानुलिप्य जपेत्सुचक्षा अहमक्षिभ्यामिति ।** ततः पाण्योरवनेजनं हस्तयोः प्रक्षालनमुदकं पितरः शुन्धध्वमित्यनेन मन्त्रेण प्राचीनावीती दक्षिणाभिमुखो भूत्वा दक्षिणस्यां दिशि निषिच्य प्रक्षिप्य यज्ञोपवीती भूत्वा पितृकर्मकरणनिमित्तकं उदकस्पर्शं विधाय चन्दनादिना सुगन्धिद्रव्येण गात्राण्यनुलिप्य सुचक्षा अहमक्षिभ्यामित्यादिभूयासमित्यन्तं मन्त्रं जपेत् । **अहतं वासो धौतं वाऽमौत्रेणाच्छादयीत परिधास्या इति ॥** ततः अहतं नवं सदशं पवित्रं वासः वसनम् आच्छादयीत परिदधीत तदलाभे अमौत्रेण अरजकेण धौतं क्षालितं परिधास्या इत्यादिना अभिसंव्ययिष्य इत्यन्तेन मन्त्रेण । **अथोत्तरीयं यशसामेति ।** अथ अन्तरीयपरिधानानन्तरं तादृशमेवोत्तरीयं वासो यशसामेत्यादि यशो मा प्रतिपद्यतामित्यन्तेन मन्त्रेण आच्छादयीतेति गतेनाख्यातेन सम्बन्धः । **एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत ।** चेद्यदि एकमेव वासो भवति तदा पूर्वस्यैव परिधानीयस्य वासस उत्तरवर्गेण उत्तरभागेन प्रच्छादयीत। यशसामेति मन्त्रेणोत्तरीयं कुर्यादित्यर्थः। **सुमनसः प्रतिगृह्णाति या आहरदिति ।** सुमनसः पुष्पाणि प्रतिगृह्णाति । अन्येन दत्तान्यादत्ते । या आहरज्जमदग्निरित्यादि यशसा च भगेन चेत्यन्तेन मन्त्रेण । **अथावबध्नीते यद्यश इति ।** अथ ताः प्रतिगृह्य अवबध्नीते शिरसि बध्नाति यद्यशोऽप्सरसामित्यादि यशोमयीत्यन्तेन मन्त्रेण । **उष्णीषेण शिरो वेष्टयते युवा सुवासा इति ।** उष्णीषेण पूर्वोक्तलक्षणेन तृतीयेन वाससा

शिरो मूर्द्धानं वेष्टयते। युवा सुवासा इत्यादिकया देवयन्त इत्येतयर्चा। अलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ। अलङ्करणमसीति मन्त्रेण दक्षिणोत्तरयोः कर्णयोर्वेष्टकौ भूषणे प्रतिमन्त्रं प्रतिमुञ्चते परिधत्ते। वृत्रस्येत्यक्ष्णेऽक्षिणी। वृत्रस्येत्यादिना चक्षुर्मे देहीत्यन्तेन मन्त्रेण यथाक्रमं दक्षिणवामे मन्त्रावृत्त्याऽक्षिणी अक्ष्णे सौवीराञ्जनेन संस्करोति। रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते। रोचिष्णुरसीत्यनेन मन्त्रेण आत्मानं मुखप्रभृति शरीरं आदर्शे दर्पणे प्रेक्षते पश्यति। छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो मान्तर्द्धेहीति। छत्रं आतपत्रं बृहस्पतेश्छदिरसीत्यादिना यशसो मान्तर्धेहीत्यन्तेन मन्त्रेण प्रतिगृह्णाति प्रतिग्रहशब्दसामर्थ्यात् अन्यत आदत्ते। प्रतिष्ठे स्थो विश्वतोमापातमित्युपानहौ प्रतिमुञ्चते। उपानहौ पादत्राणे प्रतिमुञ्चते परिधत्ते प्रतिष्ठे स्थो विश्वतो मापातमित्यनेन मन्त्रेण परिधत्ते। मन्त्रस्य द्विवचनान्तत्वात् परिधातुं शक्यत्वाच्च युगपत्पादयोः प्रतिमुञ्चते प्रतिष्ठे इति द्विवचनम् स्थ इति च॥ विश्वाभ्यो मानाष्ट्राभ्यस्परिपाहि सर्वत इति वैणवं दण्डमादत्ते। विश्वाभ्यो मेत्यादिसर्वतइत्यन्तेन मन्त्रेण वैणवं वंशमयं दण्डं यष्टिमादत्ते गृह्णाति तच्चोक्तन्यायेन पूर्वदण्डं त्यक्त्वैव। इदमभिषेकप्रभृति दण्डग्रहणान्तं कर्मजातं स्नानकर्ता करोति नाचार्यः। दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः। दन्तप्रक्षालनमादौ येषां पुष्पादानादीनां तानि दन्तप्रक्षालनादीनि नित्यमपि सर्वदा मन्त्रवन्ति स्नातकस्य भवन्ति। वाससी च छत्रं च उपानहौ च वासश्छत्रोपानहं चकाराद्दण्डोऽपि। एतानि चेद्यदि अपूर्वाणि नूतनानि ध्रियन्ते गृह्यन्ते तदा मन्त्रो भवति तद्ग्रहणे॥ ॥*॥ ॥*॥ ॥*॥

गदाधरः॥ वेदꣳ समाप्य स्नायात्। स्नानशब्देन समावर्तनसंस्कार उच्यते। वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतोऽर्थतश्चान्तन्नीत्वा स्नायाद्वक्ष्यमाणविधिना स्नानं कुर्यात्। ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकम्। अथवा ब्रह्मचर्यं व्रतं अष्टाचत्वारिंशकं अष्टाचत्वारिंशद्वर्षं निर्वर्त्य समाप्य अवसानं प्रापय्य गुरुणाऽनुज्ञातः स्नायादिति सम्बन्धः। मीमांसकास्तु अष्टाचत्वारिंशकं व्रतं समाप्य अवसानं कुर्यादिति पक्षं नाङ्गीकुर्वन्ति। जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्या-

धानश्रुतिविरोधात् । नच विकल्पः अतुल्यत्वात् । प्रत्यक्षमेकं श्रुतिवचनम् । कल्प्यमपरम् । कल्प्यप्रत्यक्षयोः प्रत्यक्षं बलवदिति भर्तृयज्ञभाष्ये । **द्वादशाकेऽप्येके ।** द्वादशवार्षिके व्रते समाप्तेऽप्येके स्नानमिच्छन्ति । अन्येतु वेदव्रतसमाप्त्युत्तरं स्नानमिच्छन्ति । **गुरुणाऽनुज्ञातः ।** स्नायादिति शेषः । गुर्वनुज्ञा च समावर्तनकर्माङ्गं नतु स्नानकालान्तरमेतत् । वेदꣳ समाप्य स्नायादित्युक्तम् । तत्र वेदशब्देन किमुच्यते इत्यत आह । **विधिर्विधेयस्तर्कश्च वेदः ।** विधत्त इति विधीयत इति वा विधिः । दर्शपूर्णमासाभ्यां यजेत अग्निहोत्रं जुहुयादित्यादिविधायकं ब्राह्मणवाक्यं । विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति विधेयो मन्त्रः । इषेत्वादिः । तर्कशब्देनार्थवादोऽभिधीयते । तर्क्यते ह्यनेन सन्दिग्धोऽर्थः ।' यथा अक्ताः शर्करा उपदधाति तेजो वै घृतमिति । अञ्जनं तैलवसादिनाऽपि सम्भवति । तत्र तेजो वै घृतमिति घृतसंस्तवात् तर्क्यते घृताक्ता इति । तेन विध्यर्थवादमन्त्रा वेदशब्देनाभिधीयन्त इत्युक्तम् । तर्कः कल्पसूत्रमिति भर्तृयज्ञः । तर्को मीमांसेति कल्पतरुः । चशब्दान्नामधेयभागसङ्ग्रह इति हरिहरः । **षडङ्गमेके ।** शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड्भिरङ्गैरुपेतमेक आचार्या वेदमिच्छन्ति । तमधीत्य स्नायादित्यन्वयः । स्नानं च द्वितीयाश्रमप्रतिपत्तिः । तदनुष्ठानयोग्यता च षडङ्गे वेदेऽधिगते भवति । अत एवोच्यते । **न कल्पमात्रे ।** कल्पशब्देन च ग्रन्थमात्रमभिधीयते । कल्पमात्रे ग्रन्थमात्रे मन्त्रे वा ब्राह्मणे वा अधीते न स्नानमिच्छन्ति । नहि ग्रन्थमात्राध्ययनेन कर्मानुष्ठानयोग्यता भवति । तस्मादर्थतो ग्रन्थतश्चाधिगम्य स्नानमिति । **कामन्तु याज्ञिकस्य ।** यज्ञं वेदेति याज्ञिकः । तुशब्देन ग्रन्थमात्राधीतस्याध्वर्यवादियज्ञविद्याकुशलस्य षडङ्गमर्थतोऽनधिगम्यापि काममिच्छया स्नानं भवति । तेनायमर्थः । मन्त्रब्राह्मणात्मकं वेदमधीत्यावबुध्य च स्नायादित्येकः पक्षः । साङ्गं वेदमधीत्यावबुध्य च स्नायादिति द्वितीयः पक्षः । ग्रन्थमात्रमधीत्य यज्ञविद्यां चाभ्यस्य स्नायादिति तृतीयः पक्षः । स्नायादित्युक्तम् तत्र कथं स्नायादित्यपेक्षायामाह । **उपसङ्गृह्य गुरुꣳ समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानां येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषोमनोहास्खलो विरुजस्तनूदूषुरिन्द्रियहातान्विजहामि । यो रोचनस्तमिह गृह्णामीत्येकस्मादपो गृहीत्वा तेनाभिषिञ्चते तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति ।** उपस-

ङ्गृह्य गुरुं गुरोः पादोपग्रहणं कृत्वा समिधोऽभ्याधायाग्निपरिचरणं कृत्वा । इतश्च पूर्वं वेदाहुतिहोमः । एतदेव व्रतादेशविसर्गेष्वित्युक्तत्वात् । ननु समिदाधानस्य पश्चाद्वेद हुतयः कुतो न भवन्ति । क्रमान्तरानभिधानात् । उपसङ्गृह्य गुरुं समिधोऽभ्याधायेतिपाठानुग्रहापत्तेश्च । मैवम् । यतो वेदाहुतीनां पश्चादेव समिदाधानम् ततश्च स्नानमिति श्रूयते । स यामुपयन्समिधमादधाति सा प्रायणीया याᳫं स्नास्यन्त्सोदयनीयेति । तस्मात्समिदाधानस्नानयोरव्यवहितकालत्वोपपादनाद्वेदाहुतीनां च स्नानाङ्गत्वातिदेशाच्च समिदाधानात्पूर्वं वेदाहुतिहोम इत्युक्तम् । स्नानं चाष्टभिरुदकुम्भैः क्रमेण । परिश्रितस्य वस्त्रादिना वेष्टितसमावर्तनस्थानस्थितस्याग्नेरुत्तरपार्श्वे स्थापितानामष्टानामुदकुम्भानां दक्षिणोत्तरायतानां पुरस्तात्पूर्वस्यां दिशि आस्तीर्णेषु कुशेषु ब्रह्मचारी स्थित्वा ऊर्द्ध्वीभूय येऽप्स्वन्तरग्नय इति मन्त्रेण प्रथमादुदकुम्भादपो गृहीत्वा तेन मामभिषिञ्चामीति मन्त्रेणात्मानमभिषिञ्चति । मन्त्रार्थः । येऽग्नयो गोह्यादयोऽप्सु अन्तर्मध्ये प्रविष्टाः स्थिताः इन्द्रियहान्ता अष्टौ तान् अमेध्यत्वादमङ्गल्यत्वादेताभ्योऽद्भ्यः सकाशात् अग्नीन् विजहामि पृथक् करोमि त्यजामि । यश्च रोचनोऽग्निर्मेध्यत्वान्मङ्गल्यत्वात् प्रीतिकारित्वाच्च तमिहाप्सु विषये गृह्णामि स्वीकरोमि । यतः अद्भ्योऽग्निरुत्पद्यते संव्रियते आच्छाद्यत इति गोह्यः । उपगोह्यः अङ्गतापकः । मयूषो जन्तुहिंसकः । मनस उत्साहं हन्तीति मनोहाः । अस्वलः प्रध्वंसी अजीर्णकृत् । विविधतया रुजति पीडयतीति विरुजः । तनूं शरीरं दूषयति विकृतिं नयति इति तनूदूषुः । इन्द्रियाणि हन्तीति इन्द्रियहाः । अभिषेकमन्त्रार्थः । तेनोदकेन मां इममात्मानमभिषिञ्चामि । किमर्थम् । श्रियै सम्पत्त्यर्थम् । यशसे कीर्त्यै । ब्रह्मणे ब्रह्मवर्चसाय । यागाध्यापनोत्कृष्टतेजसे । येन श्रियमकृणुतां येनावमृशताᳫं सुरां येनाक्षावभ्यषिञ्चतां यद्वां तदश्विना यश इत्यापोहिष्ठेति च प्रत्यृचं त्रिभिस्तूष्णीमितरैः ॥ अष्टाभ्य उदकुम्भेभ्योऽपां ग्रहणे एक एव मन्त्रो ये अप्स्वन्तरग्नय इति । अभिषेचने तु भिद्यते । तद्यथा । येन श्रियमिति द्वितीयम् । आपो हिष्ठेति तृतीयम् । योवः शिवतम इति चतुर्थम् । तस्मा अरङ्गमिति पञ्चमम् । ततस्तूष्णीं त्रिभिरितरैरुदकुम्भैरभिषेकः । मन्त्रार्थः । हे अश्विनौ येन जलप्रभावेण भवन्तौ सुराणां श्रियं सम्पदं शोभां वा अकृणुताम् कृतवन्तौ । येन च सुराणाममृतं अवमृशताम् प्राप्तवन्तौ । अटोऽदर्शनं छान्दसम् । येन बलेनाक्षौ उपमन्योरक्षिणी अभ्यषिञ्चताम् अभिषिक्तवन्तौ । वां युवयोर्यश्चैवं भूतं यशस्तत् एतज्जलाभिषेकेण ममाप्यास्त्विति

शेषः। उदुत्तममिति मेखलामुन्मुच्य दण्डन्निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठत उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं माकुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिम्माकुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरसि सहस्रसनिं माकुर्वाविदन्मागमयेति। तत उदुत्तममिति मन्त्रेण मेखलां रशनामुन्मुच्य ऊर्ध्वं शिरोमार्गेण निस्सार्य तां च भूमौ निक्षिप्य वासोऽन्यत्परिधाय वस्त्रान्तरं परिहितं कृत्वा उद्यन्भ्राजभृष्णुरितिमन्त्रेण सूर्यमुपतिष्ठते। मेखलानिधानोत्तरं दण्डाजिनयोर्निधानम्। तूष्णीमिति जयरामकारिकाकारौ। मन्त्रार्थः। हे सूर्य यतो भवान् प्रातः सवने यावभिर्गमनशीलैर्ऋष्यादिसप्तकगणैः सेवितोऽस्थात् तिष्ठति यथेन्द्रो मरुद्भिरस्थात् तिष्ठति तद्वत्। किम्भूतः उद्यन् उद्गच्छन् भ्राजभृष्णुः स्वप्रभयाऽन्यतेजउद्भासकः। आविदन् सर्वं शुभाशुभं जानन्। किञ्च। यथाच त्वं प्रातः सवने दशसनिः दशसङ्ख्यातानां गवादीनां सनिर्दाता। षणु दाने। अतो मामपि दशसनिं दशगुणदक्षिणादिदातारं कुरु। मा मां विदन् वेदयन् ज्ञापयन् गमय प्रापय प्रतिष्ठामितिशेषः। एवमुत्तरत्रापि व्याख्येयम्॥ दधितिलान्वा प्राश्य जटालोमनखानि सꣳहृत्यौदुम्बरेण दन्तान्धावेतान्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमागमत् स मे मुखं प्रमार्क्ष्यते यशसा च भगेन चेति॥ ततो दधितिलयोरन्यतरं प्राशयित्वा जटाश्च लोमानि च नखानि च जटालोमनखानि तानि संहृत्यापनीय वापयित्वा। संहृत्येत्यत्र णिचो लोपश्छान्दसः। स्वयं संहर्तुमशक्यत्वात्। औदुम्बरेण दन्तान्धावेत औदुम्बरेण काष्ठेन दन्तान् शोधयेत् अन्नाद्यायेति मन्त्रेण। हे दन्ताः यूयं अन्नाद्याय अन्नादनाय व्यूहध्वम् निर्मला भवत। यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमत् आगतः। अतः स एव सोमो मे मम मुखं प्रमार्क्ष्यते शोधयिष्यति। केन यशसा सत्कीर्त्या भगेन भाग्येन च। दन्तधावनस्य नित्यकाम्यत्वादुभयफलसम्बन्ध इति मुरारिः। उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पयेति॥ उत्साद्य अङ्गोद्वर्त्तनेन मलमपसार्य पुनः स्नात्वा मलापकर्षणस्नानोत्तरं पुनः स्नानं कृत्वाऽनुलेपनं चन्दनादि नासिकयोर्मुखस्य चोपगृह्णीते आदत्ते प्राणापानौ मे इति मन्त्रेण। मुखनासिके चानुलिम्पतीति

इमामृचं जपन्ति ॥ त्रिरात्रꣳ सहोष्य विप्रतिष्ठेरन् ॥ त्रिरात्रं सह एकत्र उषित्वा विप्रतिष्ठेरन् विप्रवासं कुर्युः विशेषेण प्रवासं कुर्युरिति सूत्रार्थः ॥ ॥ * ॥

गदाधरः ॥ वातेऽमावास्यायाꣳ सर्वानध्यायः ॥ वाते वायौ प्रचण्डे सति वातस्य सर्वदा विद्यमानत्वादतिशयितोऽत्र ग्राह्यः । सर्वशब्दाच्चाङ्गानामपि न छन्दसामेव । यद्यदुपाध्यायसकाशाद् गृह्यते शिल्पाद्यपि तत्सर्वग्रहणेन गृह्यते । शिल्पिनामपि हि अनध्यायप्रसिद्धिरस्ति । अनध्यायश्च प्रकृतत्वाद् गुरुमुखाद्य- च्छिद्यते तत्रैव भवति न गुणनेऽपीति । अपरे तु सर्वविषयतामिच्छन्ति ॥ श्राद्धाशने चोल्कावस्फूर्जद्भूमिचलनाग्न्युत्पातेष्वृतुसन्धिषु चाकालम् ॥ आकालिका एते अनध्यायाः । आकालं यस्मिन्काले उल्कादेरापतनं अपरदिने तावत्कालपर्यन्तं श्राद्धाशने श्राद्धान्नभोजने श्राद्धान्नजीर्ण इत्यपरे । उल्का ज्वाला- कृतिः पतन्ती तारका । अवस्फूर्जत् विद्योतमाना विद्युत् । भूमिचलनं भूमेः कम्पः । अग्निर्ग्रामदाहः । एषामुत्पात उत्पवनम् तस्मिन् । ऋतुसन्धिशब्देन एकस्य ऋतो- रन्तः अपरस्य यावदप्रवृत्तिः स काल उच्यते । तत्र चाकालिकता नोपपद्यते । ततश्च पूर्वस्यान्तोऽन्त्या रात्रिः उत्तरस्यादमहस्तावामनध्यायः ॥ उत्सृष्टेष्वभ्रद- र्शने सर्वरूपे च त्रिरात्रं त्रिसन्ध्यं वा ॥ उत्सृष्टेषु छन्दःसु वेदानामुत्सर्गे कृते अभ्रदर्शनमत्रातिशयितं गृह्यते सर्वकालमभ्रस्य विद्यमानत्वात् । विद्युदभ्रवायुवृ- ष्टिगर्जितानां युगपत्प्रवृत्तिः सर्वरूपम् । तत्रापि त्रिरात्रमनध्यायः । त्रिसन्ध्यं वेति विकल्पः । अभ्रदर्शने त्रिरात्रं सर्वरूपे च त्रिसन्ध्यमिति व्यवस्थितविकल्प इत्यन्ये ॥ भुक्त्वाऽऽर्द्रपाणिरुदके निशायाꣳ सन्धिवेलयोरन्तःशवे ग्रामेऽन्त- र्द्दिवाकीर्त्ये ॥ भुक्त्वा यावदार्द्रपाणिस्तावन्नाधीयीत । तथोदके यावत्तिष्ठति तावत् निशायाम् । स्मृत्यन्तरान्निशाशब्देनार्द्धरात्रमुच्यत इति कर्कः । महानिशा च विज्ञेया मध्यस्थं प्रहरद्वयमिति स्मरणात् । रात्रेः पूर्वोत्तरौ यामौ वेदाभ्यासेन तौ नयेदिति वचनेन रात्रेः पूर्वचतुर्थयामयोर्वेदाभ्यासविधानाद् द्वितीयतृतीययोः परिशेषादनध्यायइति हरिहरः ॥ सन्धिवेलयोः अहोरात्रयोः सन्ध्याकालयोः । अन्तः शवे ग्रामे ग्राममध्ये यावच्छवं मृतशरीरं भवति तावन्नाधीयीत । अन्तर्दिवा- कीर्त्ये । दिवा अह्नि कीर्त्यं पठनीयं यत् प्रवर्ग्यादि तद्दिवाकीर्त्यं तस्मिन्विषये ग्रामे अनध्यायः । तद्ग्राममध्ये न पठनीयम् । सूत्रयोजनायाम् ग्रामपदं काकाक्षिगोल- कन्यायेनोभयत्र योजनीयम् । ग्रामेऽन्तर्द्दिवाकीर्त्ये इति । अन्येतु अन्तः सन्निहितो

दिवाकीर्तिश्चाण्डालो यत्र सोऽन्तर्दिवाकीर्त्यो देशस्तत्रानध्यायः॥ धावतोऽभिशस्तपतितदर्शनाश्चर्याभ्युदयेषु च तत्कालम्॥ धावतः शीघ्रं गच्छतः। अभिशस्तो ब्रह्महत्यादिपापेनाभियुक्तः पतितो ब्रह्महत्यादिपापेन अभिशस्तपतितयोर्दर्शनम्। आश्चर्यमद्भुतमिन्द्रजालादि। अभ्युदयः पुत्रजन्मविवाहादि। एषु धावनादिनिमित्तेषु तत्कालं यावन्निमित्तं तावत्कालमनध्यायः॥ नीहारे वादित्रशब्द आर्तस्वने ग्रामान्ते श्मशाने श्वगर्दभोलूकशृगालसामशब्दे शिष्टाचरिते च॥ नीहारे धूमरिकायाम्। वादित्राणां मृदङ्गादीनां शब्दे। आर्तस्य दुःखितस्य स्वने शब्दे। ग्रामस्यान्ते सीम्नि। श्मशाने मृतकदाहभूमौ। श्वा च गर्दभश्च उलूकश्च शृगालश्च साम च श्वगर्दभोलूकशृगालसामानि तेषां शब्दे श्रूयमाणे। शिष्टाचरिते च शिष्टस्य श्रोत्रियस्याचरिते आगमने चकारात् तत्कालं यावन्निमित्तमनध्यायः॥ गुरौ प्रेतेऽपोऽभ्यवेयाद्दशरात्रं चोपरमेत्॥ गुरौ आचार्ये प्रेते मृते अप उदकं अभ्यवेयात् प्रविशेत्। स्नानपूर्वकमुदकदानाय दशरात्रं दशाहानि स्वाध्यायादध्ययनादुपरमेत्॥ सतानूनप्त्रिणि सब्रह्मचारिणि च त्रिरात्रम्॥ तानूनप्त्रं ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति द्विश्च स्थाल्याः स्रुवेण तानूनप्त्रमेतद्दक्षिणस्यां वेदिश्रोणौ निधायाभिमृशन्त्यृत्विजो यजमानश्चानाधृष्टमिति ज्योतिष्टोमे विहितम्। सह तानूनप्त्रं आज्यं येन स्पृष्टं स सतानूनप्त्री तस्मिन् सतानूनप्त्रिणि प्रेते। समाने तुल्ये ब्रह्मणि वेदे चरतीति सब्रह्मचारी तस्मिन् सब्रह्मचारिणि सहाध्यायिनि समानाचार्ये च प्रेते त्रिरात्रं स्वाध्यायादुपरमेत्॥ एकरात्रमसब्रह्मचारिणि॥ न सब्रह्मचारी असब्रह्मचारी तस्मिन् भिन्नाचार्ये प्रेते एकरात्रमनध्यायः॥ अर्द्धषष्ठान्मासानधीत्योत्सृजेयुः॥ अर्द्धः षष्ठो मासो येषान्ते अर्द्धषष्ठाः मासास्तानर्द्धषष्ठान्मासानधीत्य पठित्वोत्सृजेयुः। पूर्वमुपाकृतानि स्वीकृतानि छन्दांसि उत्सृजेयुः। उत्सर्गश्छन्दसामेव। अङ्गानि पुनरधीयीत॥ अर्द्धसप्तमासान्वा॥ अधीत्योत्सृजेयुरिति शेषः। अर्द्धः सप्तमो मासो येषु ते अर्द्धसप्तमासाः॥ अथेमामृचं जपन्त्युभा कवी युवा यो नो धर्मः परापतत्। परिसख्यस्य धर्मिणो विसख्यानि विसृजामहे इति॥ उत्सर्गानन्तरमाचार्येण सह शिष्या उभा कवी इतीमामृचं जपन्ति। उच्चारयन्ति। मन्त्रार्थः। हे अश्विनौ युवां उभा उभौ यतः कवी क्रान्तदर्शनौ। युवा युवानौ। युष्मत्सम्पादितो धर्मो नोऽस्माकं परिसख्यस्य सुमित्रभावस्य परापतत् रक्षणार्थमागतः। तेन धर्मेण

विसख्यानि विद्वेषादीनि विषमाध्ययनादीनि वा विसृजाम त्यजाम । किम्भूतस्य सख्यस्य धर्मिणः उपकारादिधर्मवतः परस्परमनुकूलस्येत्यर्थः ॥ त्रिरात्रꣳ सहोष्य विप्रतिष्ठेरन् ॥ अत्र त्रिरात्रं सह एकस्मिन् गृहे आचार्यसहिताः शिष्या निवासं कृत्वा विप्रतिष्ठेरन् विविधं प्रवासं कुर्युः । त्रिरात्रं सहवासनियमः । विप्रतिष्ठात्र वियत एव ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

इति श्री त्रिरग्निचित्सम्राट्स्थपतिवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्डे एकादशी कण्डिका ॥ ॥ ११ ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजेरन् ॥ १ ॥ उदकान्तं गत्वाऽद्भिर्देवाँश्छन्दाꣳसि वेदानृषीन्पुराणाचार्यान् गन्धर्वानितराचार्यान्संवत्सरं च सावयवं पितृनाचार्यान्स्वाँश्च तर्पयेयुः ॥ २ ॥ सावित्रीं चतुरनुद्रुत्य विरताः स्म इति प्रब्रूयुः ॥ ३ ॥ क्षपणं प्रवचनं च पूर्ववत् ॥ ४ ॥ १२ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

कर्कः ॥ पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजेरन् ॥ पौषमासे रोहिणीषु मध्यमाऽष्टकाऽपि पौष एव तत्राध्यायोत्सर्गः । उदकान्तं गत्वाऽद्भिर्देवाँश्छन्दाꣳसीत्यत आरभ्य स्वाँश्च तर्पयेयुरित्येवमन्तं सूत्रम् । उदकान्तं गत्वा उदकान्ते गमनेन च स्नानमुपलक्ष्यते । ततोऽद्भिर्देवांस्तर्पयेयुराचार्यसहिताः शिष्याः देवास्तृप्यन्तु छन्दांसि तृप्यन्त्वित्येवमादि ॥ सावित्रीं चतुरनुद्रुत्य विरताः स्म इति प्रब्रूयुः ॥ क्षपणं प्रवचनं च पूर्ववत् । पूर्वशब्देनोपाकर्मकालो लक्ष्यते । तद्वत्क्षपणं भवति प्रवचनं चाध्यायादीनाम् ॥ ॥ * ॥

जयरामः ॥ पौषमासि रोहिणीषु । मध्यमाऽष्टकाऽपि पौष एव तत्राध्यायोत्सर्गः । कृष्णपक्षेषु सार्द्धपञ्चमासान् । उत्सर्गप्रकारमाह । उदकान्तमित्येति । उदकान्तगमनेन च स्नानमुपलक्ष्यते । ततोऽद्भिर्देवादींस्तर्पयेयुराचार्यसहिताः शिष्याः । देवास्तृप्यन्ताम् छन्दांसि तृप्यन्तामित्येवमाद्याचार्यान्तान् सन्तर्प्य अपसव्यमाचीनावीतिन आचार्यसहिता दक्षिणामुखाः स्वाश्च पित्रादीनविद्यमानानेव तर्पयेयुः । सावित्रीञ्चतुःकृत्वोऽनुद्रुत्य पठित्वा विरताः स्म इतीमम्मन्त्रं प्रब्रूयुः उक्तोत्सर्गं कुर्युरित्यर्थः । विरामश्च स्वाध्यायादीपाकर्म । ततः क्षपणमनध्यायो लोमनखानाम-

निकृन्तनञ्च । प्रवचनञ्चाध्यायादीनां पूर्ववत् उपाकर्मवत् । ततस्त्रिरात्रानन्तरं शुक्लपक्षेषु छन्दांस्यधीयीरन् कृष्णपक्षेष्वङ्गानि । ततोऽर्द्धषष्ठान्मासानेवमेवाधीत्य सर्वथोत्सृज्य उपाकृत्य वाऽधीयीतेतितिग्द्विम् ॥ १२ ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ **पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजेरन् ॥** पौषमासस्य रोहिणीनक्षत्रे मध्यमायाम् पौष्या ऊर्द्ध्वाष्टकायां अष्टम्यां वा अध्यायान्स्वाध्यायानुत्सृजेरन् पूर्वमुपाकृतान् पुनरुपाकरणं यावन्नाधीयीरन्नित्यर्थः ॥ **उदकान्तं गत्वाऽद्भिर्देवांश्छन्दांसि वेदानृषीन् पुराणाचार्यान् गन्धर्वानितराचार्यान् संवत्सरं च सावयवं पितृनाचार्यान्स्वांश्च तर्पयेयुः ।** कथमुत्सृजेरन्नित्यपेक्षायामुच्यते । उदकान्तं नद्याद्युदकसमीपं गत्वा उदकसमीपगमनात् स्नानं लक्ष्यते । ननु मासद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगा इति छन्दोगपरिशिष्टे नदीस्नानस्य निषेधात् कथं नद्यामुच्यते । सत्यम् । उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्योपरागे च रजोदोषो न विद्यत इत्यपवादवचनात् न दोषः । ततो यथाविधि स्नात्वा माध्याह्निकं कर्म देवागातु विद इत्येतत्प्राक् निर्वर्त्य सप्तर्षिपूजावंशानुपठनानन्तरं देवास्तृप्यन्तां छन्दांसि तृप्यन्तामित्येवमाचार्यान्तान् यज्ञोपवीतिनस्तर्पयेयुः आचार्यसहिताः शिष्याः । ततः प्राचीनावीतिनो दक्षिणामुखा नामगोत्रोच्चारणपूर्वकं स्वांश्च पितृपितामहप्रपितामहान् तर्पयेयुः अनन्तरं स्नानवस्त्रं निष्पीड्याचम्य देवागातु विद इत्यनयर्चा समापयेयुः ॥ **सावित्रीं चतुरनुद्रुत्य विरताः स्म इति प्रब्रूयुः ॥** ततः सावित्रीं तत्सवितुरित्यादिकां चतुः कृत्वोऽनुद्रुत्य पठित्वा विरताः स्म इत्याचार्यप्रमुखाः शिष्याः सर्वेऽनुब्रूयुः ॥ **क्षपणं प्रवचनं च पूर्ववत् ॥** क्षपणं अनध्ययनं लोमनखानामनिकृन्तनं च । प्रवचनं अध्यायादीनां पठनं पूर्ववत् उपाकरणकालवत् । ततस्त्रिरात्रानन्तरं शुक्लपक्षेषु छन्दांस्यधीयीरन् कृष्णपक्षेष्वङ्गानि । ततः पुनरर्द्धसप्तमासान्याऽधीत्य एवमेवोत्सर्गं विधाय उभाकवी युवेत्यादिकां ऋचं जपित्वा त्रिरात्रमेकरात्रं वाऽवस्थाय यथेष्टं विप्रतिष्ठेरन् पृथक् पृथक् गच्छेयुः । ततः पुनरुपाकरणकाले उत्सृष्टान् वेदानुपाकृत्य अध्ययनं यावदुत्सर्गमिति सूत्रार्थः ॥ १२ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

गदाधरः ॥ **पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजेरन् ॥** पौषमासस्य रोहिण्यां रोहिणीनक्षत्रे । मध्यमायामष्टकायां । पौष्या ऊर्द्ध्व-

मष्टम्यां वा अध्यायान् वेदान् उत्सृजेरन् पूर्वमुपाकृतान् पुनरुपाकरणं यावन्नाधीयीरन् । उत्सर्गप्रकारमाह । उदकान्तं गत्वाऽद्भिर्देवाँश्छन्दाꣳसि वेदानृषीन्पुराणाचार्यान् गन्धर्वानितराचार्यान्संवत्सरं च सावयवं पितॄनाचार्यान् स्वाँश्च तर्पयेयुः ॥ मध्याद्युदकान्तं उदकसमीपं गत्वा तत्र स्नात्वाऽद्भिर्देवादींस्तर्पयेयुराचार्यसहिताः शिष्याः । उदकान्तगमनेन च स्नानं लभ्यते । अत्र नदीरजोदोषो न भवति । तदुक्तम् ॥ उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्योपरागे च रजोदोषो न विद्यत इति ॥ सावित्रीं चतुरनुद्रुत्य विरताः स्म इति प्रब्रूयुः ॥ तर्पणस्यान्ते आचार्यसहिताः सर्वे शिष्याः सावित्रीं तत्सवितुरित्यृचं चतुःकृत्वोऽनुद्रुत्य पठित्वा विरताः स्म इति मन्त्रं ब्रूयुः ॥ क्षपणं प्रवचनं च पूर्ववत् ॥ ततः क्षपणं अनध्ययनं लोमनखानामनिकृन्तनं च । प्रवचनं चाध्यायादीनां पठनं पूर्ववत् उपाकर्मकालवत् । ततस्त्रिरात्रानन्तरं शुक्लपक्षेषु छन्दांस्यधीयीरन् कृष्णपक्षेष्वङ्गानि । ततोऽर्द्धषष्ठान्मासानर्द्धसप्तमान्वा मासानेवमेवाधीत्य सर्वत उत्सृज्य उपाकृत्य चाधीयीतेति सिद्धम् ॥ ॥ * ॥ ॥ * ॥

इति श्री त्रिरग्नि० द्वितीयकाण्डे द्वादशी कण्डिका ॥ १२ ॥ * ॥ ॥ * ॥

अथ पदार्थक्रमः । पौषस्य रोहिण्यां मध्यमाष्टकायां वा पौषस्यैवाध्यायोत्सर्गः । तत्र मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । उदकान्तगमनम् । स्नात्वाऽद्भिर्देवादितर्पणम् । देवास्तृप्यन्तु । छन्दांसि तृप्यन्तु वेदास्तृप्यन्तु ऋषयस्तृप्यन्तु पुराणाचार्यास्तृप्यन्तु गन्धर्वास्तृप्यन्तु इतराचार्यास्तृप्यन्तु संवत्सरः सावयवस्तृप्यतु पितरस्तृप्यन्तु आचार्यास्तृप्यन्तु । नामगोत्रोच्चारणपूर्वकं स्वाँश्चपित्रादींस्तर्पयेयुः । जीवपितृकाणान्तु पितामहादितर्पणम् । ततस्तत्सवितुरित्यस्याः सावित्र्याश्चतुरनुद्रवणम् । विरताः स्म इति सकृत् ब्रूयुः । उपाकर्मवदध्यायादीनां पठनम् । त्रिरात्रमनध्यायः । लोमनखानामनिकृन्तनं च त्रिरात्रम् । ततस्त्रिरात्रादूर्ध्वं शुक्लपक्षेषु छन्दांसि अधीयीरन् कृष्णपक्षेष्वङ्गानि । ततः पुनरर्द्धषष्ठमासानधीत्यार्द्धसप्तमासान्वाऽधीत्य एवमेवोत्सर्गं विधाय उभांकवीत्यादिकामृचं जपित्वा त्रिरात्रमेकत्रावस्थाय पश्चाद्यथेष्टं पृथक् गच्छेयुः । ततः पुनरुपाकरणकाले उत्सृष्टान्वेदानुपाकृत्याध्ययनं यावदुत्सर्गम् । वृद्धाचारकारिकायां विशेषः । पौषस्य रोहिण्यामुत वाऽष्ठकां प्राप्य मध्यमाम् । उदकान्तं समासाद्य वेदस्योत्सर्जनं बहिः ॥ स्नातव्यं विधिवत्तत्र स्थापयेदृष्यरुन्धती । प्रवराश्च ततो धीमान् कुर्या-

त्तेषां प्रतिष्ठितिम् ॥ इमावेवेति यजुषा नामान्येषां विनिर्दिशेत् । अद्भिस्तान् स्थापयेत्तत्र सप्तऋषय इत्यृचा ॥ अर्घस्तेभ्यः प्रदातव्यः पूजनं चन्दनादिभिः ॥ नैवेद्यैर्विविधैः पूज्या वेदस्य हितमिच्छता ॥ ऋषीणां प्रीतये दद्यादुपवीतान्यनेकशः ॥ प्रणम्य च मुनीन् भक्त्या पश्चात्तर्पणमाचरेत् ॥ देवाश्छन्दांसि वेदाश्च ऋषयश्च सनातनाः ॥ तथा। पुराणाचार्यान् गन्धर्वानितराचार्यांस्तथैव च ॥ अहोरात्राण्यर्द्धमासा मासा ऋतव एव च॥ संवत्सरोऽवयवैः सार्द्धमयं पुरश्च पञ्चभिः ॥ मन्त्रैर्द्वाभ्यांमूर्द्धेति माछन्दस्तिस्र एव च॥ एवं षोडशभिर्मन्त्रैः सप्तऋषय इत्येकया॥ चतुर्भिस्तर्पयेद्वंशैरिमावेवेत्यनेन च ॥ सावित्रीं पाठयेच्छिष्यान् चतुःकृत्वो गुरुः स्वयम् ॥ विरताः स्मेति पठेयुस्ते प्रणवं योजयेत्कविः ॥ सावित्रीं त्रिः समुच्चार्य अध्यायांश्च प्रपाठकान् । शतस्थानान्यनुस्मृत्य कण्डिकाश्च तथान्तिमाः ॥ अन्तिमाः फक्किका ब्रूयादग्निमीळे पुरोहितम्। इषे त्वेत्यग्न आयाहि शन्नो देवीरभिष्टयः । सहनोऽस्त्विति मन्त्रं च पश्चादुभाकवीति च इति ॥ ॥ * ॥ इति पदार्थक्रमः ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ पुण्याह्ने लाङ्गलयोजनम् ज्येष्ठया वेन्द्रदैवत्यम् ॥ १ ॥ इन्द्रं पर्जन्यमश्विनौ मरुत उदलाकाश्यपं स्वातिकारीं सीतामनुमतिं च दध्ना तण्डुलैर्गन्धैरक्षतैरिष्ट्वाऽनडुहो मधुघृते प्राशयेत् ॥ २ ॥ सीरायुञ्जन्तीति योजयेत् ॥ ३ ॥ शुनं सुफाला इति कृषेत् फालं वा लभेत ॥ ४ ॥ नवाऽग्न्युपदेशाद्वपनानुपङ्गाच्च ॥ ५ ॥ अग्न्यमभिषिच्याकृष्टं तदाकृषेयुः ॥ ६ ॥ स्थालीपाकस्य पूर्ववद्देवता यजेदुभयोर्व्रीहियवयोः प्रवपन्सीतायज्ञे च ॥ ७ ॥ ततो ब्राह्मणभोजनम् ॥ ॥ ८ ॥ ॥ * ॥

कर्कः ॥ पुण्याह्ने लाङ्गलयोजनम् ॥ प्रथमं कृषिप्रवृत्तस्यैतद्भवति । पुण्याहग्रहणमापूर्यमाणपक्षोदगयनाद्यनादरार्थम् । लाङ्गलयोजनं हलयोजनमित्यर्थः ॥ ज्येष्ठया वेन्द्रदैवत्यम् ॥ ज्येष्ठया वेति हेतौ तृतीया। अपुण्याहेऽपि ज्येष्ठया भवति । लाङ्गलयोजनं । कुत एतत् । इन्द्रदैवत्यं ज्येष्ठानक्षत्रं इन्द्रायत्ता च कृषिरिति ॥ इन्द्रं पर्जन्यमश्विनौ मरुत उदलाकाश्यपं स्वातिकारीं सीतामनुमतिं च दध्ना तण्डुलैर्गन्धैरक्षतैरिष्ट्वा । इन्द्रादिदेवताविशेषान् दध्यादि-

भिरिष्ट्वा । इष्ट्वेत्यनेन नमस्कारान्तैरेभिर्मन्त्रैर्बलिहरणमिन्द्राय नम इत्येवमादिभिः । अनडुहो मधुघृते प्राशयेत् ॥ सीरायुञ्जन्तीति योजयेत् ॥ शुनꣳ सुफाला इति कृषेत् ॥ फालं वाऽऽलभेत ॥ कुत एतत् । लिङ्गाच्च मन्त्रयोः । न वाऽग्न्युपदेशात् । न चैतौ मन्त्रौ विनियोक्तव्यौ किङ्कारणं अग्नौ ह्येतावुपदिष्टौ न चाग्निप्रकरणपठितयोरिहोपदेशो नातिदेशः । किञ्च ॥ वपनानुषङ्गाच्च । वपनेऽपि तन्मन्त्राणामनुषङ्गः प्राप्नोति न चैतदिष्यते ॥ अग्र्यमभिषिच्याकृष्टं तदाकृषेयुः ॥ योऽग्र्यो वल्लभो बलीवर्दस्तस्य चाभिषेको घुर्घुरमालादिना अनेन प्रकारेणाकृष्टं कृषेयुः ॥ स्थालीपाकस्य पूर्ववद्देवता यजेदुभयोर्व्रीहियवयोः प्रवपन्सीतायज्ञे च ॥ ततो ब्राह्मणभोजनम् ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ पुण्याहग्रहणं चापूर्यमाणपक्षोदगयनाद्यनादरार्थम् । लाङ्गलं हलम् तस्य योजनमनुसन्धानम् । तच्च प्रथमकृषिप्रवृत्तस्य भवति । ज्येष्ठयावेति हेतौ तृतीया । अतोऽपुण्याहेऽपि ज्येष्ठया तद्भवति लाङ्गलयोजनम् । कुत एतत् । इन्द्रदैवत्यं हि ज्येष्ठानक्षत्रम् । इन्द्रायत्ता च कृषिरिति । इन्द्रादिदेवताविशेषान्दध्यादिभिरिष्ट्वा । इष्टिश्च नमस्कारान्तैरिन्द्रायनम इत्यादिमन्त्रैर्बलिहरणम् । ततोऽनडुहो मधुघृतें प्राशयेत् । अनडुहश्चतुःप्रभृतीन् । योजनञ्च लाङ्गले बलीवर्दयोः सीरायुञ्जन्तीति मन्त्रेण । तत्र बुधो गायत्री सीरायोजने० । शुनमिति मन्त्रेण भूमिङ्कृषेत् फालं हलं वा लभेतेति विकल्पो मन्त्रलिङ्गात् । तत्र कुमारहरितस्त्रिष्टुप् सीताकर्षणे० । न वा एतौ मन्त्रौ न वा विनियोक्तव्यौ । कुतः अग्न्युपदेशात् । यत एतावग्नावुपदिष्टौ । न चाग्निप्रकरणपठितयोरिहोपदेशो न वातिदेशः । किञ्च वपनानुषङ्गाच्च वपनेपि च तन्मन्त्राणामनुषङ्गः प्राप्नोति । नचैतदिष्यते । अग्र्यस्य श्रेष्ठस्य बलीवर्दस्याभिषेको घर्घरमालादिनाऽलङ्कारः । एवम्प्रकारेणाकृष्टम्भूभागङ्कृषेयुः । तदा एतत्प्रवृत्तिकाले । इदमपरङ्कर्मान्तरम् । स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । पूर्ववल्लाङ्गलयोजनोक्तदेवता इन्द्रमित्याद्या यजेत । किङ्कुर्वन् व्रीहियवयोः प्रवपन् पूर्ववत् सीतायज्ञे च वक्ष्यमाणे । अत्र च स्थालीपाकस्य श्रपणानुपदेशात्सिद्धस्योपादानमिति ॥ ॥ १३ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ पुण्याहे लाङ्गलयोजनम् ॥ प्रथमं कृषिप्रवृत्तस्यैतत्कर्मोच्यते । पुण्याहे उदगयनशुक्लपक्षादिव्युदासेन चन्द्रतारानुकूले दिवसे लाङ्गलस्य हलस्य योजनं प्रवर्त्तनम् ॥ ज्येष्ठया वेन्द्रदैवत्यम् ॥ पक्षान्तरमाह । यद्वा अपुण्याहे-

ऽपि ज्येष्ठया नक्षत्रेण युते लाङ्गलयोजनम् कुतः। इन्द्रदैवत्या ज्येष्ठा यतः इन्द्रायत्ता च कृषिरिति । एतच्च मातृपूजाभ्युदयिकश्राद्धपूर्वकम् ॥ **इन्द्रं पर्जन्यमश्विनौ मरुत उदलाकाश्यपꣳ स्वातिकारीꣳ सीतामनुमतिं च दध्ना तण्डुलैर्गन्धैरक्षतैरिष्ट्वाऽनडुहो मधुघृते प्राशयेत्** ॥ तत्र इन्द्रादीननुमत्यन्तान् अष्टौ देवताविशेषान् दध्ना तण्डुलैर्गन्धैरक्षतैश्च अक्षताः यवाः इष्ट्वा नमोन्तैर्नाममन्त्रैर्बलिहरणेन सम्पूज्य अनडुहो वृषभान् मधुघृते मिलिते प्राशयेत् । तद्यथा । दधितण्डुलगन्धाक्षतान् पात्रे कृत्वा शुचिराचान्तः प्राङ्मुख उपविश्य कृषिक्षेत्रैकदेशे गोमयोपलिप्ते हस्तेन गृहीत्वा । इन्द्राय नमः पर्जन्याय नमः अश्विभ्यां नमः मरुद्भ्यो नमः उदलाकाश्यपाय नमः स्वातिकार्यै नमः सीतायै नमः अनुमत्यै नमः । यथामन्त्रं त्यागाः । इदमादिका नमोरहिताः । इत्यष्टौ बलीन् प्राक्संस्थान् दत्वा ततो बलीवर्दान् मधुघृते पात्रे कृत्वा तूष्णीं प्रत्येकं प्राशयेत् लेहयेत् । **सीरा युञ्जन्तीति योजयेच्छुनꣳसुफाला इति कृषेत् फालं वा लभेत** ॥ सीरायुञ्जन्तीत्यनयर्चा वृषभौ हले योजयेद्दक्षिणोत्तरक्रमेण शुनꣳसुफाला इत्यनयर्चा भूमिं कृषेत् । यद्वा शुनꣳ सुफाला इति फालमभिमृशेत् ॥ उभयलिङ्गत्वान्मन्त्रस्य ॥ **न वाऽग्न्युपदेशात्** ॥ न वा एतौ योजने कर्षणे च मन्त्रौ भवतः । कुतः अग्नौ अग्निचयने एतयोरुपदेशात् । न च अग्निप्रकरणे आम्नातयोरत्रोपदेशः न वाऽतिदेशः ॥ **वपनानुषङ्गाच्च** ॥ इतोऽपि मन्त्रौ न भवतः अग्निप्रकरणे बीजवपने ये मन्त्रा या ओषधीरित्याद्या विनियुक्तास्तेषामप्यत्रानुषङ्गः स्यात् । यदि लिङ्गमात्रेणोपदेशातिदेशाभावेऽपि विनियुज्यते तदा वपनमन्त्रा अपि तल्लिङ्गत्वाद्विनियोजनीया भवेयुः । न चैतदिष्यते ॥ **अग्र्यमभिषिच्याकृष्टं तदाकृषेयुः** ॥ अग्र्यं श्रेष्ठं बलीवर्दं अभिषिच्य गन्धमाल्यादिभिर्भूषयित्वा अकृष्टं अविलिखितं यत्क्षेत्रमाकृषेयुः विलिखेयुः ॥ **ततो ब्राह्मणभोजनम्** ॥ इति लाङ्गलयोजनम् । इतिसूत्रार्थः । अथ साग्निकस्य कृषिकर्मणि विशेषमाह ॥ **स्थालीपाकस्य पूर्ववद्देवता यजेदुभयोर्व्रीहियवयोः प्रवपन् सीतायज्ञे च** ॥ स्थालीपाकस्य चरोः पूर्ववल्लाङ्गलयोजनोक्तदेवता इन्द्रादिकाः यजेत किङ्कुर्वन् प्रवपन् सीरां उप्रिकुर्वन् कयोः व्रीहियवयोः व्रीहियवयोर्वपनकाले अत्र स्थालीपाकस्य श्रपणोपदेशाभावात् सिद्धस्योपादानम् । इति सूत्रार्थः । अथ प्रयोगः । तत्र प्रथमप्रयोगे मातृपूजाभ्युदयिकानन्तरं आवसथ्याग्नौ ब्रह्मोपवेशनादिप्राशनान्ते तण्डुलस्थाने पूर्वसिद्धं स्थालीपाकमादाय

प्रोक्षणकाले प्रोक्षेत । तत आज्यभागानन्तरं स्थालीपाकेन लाङ्गलयोजनदेवताभ्यो जुहुयात् । तद्यथा इन्द्राय स्वाहा इदमिन्द्राय० । तथा पर्जन्याय स्वाहा इदम्पर्जन्याय० अश्विभ्याᳬं स्वाहा इदमश्विभ्यां०, मरुद्भ्यःस्वाहा इदम्मरुद्भ्यो० । उदलाकाश्यपाय स्वाहा इदमुदलाकाश्यपाय० । स्वातिकार्यै स्वाहा । इदं स्वातिकार्यै० । सीतायै स्वाहा इदं सीतायै० अनुमत्यै स्वाहा इदमनुमत्यै० । ततोऽग्नये स्विष्टकृते स्वाहेति हुत्वा आज्येन नवाहुतीश्च हुत्वा प्राशनब्रह्मणेदक्षिणादानब्राह्मणभोजनानि कुर्यात् । इति व्रीहियववपनकर्म । सीतायज्ञे च एता एव देवताः स्थालीपाकेन यजेदित्यतिदेशः ॥ ॥ * ॥

गदाधरः ॥ पुण्याहे लाङ्गलयोजनम् ॥ यस्य कृषिकर्मण्यधिकारस्तस्येदमुच्यते । पुण्याहे उदगयने शुक्लपक्षे चन्द्राद्यनुकूलदिने लाङ्गलस्य हलस्य योजनं प्रवर्तनम्भवति । प्रथमकृषिप्रवृत्तस्यैतत्कर्म भवति । उदगयने आपूर्यमाणपक्षे पुण्याह इत्यनेनैव प्राप्तत्वादत्र पुण्याहग्रहणमग्रिमसूत्रे अपुण्याहत्वद्योतनार्थम् । पक्षान्तरमाह ॥ ज्येष्ठया वेन्द्रदैवत्यम् ॥ अथवा अपुण्याहेऽपि ज्येष्ठया नक्षत्रेण युते दिने लाङ्गलयोजनम् भवति । प्रथमकृषिप्रवृत्तस्यैतत्कर्म भवति । उदगयन इन्द्रदैवत्यं ज्येष्ठानक्षत्रं यतः इन्द्राधीनञ्च कृषिकर्म वृष्टिनिमित्तत्वात् । ज्येष्ठया वेति हेतौ तृतीया । ज्येष्ठायामिन्द्रदैवत्यं चेति भर्तृयज्ञपाठः ॥ इन्द्रम्पर्जन्यमश्विनौ मरुत उदलाकाश्यपᳬं स्वातिकारीᳬं सीतामनुमतिञ्च दध्ना तण्डुलैर्गन्धैरक्षतैरिष्ट्वाऽनडुहो मधुघृते प्राशयेत् ॥ यागशब्देन देवतोद्देशेन बल्युपहार उच्यते । इन्द्रादिदेवताविशेषान् दध्ना तण्डुलैर्गन्धैरक्षतैर्यवैश्चेष्ट्वा नमोऽन्तैर्नाममन्त्रैर्बलिहरणेन सम्पूज्य अनडुहो बलीवर्दान् मधुघृते पात्रे कृत्वा तूष्णीं प्रत्येकम्प्राशयेत् ॥ सीरायुञ्जन्तीति योजयेच्छुनᳬं सुफाला इति कृषेत्फालं वा लभेत ॥ यागानन्तरं सीरायुञ्जन्तीत्यनेन मन्त्रेण वृषभौ हले योजयेद्दक्षिणोत्तरक्रमेण । ततः शुनᳬं सुफाला इति भूमिं कृषेत् । अथवा शुनᳬं सुफाला इति फालं हलमुखमायसमभिमृशेत् । उभयलिङ्गत्वान्मन्त्रस्य । नवाऽग्न्युपदेशात् ॥ न चैतौ मन्त्रौ विनियोक्तव्यौ । किङ्कारणम् । अग्निचयने एतावुपदिष्टौ । न चाग्निप्रकरणपठितयोरिहोपदेशो नातिदेशः । किञ्च । वपनानुषङ्गाच्च ॥ अग्निचयनप्रकरणे अन्नवपने ये मन्त्रा या ओषधीरित्यादयो विनियुक्तास्तेषामप्यनुषङ्गः प्राप्नोति । यदि लिङ्गमात्रेण विनियोगः स्यात् । न चैतदिष्यते । अग्र्यमभिषि-

च्याकृष्टं तदाकृषेयुः ॥ अग्र्यं वल्लभं बलीवर्दमभिषिच्य घुर्घुरमालादिना भूषयित्वा अकृषमविलिखितं यत्क्षेत्रन्तत्कृषेयुः ॥ स्थालीपाकस्य पूर्ववद्देवता यजेदुभयोर्व्रीहियवयोः प्रवपन्सीतायज्ञे च ततो ब्राह्मणभोजनम् ॥ इदमपरङ्कर्मान्तरम् । स्थालीपाकस्य श्रपणानुपदेशादत्र सिद्धस्यैव ग्रहणम् । स्थालीपाकस्य चरोः पूर्ववल्लाङ्गलयोजनोक्ता देवता इन्द्रादिका यजेत् । किङ्कुर्वन् प्रवपन् उप्तिङ्कुर्वन् । कयोः व्रीहियवयोर्वपनकाले । ततो ब्राह्मणस्य भोजनङ्कार्यम् ॥ ॥ * ॥

इति श्री त्रिरग्निचित्सम्राट्स्थपतिवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्डे त्रयोदशी कण्डिका ॥ ॥ १३ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

अथ पदार्थक्रमः । पुण्याहे लाङ्गलयोजनम् । उदगयनाद्यभावेऽपि ज्येष्ठानक्षत्रे वा मातृपूजापूर्वकमाभ्युदयिकश्राद्धम् । ततो दध्याद्यादाय लाङ्गलयोजनदेशे गमनम् । तत्र स्थण्डिलानुलेपनम् । तत्र दधितण्डुलगन्धाक्षतमिश्रितैरिन्द्रादिभ्यो बलिहरणम् । हस्तेनैव । इन्द्राय नमः पर्जन्याय नमः अश्विभ्यान्नमः मरुद्भ्यो नमः उदलाकाश्यपाय नमः स्वातिकार्यै नमः सीतायै नमः अनुमत्यै नमः । यथादैवतं त्यागाः । अनडुहो मधुघृते प्राशयेत् । ततः प्रथमबलीवर्दस्य मण्डनम् । ततोऽकृष्टे देशे कर्षणम् । ततो ब्राह्मणभोजनम् । अथ व्रीहियवयोर्वपनकाले मातृपूजापूर्वकमाभ्युदयिकं कृत्वाऽऽवसथ्येऽग्नौ कर्म भवति । तत्र ब्रह्मोपवेशनादिप्राशनान्ते विशेषः । तण्डुलस्थाने सिद्धस्य चरोरासादनम् प्रोक्षणञ्च । आज्यभागान्ते स्थालीपाकेन लाङ्गलयोजनदेवताभ्यो होमः । इन्द्राय स्वाहा पर्जन्याय स्वाहा अश्विभ्यां स्वाहा मरुद्भ्यः स्वाहा उदलाकाश्यपाय स्वाहा स्वातिकार्यै स्वाहा सीतायै स्वाहा अनुमत्यै स्वाहा । यथादैवतं त्यागाः । ततश्चरुणा स्विष्टकृत् । ततो भूरादिनवाहुतयः । संस्रवप्राशनम् । मार्जनम् । पवित्रप्रतिपत्तिः । दक्षिणादानम् । प्रणीताविमोकः ॥ ॥ * ॥ इति पदार्थक्रमः ॥ ॥ * ॥

मूलम् ॥ अथातः श्रवणाकर्म ॥ १ ॥ श्रावण्यां पौर्णमास्याम् ॥ २ ॥ स्थालीपाकꣳ श्रपयित्वाऽक्षतधानाश्चैककपालं पुरोडाशं धानानाम्भूयसीः पिष्ट्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति ॥ ३ ॥ अपश्वेतपदाजहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा ॥ ४ ॥ न वै श्वेत-

स्वाध्याचारे ऽहिर्ददर्श कश्चन । श्वेताय वैदर्व्याय नमः स्वाहेति ॥ ५ ॥ स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति ॥ ६ ॥ धानावन्तमिति धानानाम् ॥ ७ ॥ घृताक्तान्सक्तून्सर्पेभ्यो जुहोति ॥ ८ ॥ आग्नेयपाण्डुपार्थिवानाᳬं सर्पाणामधिपतये स्वाहा श्वेतवायवान्तरिक्षाणाᳬं सर्प्पाणामधिपतये स्वाहा ऽभिभूःसौर्य्यदिव्यानाᳬं सर्प्पाणामधिपतये स्वाहेति ॥ ९ ॥ सर्वहुतमेककपालं ध्रुवाय भौमाय स्वाहेति ॥ १० ॥ प्राशनान्ते सक्तूनामेकदेशᳬं शूर्पे न्युप्योपनिष्क्रम्य बहिःशालायाः स्थण्डिलमुपलिप्योल्कायां ध्रियमाणायां माऽन्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयति ॥ ११ ॥ आग्नेयपाण्डुपार्थिवानाᳬं सर्पाणामधिपतेऽवनेनिक्ष्व श्वेतवायवान्तरिक्षाणाᳬं सर्पाणामधिपतेऽवनेनिक्ष्वाभिभूः सौर्यदिव्यानाᳬं सर्पाणामधिपतेऽवनेनिक्ष्वेति ॥ १२ ॥ यथाऽवनिक्तन्दर्व्योप[illegible] सक्तून्सर्पेभ्यो बलिᳬं हरति ॥ १३ ॥ आग्नेयपाण्डुपार्थिवानाᳬं सर्पाणामधिपत एषते बलिः श्वेतवायवान्तरिक्षाणाᳬं सर्पाणामधिपत एषते बलिरभिभूःसौर्यदिव्यानाᳬं सर्पाणाम[illegible]त एषते बलिरिति ॥ १४ ॥ अवनेज्य पूर्ववत्कङ्कतैः प्रलिखति ॥ १५ ॥ आग्नेयपाण्डुपार्थिवानाᳬं सर्पाणामधिपते प्रलिखस्व श्वेतवायवान्तरिक्षाणाᳬं सर्पाणामधिपते प्रलिखस्वाभिभूःसौर्यदिव्यानाᳬं सर्पाणामधिपते प्रलिखस्वेति ॥ १६ ॥ अञ्जनानुलेपनᳬं स्रजश्चाञ्जस्वानुलिम्पस्व स्रजोऽपि नह्यस्वेति ॥ १७ ॥ सक्तुशेषᳬं स्थण्डिले न्युप्योदपात्रेणोपनिनीयोपतिष्ठते नमोऽस्तु सर्पेभ्य इति तिसृभिः ॥ १८ ॥ स यावत्कामयेत न सर्पा अभ्युपेयुरिति तावत्सन्ततयोदधारया निवेशनन्त्रिः परिषिञ्चन्परीयादपश्वेतपदा जहीति द्वाभ्याम् ॥ १९ ॥ दर्वीशूर्पं प्रक्षाल्य प्रतप्य

प्रयच्छति ॥ २० ॥ द्वारदेशे मार्जयन्त आपोहिष्ठेति तिसृभिः ॥ २१ ॥ अनुगुप्तमेतꣳ सक्तुशेषं निधाय ततोऽस्तमितेऽस्तमितेऽग्निं परिचर्य दर्व्योपघातꣳ सक्तून्सर्पेभ्यो बलिꣳ हरेदाग्रहायण्याः ॥ २२ ॥ तꣳ हरन्तन्नान्तरेण गच्छेयुः ॥ २३ ॥ दर्व्याचमनम्प्रक्षाल्य निदधाति ॥ २४ ॥ धाना प्राश्नन्त्यसꣳस्यूताः ॥ २५ ॥ ततो ब्राह्मणभोजनम् ॥ २६ ॥ ॥ १४ ॥

कर्कः ॥ अथातः श्रवणाकर्म । व्याख्यास्यत इति सूत्रशेषः ॥ श्रावण्यां पौर्णमास्यां । कर्तव्यम् । स्थालीपाकꣳ श्रपयित्वाऽक्षतधानाश्चैककपालम्पुरोडाशम् ॥ तद्गतोपादानम्माभूदिति श्रपयित्वेत्युच्यते । भर्जनैककपालयोरपि प्रोक्षणम्भवति । अर्थवत्प्रोक्षेत्यविशेषोपदेशात् ॥ धानानाम्भूयसीः पिष्ट्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति अपश्वेतपदा जहीति । द्वाभ्याम्मन्त्राभ्याम् । स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्च । इति चतस्र आहुतयः ॥ धानावन्तमिति धानानाम् । एकाहुतिञ्जुहोति । घृताक्तान्सक्तून्सर्पेभ्यो जुहोति । आग्नेयपाण्डुपार्थिवानामिति । एतैस्त्रिभिर्मन्त्रैस्तिस्र आहुतयः ॥ सर्वहुतमेककपालम् ॥ पुरोडाशम् ॥ ध्रुवाय भौमाय स्वाहेति ॥ ततः स्थालीपाकधानासक्तुभ्यः स्विष्टकृत् ॥ प्राशनान्ते सक्तूनामेकदेशꣳ शूर्पे न्युप्योपनिष्क्रम्य बहिः शालायां स्थण्डिलमुपलिप्योल्काया निध्रियमाणायां माऽन्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयत्याग्नेयपाण्डुपार्थिवानामिति । एभिर्मन्त्रैः शेषं निगदव्याख्यातम् ॥ यथाऽवनिक्तन्दर्व्योपघातꣳ सक्तून्सर्पेभ्यो बलिꣳ हरति । आग्नेयपाण्डुपार्थिवानामिति ॥ एभिर्मन्त्रैः । यथाऽवनिक्तमिति । येषु देशेष्ववनेजनं कृतन्तत्र तत्र बलिहरणम् । दर्व्योपघातमिति दर्व्योपहत्योपहत्येत्यर्थः । उपपूर्वो हन्तिर्ग्रहणार्थः । अथ स्रुवेणोपहत्याज्यमिति ॥ अवनेज्य पूर्ववत्कङ्कतैः प्रलिखत्याग्नेयपाण्डुपार्थिवानामिति । प्रतिमन्त्रम्प्रतिबलिहरणम्प्रलेखः । अञ्जनानुलेपनꣳ स्रजश्चाञ्जस्वानुलिम्पस्व स्रजोऽपि नह्यस्वेति । एभिर्मन्त्रैः प्रतिमन्त्रं यथालिङ्गम्प्रतिबलिहरणन्ददाति ॥ सक्तुशेषꣳ स्थण्डिले न्युप्योदपात्रेणोपनिनीयोपतिष्ठते नमोऽस्तु सर्पेभ्य इति तिसृभिः । ऋग्भिः सक्तुशेषन्तु यत् शूर्पे न्युप्योपनीतम् ॥ स यावत्कामयेत

न सर्पा अभ्यपेयुरिति तावत्सन्ततयोदधारया निवेशनन्त्रिः परिषिञ्चन्परीयादपश्वेतपदा जहीति द्वाभ्याम् । मन्त्राभ्याम् ॥ दर्वीशूर्पं प्रक्षाल्य प्रतप्य प्रयच्छति ॥ उल्काधारस्य । प्रतपनं चोल्कायामेव सन्निधानात् ॥ द्वारप्रदेशे मार्जयन्त आपोहिष्ठेति तिसृभिः । ऋग्भिः । बहुवचनोपदेशाद्ब्रह्मयजमानोल्काधाराश्च । अनुगुप्तमेतꣳ सक्तुशेषन्निधाय ततोऽस्तमितेऽस्तमितेऽग्निम्परिचर्य दर्व्योपघातꣳ सक्तून्सर्पेभ्यो बलिꣳ हरेदाग्रहायण्याः ॥ तत इति सक्तुभ्यो दर्व्योपहत्योपहत्यास्तमितेऽस्तमितेऽग्निपरिचरणं कृत्वा बलिं हरेदाग्रहायणीं यावत् । तावद्बलिहरणम् । अवनेजनदानप्रत्यवनेजनैः ॥ तꣳ हरन्तन्नान्तरेण गच्छेयुः ॥ अन्तरागमनप्रतिषेधश्च बलिहरणकर्तुरावसथ्यस्य । दर्व्याचमनम्प्रक्षाल्य निदधाति । प्रत्यहम् ॥ धानाः प्राश्नन्त्यसꣳस्यूताः ॥ अनवखण्डयन्तः ॥ ततो ब्राह्मणभोजनम् । इत्युक्तार्थमेव ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ अथातः श्रवणाकर्म । वक्ष्यत इति सूत्रशेषः । तच्छ्रावण्यामेव पौर्णमास्याम्भवति । कथमित्यत आह स्थालीपाकमिति । तद्गतोपादानम्माभूदिति श्रपयित्वेत्युक्तेः । भर्जनादीनामपि प्रोक्षणम् । अर्थवत्प्रोक्ष्येत्यविशेषोपदेशात् । धानानाम्मध्ये भूयसीः बह्वीर्धानाः पिष्ट्वा सक्तुत्वमापाद्य आज्याहुती द्वे हुत्वा वक्ष्यमाणमन्त्राभ्याम् ।' अपश्वेतेत्यादि मन्त्रद्वयं सर्पभयनिवारकम् । तदर्थः । तत्र द्वयोः प्रजापतिरनुष्टुप्गायत्र्यौ सर्प आज्यहोमे० । हे श्वेतपद गूढपद त्वं इमाः मदीयाः प्रजाः राजबान्धवैर्वामुकिप्रभृतिभिस्तथा वारुणैर्वरुणसम्बन्धिभिश्च सर्पयूथैः सह जहि त्यज । पूर्वपददीर्घश्छान्दसः । हित्वा च अप इतः स्थानादप अपगच्छ । किम्भूताः प्रजाः । सप्त सपिण्डसगोत्रसोदकत्वभेदेन सप्त सप्तपुरुषसम्बन्धाः । सप्तकुलजा वा । तद्यथा । पिता माता च भार्या च दुहिता भगिनी तथा । पितृष्वसा मातृष्वसा सप्तगोत्राण्यमूनि वै इति । सर्वाश्च सकलाश्च सेवकपश्वादिरूपाः । कथम् पूर्वेण पुरतः । अथापरेण पश्चात् । पूर्वोत्तराः प्रजा इति वा । वारुण्यादिभिः सह तुभ्यं सुहुतमस्तु । १ । एतदेवोत्तरमन्त्रेण दृढयति । नवा इति । वै इति शब्दद्वयं अतिनिश्चयार्थकम् । श्वेतस्य श्वेतपदस्य अध्याचारे आधिपत्ये अधिकृतप्रदेशे वा । अहिः कश्चिदपि सर्पः कञ्चन जनन्न ददर्श पापदृष्ट्या मा पश्यत्वित्यर्थः । तदर्थं श्वेताय शुद्धाय प्रसन्नाय वा नमस्कारयुक्तं स्वाहा सुहुतमस्तु । किम्भूताय दर्व्याय दर्वीकराय दीर्घफणायेत्यर्थः । यद्वा वैदर्व्याय

विदर्वापत्याय तदा वैशब्द एक एव । सर्पगमनमार्गे श्वेतरेखाया दृश्यमानत्वात् तस्य श्वेतपदत्वम् । मदीयनमस्कारयुजा सुहुतेन प्रीतोऽस्माकं सर्पभयन्निवर्तयेति वाक्यार्थः । स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति । चतस्र आहुतीः । धानावन्तमिति । मन्त्रेण धानानामेकामाहुतिञ्जुहोति । तत्र घृताक्तसक्तुहोमे मन्त्रभेदेनाहुतित्रयम् । तदाह । आग्नेयपाण्डिङ्वति । तदर्थः । तत्र त्रयाणाम्परमेष्ठी यजुः सर्पाधिपतयः सर्पयागे सर्पसक्तुहोमे० । आग्नेयाः अग्निदेवत्याः । पाण्डवः पाण्डुसञ्ज्ञसर्पजातीयाः । पार्थिवाः पृथिव्यां विहारिणः तेषां सर्पाणामधिपतये शेषाय वासुकये वा स्वाहा सुहुतमस्तु ॥ तथा श्वेताः श्वेतजातीयाः वायवाः वायुदेवत्या इति यावत् अन्तरिक्षाः अन्तरिक्षविहारिणः तेषामधिपतय इति प्राग्वत् ॥ २ ॥ तथा अभिभवन्ति सर्वानित्यभिभुवः । सौर्याः सूर्यदेवत्याः । दिव्याः द्युविहाराः । अत्र सर्वत्र द्वन्द्वसमासः । तेषाम् । अभिभूरित्यत्र विसर्गश्छान्दसः ॥ ३ ॥ अवनेजनबलिहरणप्रत्यवनेजनकङ्कतप्रलेखनाञ्जनानुलेपनस्रजश्चाप्येवमेव व्याख्येयाः । सर्वहुतञ्चापरिशेषितं सकलमित्यर्थः । तत्र चैकाऽऽहुतिः । सर्वहुतमेककपालं पुरोडाशं ध्रुवाय भौमाय स्वाहेति जुहोति । ततः स्थालीपाकस्य धानासक्तुभ्यः स्विष्टकृद्धोमः । प्राशनान्ते सक्तूनामेकदेशं शूर्पे न्युप्य प्रक्षिप्य ब्रह्मोल्काधाराभ्यां सह शालाया बहिः निष्क्रमणम् उपनिष्क्रम्य बहिः शालायां स्थण्डिलमुपलिप्य स्वयमेव । उल्का च लौकिकाग्निसम्भूता अन्तरागमनञ्च यजमानशालाग्न्योरेव । माऽन्तरागमतेति प्रैषमुक्त्वा वाग्यतः स्थण्डिले सर्पानवनेजयति आग्नेयादिभिर्मन्त्रैः प्रतिमन्त्रम् । शेषन्निगदव्याख्यातम् । यथाऽवनिक्तमिति यत्र यत्र देशेऽवनेजनङ्कृतन्तत्र तत्र बलिहरणम् । दर्व्योपघातन्दर्व्योपहत्येत्यर्थः । उपपूर्वो हन्तिश्च ग्रहणार्थः । अथ स्रुवेणोपहत्याज्यमिति च । प्रलेखनञ्च क्रमेण प्रतिमन्त्रम् । बलिकण्डूयनं कङ्कतैस्तानिच वैकङ्कतीयानि प्रादेशमात्राण्येतानि काष्ठानि भवन्ति । अञ्जनादीनि च प्रतिमन्त्रं यथाक्रमम्प्रतिबलिहरणन्ददाति । सक्तुशेषञ्च शूर्पे उपनीतं स्थण्डिले न्युप्य स्रुवेण छित्वा उपनिनीय आप्लाव्य उपस्थानन्नमोस्तु सर्पेभ्य इति तिसृभिर्ऋग्भिः । तत्र तिसृणाम्प्रजापतिरनुष्टुप् सर्पास्तदुपस्थाने० । स यावत्कामयेत एतावन्तन्देशन्न सर्पा अभ्युपेयुरिति । निवेशनङ्गृहम्प्रति तावन्तङ्गृहदेशं सन्ततयोदकधारया भूभागन्त्रिः परिषिञ्चन् परीयात् परिक्रामेत् । अपश्वेतपदा जहीति द्वाभ्याम्पूर्वोक्तमन्त्राभ्याम् । सकृन्मन्त्रेण परिगमनन्द्विस्तूष्णीम् । दर्वीशूर्पं प्रक्षाल्य प्रतप्य प्रयच्छति । उल्का-

धाराय । प्रतपनञ्चोल्कायामेव सन्निधानात् । द्वारदेशे स्थित्वा आत्मानं अद्भिः मार्जयन्ते आपोहिष्ठेति तिसृभिर्ऋग्भिः । बहुवचनोपदेशात् । अनेन ब्रह्मयजमानोल्काधाराश्च । एतम् । प्रकृतं । अनुगुप्तमेतᳬ सक्तुशेषन्निधाय ततोऽस्तमितेऽस्तमितेऽग्निम्परिचर्य दर्व्योपघातᳬसक्तून्सर्पेभ्यो बलिᳬ हरेदाग्रहायण्याः ॥ आग्रहायणीं यावत् । बलिहरणञ्चावनेजनदानप्रत्यवनेजनैः । तᳬ हरन्तन्नान्तरेण गच्छेयुः ॥ अन्तरागमनप्रतिषेधश्च बलिहरणकर्तुरावसथ्यस्य च । दर्व्याचमनम्मुखम्प्रक्षाल्य निदधाति प्रत्यहम् । दर्वीग्रहणान्न शूर्प्पस्य प्रक्षालनम् । धानाः प्राश्नन्त्यसᳬस्यूताः । अनवखण्डयन्त इत्यर्थः । तत एकं ब्राह्मणं कर्माङ्गं भोजयेत् ॥ ॥ १४ ॥

हरिहरः ॥ अथातः श्रवणाकर्म ॥ अथेदानीमावसथ्याग्निसाध्यकर्मणाम्प्रकृतत्वात् श्रवणाकर्मोच्यत इति शेषः ॥ श्रावण्याम्पौर्णमास्याम् ॥ तच्च श्रावणमासस्य शुक्लपञ्चदश्याङ्कर्तव्यम् ॥ स्थालीपाकᳬ श्रपयित्वाऽक्षतधानाश्चैककपालम्पुरोडाशम् ॥ स्थालीपाकञ्चरुम् अक्षतधानाः अक्षतानां सतुषाणां यवानां धानाः अक्षतधानाः ताश्च श्रपयित्वा एककपालमेकस्मिन्कपाले श्रप्यत इत्येककपालन्तम्पुरोडाशं श्रपयित्वेत्यनुषज्यते अन्यथा तद्भूतोपादानं स्यात् । अतश्च धानापुरोडाशयोः श्रपणोपदेशात् । भर्जनकपालयोरपि आसादने प्रोक्षणे भवतः अर्थवता प्रोक्षणमविशेषेणोपदिश्यते ॥ धानानाम्भूयसीः पिष्ट्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोत्यपश्वेतपदा जहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा ॥ न वै श्वेतस्याध्याचारेऽहिर्ददर्श कञ्चन । श्वेताय वैदर्व्याय नमः स्वाहेति ॥ धानानाम्भर्जितानां यवानाम्मध्ये भूयसीः बह्वीः पिष्ट्वा सक्तुत्वमापाद्य आज्यभागौ हुत्वा अपश्वेतपदा जहि नवै श्वेतस्याध्याचार इति द्वाभ्याम्मन्त्राभ्यान्द्वे आज्याहुती जुहोति । स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति ॥ अनन्तरं स्थालीपाकस्य चरोश्चतस्र आहुतीर्जुहोति यथा विष्णवे स्वाहेत्येवमादिभिश्चतुर्भिर्मन्त्रैः । धानावन्तमिति धानानाम् ॥ धानावन्तङ्करम्भिणमित्यनयर्चा धानानामेकामाहुतिञ्जुहोति ॥ घृताक्तान्सक्तून्सर्पेभ्यो जुहोत्याग्नेयपाण्डुपार्थिवानाᳬ सर्पाणामधिपतये स्वाहा ॥ श्वेतवायवान्तरिक्षाणाᳬसर्पाणामधिपतये स्वाहा ॥ अभिभूःसौर्यदिव्यानाᳬ सर्पाणामधि-

पतये स्वाहेति ॥ घृतेन आज्येन अक्ताः अभिघारिताः घृताक्ताः तान् सक्तून् सर्पेभ्य आग्नेयपाण्डुपार्थिवेत्यादिभिर्मन्त्रैः प्रतिमन्त्रमेकैकामेव तिस्र आहुतीर्जुहोति ॥ सर्वहुतमेककपालन्ध्रुवाय भौमाय स्वाहेति ॥ तत एककपालं पुरोडाशं सर्वहुतं यथा भवति तथा ध्रुवाय भौमाय स्वाहेत्यनेन मन्त्रेण जुहोति ॥ ततः स्थालीपाकधानासक्तुभ्यः स्विष्टकृद्धोमः । प्राशनान्ते सक्तूनामेकदेशꣳ शूर्पे न्युप्योपनिष्क्रम्य बहिः शालायां स्थण्डिलमुपलिप्योल्कायां ध्रियमाणायां माऽन्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयत्याग्नेयेति ॥ प्राशनान्ते संस्रवप्राशनानन्तरं सक्तूनामेकदेशं बलित्रयपर्याप्तं शूर्पे शरेषिकावंशान्यतममये इच्छापरिमाणे न्युप्य कृत्वा उपनिष्क्रम्य शालायाः सकाशान्निर्गत्य बहिरङ्गणे स्थंडिलभूमिं स्वयमेव गोमयेनोपलिप्य । अत्र सर्पानवनेजयतीत्यस्याः क्रियाया उपलेपनक्रियायाश्चैककर्तृकत्वेन पूर्वकालीनस्योपलेपनस्य ल्यबन्तत्वम् । समानकर्तृकयोः पूर्वकाले इति पाणिनीनां ल्यपः स्मरणात् । तेनात्र स्थण्डिलस्य स्वयम्पूर्वमुपलेपनम् । उल्कायान्ध्रियमाणायां ज्वलति काष्ठेऽन्येन ध्रियमाणे माऽन्तरागमत आवसथ्यस्य मम चान्तराले मागच्छत इत्युक्त्वा अभिधाय वाग्यतो मौनी सर्पान् आग्नेय श्वेत अभिभूरित्यादिभिस्त्रिभिर्मन्त्रैरवनेनिक्ष्वेत्येतदन्तैः प्राक्संस्थानवनेजयति अवनिक्तान् शुचीन् करोति ॥ यथाऽवनिक्तन्दर्व्योपघातꣳ सक्तून्सर्पेभ्यो बलिꣳ हरत्याग्नेयेत्यादि आधिपत एष ते बलिरिति । यथाऽवनिक्तं येषु देशेषु अवनेजनङ्कृतं यथाऽवनिक्तं अवनिक्तमनतिक्रम्येत्यर्थः ॥ दर्व्या प्रादेशमात्रया द्व्यङ्गुष्ठपर्वविस्तीर्णया पालाशाद्यन्यतमयज्ञियवृक्षोद्भवया उपघातम् उपहत्योपहत्य गृहीत्वा आग्नेयेत्यादिभिस्त्रिभिर्मन्त्रैरेष ते बलिरित्येतदन्तैः प्रतिमन्त्रं सर्पेभ्यो बलिं हरति ददाति । उपघातमिति णमुल्प्रत्ययान्तः उपपूर्वो हन्तिर्ग्रहणार्थः । अथ स्रुवेणोपहत्याज्यमिति यावत् ॥ अवनेज्य पूर्ववत्कङ्कतैः प्रलिखत्याग्नेयेत्यादि प्रलिखस्वेत्यन्तम् । अवनेज्य अवनेजनन्दत्वा कथम्पूर्ववत्कङ्कतैर्यै प्रादेशमात्रैस्त्रिभिरेकतोदन्तैः समुच्चितैराग्नेयेत्यादिभिस्त्रिभिर्मन्त्रैः प्रलिखस्वेत्यन्तैर्यथासङ्ख्यं प्रतिबलिम्प्रलिखति कण्डूयति ॥ अञ्जनानुलेपनꣳ स्रजश्चाञ्जस्वानुलिम्पस्व स्रजो ऽपिनह्यस्वेति ॥ अञ्जनङ्कज्जलं लौकिकदीपजं त्रैककुदं सौवीरमिति प्रसिद्धं वा । अनुलेपनं सुरभि चन्दनादि स्रजः पुष्पमालाः आग्नेयेत्यादिभिस्त्रिभिर्मन्त्रैरञ्जस्व अनुलिम्पस्व स्रजोऽपि नह्यस्वेत्यन्तैः प्रतिमन्त्रं प्रतिबलिहरणमेकैकं यथा-

क्रमन्ददाति ॥ सक्तुशेषꣳ स्थण्डिले न्युप्योदपात्रेणोपनिनीयोपतिष्ठते नमोऽस्तुसर्पेभ्य इति तिसृभिः ॥ सक्तुशेषं यच्छूर्पे न्युप्यानीतम्बल्यर्थं बलिदानायोपलिप्तैकदेशे न्युप्य शूर्पेणैव क्षिप्त्वा उदपात्रेण जलपात्रेण उपनिनीय प्रवाह्य नमोऽस्तु सर्पेभ्य इति तिसृभिर्ऋग्भिः सर्पानुपतिष्ठते ॥ बल्यभिमुखस्तिष्ठन् प्राङ्मुखस्तिष्ठन् सर्पानुपतिष्ठते स्तौति ॥ स यावत्कामयेत न सर्पा अभ्युपेयुरिति तावत्सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन्परीयादपश्वेतपदा जहीति द्वाभ्यां। स गृहपतिः यावत् यावन्तं देशं सर्पाः नागाः नाभ्युपेयुर्नसञ्चरेयुरिति कामयेत इच्छेत् तावत् तावन्तन्देशं सन्ततया अनवच्छिन्नया उदधारया सलिलधारया निवेशनं गृहम्परिषिञ्चन् त्रिः परीयात् त्रीन्वारान् गृहस्य समन्तात्प्रादक्षिण्येन परिक्रम्य गच्छेत् कथम् अपश्वेतपदा जहीति द्वाभ्याम्मन्त्राभ्याम् ॥ दर्वीशूर्पं प्रक्षाल्य प्रतप्य प्रयच्छति ॥ दर्वी पूर्वोक्ता शूर्पञ्च प्रक्षाल्य प्रक्षालयित्वा प्रतप्य सकृत्तापयित्वा सन्निधानादुल्कायामेव प्रयच्छति ददाति उल्काधाराय सन्निधानादेव ॥ द्वारदेशे मार्जयन्त आपोहिष्ठेति तिसृभिः ॥ द्वारदेशे शालायाः द्वारे आपोहिष्ठेति तिसृभिर्ऋग्भिः मार्जयन्ते। बहुवचनोपदेशात् ब्रह्मयजमानोल्काधाराः मार्जयन्ते अद्भिरात्मानमभिषिञ्चन्ति ॥ अनुगुप्तमेतꣳ सक्तुशेषन्निधाय ततोऽस्तमितेऽस्तमितेऽग्निम्परिचर्य दर्व्योपघातꣳ सक्तून्सर्पेभ्यो बलिꣳ हरेदाग्रहायण्याः ॥ एतम्प्रकृतं सक्तुशेषं होमावशिष्टान् सक्तून् अनुगुप्तं सुरक्षितं यथा भवति तथा निधाय स्थापयित्वा ततस्तस्मात् श्रवणाकर्मकालात् प्रभृति अस्तमिते सूर्ये प्रतिदिनमग्निमावसथ्यम्परिचर्य सायंहोमेन आराध्य दर्व्योपघातं शूर्पे न्युप्तान् सक्तून्सर्पेभ्य उक्तप्रकारेणैव बलिं हरति किमवधि आग्रहायण्याः आग्रहायणीं पौर्णमासीम् यावत्। अथवा आग्रहायणीशब्देन तत्कालावधिकमाग्रहायणीकर्म लक्ष्यते तत्र हि बलीनामुत्सर्गस्य वक्ष्यमाणत्वात्। भाष्यकारस्तु तत इति तेभ्यः सक्तुभ्यः दर्व्योपहत्योपहत्यास्तमिते ऽस्तमिते अग्निपरिचरणङ्कृत्वा बलिं हरेदाग्रहायणीं यावदित्याह स्म। बलिहरणं च अवनेजनदानप्रत्यवनेजनैः कङ्कतविलेखनान्तैरेव। तꣳहरन्तन्नान्तरेण गच्छेयुः ॥ तं गृहपतिं बलीन् हरन्तं आवसथ्याग्निं अन्तरेण मध्ये न गच्छेयुः प्राणिनः ततः श्वादयोऽपि निवार्याः ॥ दर्व्याचमनम्प्रक्षाल्य निदधाति ॥ दर्व्या आचमनं मुखम्प्रक्षाल्य निदधाति स्थापयति प्रत्यहम् दर्वीमुखप्रक्षालनोपदेशात् शूर्पप्रक्षालनाभावः ॥ धानाः प्राश्नन्त्यसꣳस्यूताः ॥

धानाः भर्जितान् यवान् प्राश्नन्ति भक्षयन्ति बहुवचनोपदेशात् ब्रह्मयजमानोल्का-धाराः । कथम्भूताः धानाः असंस्यूताः दन्तैरलग्ना अचर्वयन्त इत्यर्थः ॥ ततो ब्राह्मणभोजनम् ॥ इति सूत्रार्थः । अथ प्रयोगः । तत्र श्रावण्याम्पूर्णिमायां श्रवणाकर्म । तस्य प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं विधायावसथ्याग्नौ कर्म कुर्यात् । तद्यथा ब्रह्मोपवेशनादिप्राशनान्ते अयं विशेषः चरुस्थाल्यनन्तरम्भर्जनकर्परम् तत एककपालम् तथा तण्डुलानन्तरं यवान् ततस्तण्डुलपिष्टान्यासादयेत् । प्रोक्षणकाले यथासादितम्प्रोक्षेत् उपकल्पितं च दृषदुपले शूर्पोल्के उदपात्रदर्व्यौ कङ्कतत्रयम् अञ्जनम् अनुलेपनम् स्रजश्चेति । ततः पवित्रकरणादिप्रोक्षणीनिधानान्ते चरुदेशस्योत्तरतो भर्जनमधिश्रित्य तदुत्तरतः कपालमुपधाय आज्यन्निरूप्य चरुपात्रे प्रणीतोदकासेचनपूर्वकं तण्डुलप्रक्षेपं कृत्वा प्रणीतोदकेन पिष्टं सम्पूय पुरोडाशं कृत्वा ब्रह्मद्वारा आज्यमधिश्रित्य स्वयं चरुमन्येन भर्जने यवान् अपरेणैककपाले पुरोडाशमधिश्रित्य पुरोडाशम्प्रथयित्वा यावत्कपालं सर्वेषाम्पर्यग्निकरणं कुर्यात् । ततः स्रुवं संस्कृत्याज्यमुद्वास्य चरुं चोद्वास्याज्यस्योत्तरतः स्थापयित्वा धाना उद्वास्य चरोरुत्तरतो निधाय पुरोडाशमुद्वास्य धानानामुत्तरतः स्थापयेत् । तत आज्योत्पवनावेक्षणप्रोक्षण्युत्पवनानि कृत्वा धानानां भूयसीर्धाना दृषदुपलाभ्यां पिष्ट्वा अल्पाः पृथक् स्थापयित्वा घृतेन सक्तून् अक्त्वा उपयमनकुशादानाद्याज्यभागान्तङ्कर्म कुर्यात् । तत आज्येन अपश्वेतपदा जहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहेति इदं श्वेतपदे इति त्यागं विधाय । नवै श्वेतस्याध्याचारे ऽहिर्ददर्श कञ्चन श्वेताय वैदर्व्याय नमः स्वाहेति मन्त्रेण द्वितीयामाहुतिं हुत्वा इदं श्वेताय वैदर्व्यायेति त्यक्त्वा स्थालीपाकेन चतस्र आहुतीर्जुहोति । तद्यथा विष्णवे स्वाहा इदं विष्णवे० श्रवणाय स्वाहा इदं श्रवणाय० श्रावण्यै पौर्णमास्यै स्वाहा इदं श्रावण्यै पौर्णमास्यै० वर्षाभ्यः स्वाहा इदं वर्षाभ्यो० इति । अथ धानावन्तङ्करम्भिणमित्यृचा धानानामेकाहुतिं हुत्वा इदमिन्द्रायेति त्यक्त्वा सक्तूनामाहुतित्रितयं जुहुयात् । तद्यथा आग्नेयपाण्डुपार्थिवानाᳩं सर्पाणामधिपतये स्वाहा । इदंशब्दयुक्तः स्वाहाकाररहितोऽयं मन्त्र एव त्यागः । त्रिषु । श्वेतवायवान्तरिक्षाणाᳩं सर्पाणामधिपतये स्वाहा । अभिभूःसौर्यदिव्यानाᳩं सर्पाणामधिपतये स्वाहा ॥ ततो ध्रुवाय भौमाय स्वाहेति सर्वं पुरोडाशं स्रुवे कृत्वा जुहुयात् । इदं ध्रुवाय भौमायेति त्यक्त्वा चरुधानामक्तुभ्य उत्तरतः किञ्चित्किञ्चिदादाय स्विष्टकृतं विधाय महाव्याहृतिहोमं संस्रवप्राशनम् ब्रह्मणे दक्षि-

णादानान्तङ्कुर्यात् । अथ हुतशेषसक्तूनामेकदेशं शूर्पे प्रक्षिप्योदपात्रन्दर्वीकङ्कतत्रयाञ्जनानुलेपनस्रजश्च । शालाया बहिर्निष्क्रम्य ब्रह्मणा उल्काधारेण च सह स्वाङ्गणे हस्तमात्रं स्थण्डिलं स्वयमुपलिप्य लौकिकाग्न्युल्कायां ध्रियमाणायां माऽन्तरागमतेति प्रैषमुच्चार्य वाग्यतः स्थण्डिले उदपात्रमादायाग्नय इत्यादिना अधिपतेऽवनेनिक्ष्वेत्यन्तेन मन्त्रेण एकत्रावनेजनार्थं जलन्दत्वा श्वेतवायवेत्यादिना अधिपतेऽवनेनिक्ष्वेत्यन्तेन द्वितीयम् अभिभूःसौर्येत्यादिना तथैव तृतीयं सर्पानवनेजयति । ततोऽवनेजनस्थानेषु अवनेजनक्रमेण एतैरेव मन्त्रैरेष ते बलिरित्यन्तैस्त्रिभिः प्रतिमन्त्रं बलिं हरति । ततः पूर्ववदवनेज्य कङ्कतत्रयेण प्रलिखस्वेत्यन्तैरेतैरेव मन्त्रैः प्रतिबलिम्प्रतिमन्त्रं प्रलिखति । ततोऽङ्क्ष्वेत्यन्तैरुक्तमन्त्रैः प्रतिबलिं प्रतिमन्त्रमञ्जनन्ददाति तथैवानुलिम्पस्वेत्यनुलेपनम् । एवमेव स्रजोऽपि नह्यस्वेति पुष्पमालान्दत्वा सक्तुशेषं स्थण्डिले क्षिप्त्वा उदपात्रजलेन प्रसम्प्लाव्य नमोऽस्तु सर्पेभ्य इत्यादिभिस्तिसृभिर्ऋग्भिस्तिष्ठन् सर्पानुपतिष्ठते । ततः स गृहपतिरेतावन्तन्देशं सर्पा न प्रविशेयुरिति यावन्तङ्कामयेत तावन्तन्देशं सन्ततोदकधारया त्रिः परिषिञ्चन् गृहम्परीयात् अपश्वेतपदाजहीति पूर्वोक्तमन्त्राभ्यां सकृत् द्विस्तूष्णीम् । ततो दर्वीं शूर्पञ्च प्रक्षाल्योल्कायां सकृत्प्रतप्योल्काधाराय प्रयच्छति । अथ शालाद्वारि आपोहिष्ठेति त्र्यृचेन ब्रह्मयजमानोल्काधारा मार्जयन्ते जलेनात्मानम् । ततो धानाः प्राश्नन्ति ब्रह्मयजमानोल्काधारा अनवखण्डयन्तः । ततो ब्राह्मणभोजनम् । एतावच्छ्रवणाकर्म । अथ प्रत्यहं बलिहरणप्रयोगः । सक्तुशेषं सुगुप्ते भाण्डे स्थापयित्वा ततोऽस्तमिते सूर्ये कृतसायंहोमः शूर्पे सक्तुदर्वीकङ्कतत्रयं निधायोदपात्रं गृहीत्वा सोल्काधारः शालाया बहिरुपलेपनादि परिलेखनान्तं बलिहरणमनुदिनं पूर्ववत्कुर्यात् आग्रहायणीं यावत् । मान्तरागमतेति प्रैषाभावेऽपि कश्चिदन्तरा न गच्छेत् दर्वीमुखमेव प्रक्षालयेदिति । इत्यहरहर्बलिदानविधिः ॥

गदाधरः ॥ अथातः श्रवणाकर्म ॥ श्रवणाकर्मेति वक्ष्यमाणस्य कर्मणो नामधेयम् । व्याख्यास्यत इति सूत्रशेषः ॥ श्रावण्याम्पौर्णमास्याम् ॥ तत्कर्म श्रावणशुक्लपञ्चदश्यां भवति । अस्य कर्मणो गौणकालो न भवति । तदुक्तं कारिकायाम् । श्रावण्यामेव तत्कार्यमभावाद्गौणकालतः । परिमन्त्रोक्तितः सूत्रकारस्यान्यस्मृतेर्बलात् ॥ यावज्जीवं पाकयज्ञानुष्ठानं सकृद्वेति तत्रैवोक्तम् । वचनात्सूत्रकारस्य सकृदस्य क्रिया भवेत् । एवमेवोत्तरेषां स्यादावृत्तिर्वा स्मृतेर्बलात् ॥ सकृत्करणमि-

च्छन्ति तत्रावृत्तिः सतां मतात् ॥ तथा । यावज्जीवं पाकयज्ञैर्यजेत्संवत्सरेण चेति ॥ **स्थालीपाकꣳ श्रपयित्वाऽक्षतधानाश्चैककपालम्पुरोडाशम् ॥** स्थालीपाकं चरुं श्रपयित्वा अक्षतानां मनुष्ययवानां धाना अक्षतधानास्ताश्च श्रपयित्वा एकस्मिन् कपाले श्रप्यत इत्येककपालस्तं च पुरोडाशं श्रपयित्वा। चरुधानापुरोडाशानां सिद्धानामुपादानं माभूदिति श्रपयित्वेति ग्रहणम् ॥ भर्जनैककपालयोरप्यासादनप्रोक्षणे भवतः । अर्थवदासादार्थप्रोक्षणेत्यविशेषोपदेशात् । पुरोडाशस्य श्रपणमात्रोपदेशात्पेषणानुपदेशाच्च लौकिकपिष्टानामासादनम् ॥ **धानानाम्भूयसीः पिष्ट्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोत्यपश्वेतपदा जहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा । न वै श्वेतस्याध्याचारे ऽहिर्ददंश कञ्चन । श्वेताय वैदर्व्याय नमः स्वाहेति ॥** धानानां मध्ये भूयसीर्बह्वीर्धानाः पिष्ट्वा पेषणेन सक्तुत्वं सम्पाद्याज्यभागौ हुत्वा आज्येनाहुती द्वे जुहोत्यपश्वेतपदा जहीति द्वाभ्यां मन्त्राभ्याम् । तत्रापश्वेतपदा जहीति प्रथमाम् न वै श्वेतस्येति द्वितीयाम् । मन्त्रार्थः । हे श्वेतपद त्वमिमा मदीयाः प्रजाः मम निवासभूमेः पूर्वेण भागेन अपरेण च पश्चाद्भागेन च जहि स्वजातिजनितमालिन्यधर्मात् परित्यज । अस्मात् स्थानाच्च स्थानान्तरं व्रज । किम्भूताः प्रजाः सप्त च सपिण्डसगोत्रसोदकत्वभेदेन सप्तसप्तपुरुषसम्बन्धाः सप्त कुलजा वा । तद्यथा पिता माता च भार्या च दुहिता भगिनी तथा । पितृष्वसा मातृष्वसा सप्त गोत्राण्यमूनि वै इति । वारुणैर्वरुणायत्तैर्नागैर्मदीयाः प्रजाः परित्यज । सर्वाः सेवकपश्वादिरूपाः राजबान्धवैर्नागैः राजा तक्षको वासुकिः शेषो वा तस्य ये बान्धवास्तैः सह त्यज । एतैः सह सदा तुभ्यं सुहुतमस्तु हविःसम्पादनमस्तु ॥ १ ॥ पूर्वोक्तमेव दृढयति । वै निश्चयेन । श्वेतस्य नागस्याध्याचारे आधिपत्ये अहिः सर्पजातीयः कञ्चन लोकं प्राणिजातीयं न पश्यतिस्म पापदृष्ट्या । अनेन कर्मणा स्थानत्यागात् तदर्थं श्वेताय शुद्धाय नागाय नमस्कारपूर्वकं सुहुतमस्तु । किम्भूताय नागाय वैदर्व्याय विदर्वापत्याय ॥ **स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति ॥** ततो विष्णवे स्वाहेत्येवमादिभिश्चतुर्भिर्मन्त्रैः स्थालीपाकस्य चरोश्चतस्र आहुतीर्जुहोति । **धानावन्तमिति धानानाम् ।** ततो धानावन्तङ्करम्भिणमित्यनयर्चा स्रुवेण धानानामेकाहुतिं जुहोति ॥ **घृताक्तान् सक्तून् सर्पेभ्यो जुहोत्याग्नेय-**

पाण्डुपार्थिवानाꣳ सर्पाणामधिपतये स्वाहा । श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपतये स्वाहा ॥ अभिभूःसौर्यदिव्यानाꣳ सर्पाणामधिपतये स्वाहेति ॥ घृतेनाक्तान् अभिघारितान् सक्तून् सर्पेभ्यो मन्त्रोक्तेभ्य आग्नेयपाण्डुपार्थिवानामिति त्रिभिर्मन्त्रैस्तिस्र आहुतीर्जुहोति । मन्त्रार्थः । आग्नेयाः अग्निदेवत्याः पाण्डवाः पाण्डुजातीयाः पार्थिवा पृथिवीविहारिणः तेषां सर्पाणामधिपतये शेषाय वासुकये वा स्वाहा सुहुतमस्तु ॥ १ ॥ श्वेताः श्वेतजातीयाः वायवाः वायुदेवत्या इतियावत् । आन्तरिक्षा अन्तरिक्षविहारास्तेषामधिपतय इति प्राग्वत् ॥ २ ॥ तथा अभिभवन्ति सर्वानित्यभिभुवः सौर्याः सूर्यदेवत्याः दिव्या दिवि विहारास्तेषाम् । अभिभूरिति विसर्गश्छान्दसः ॥ ३ ॥ सर्वहुतमेककपालन्ध्रुवाय भौमाय स्वाहेति ॥ सक्तुहोमोत्तरमेककपालम्पुरोडाशं सर्वहुतं सम्पूर्णं हुतं यथा भवति तथा ध्रुवाय भौमाय स्वाहेत्यनेन मन्त्रेण जुहोति । ततः स्विष्टकृद्धोमः स्थालीपाकधानासक्तुभ्यः । सर्वहुत एककपाल इति परिभाषितत्वादत्रावाच्यं सर्वहुतमेककपालमिति । वाच्यं वा पाकयज्ञेष्ववत्तस्यासर्वहोम इति सूत्रेण संस्रवनिधानं प्राप्तन्तद्व्युदासार्थम् ॥ प्राशनान्ते सक्तूनामेकदेशꣳ शूर्पे न्युप्योपनिष्क्रम्य बहिः शालायाः स्थण्डिलमुपलिप्योल्कायान्ध्रियमाणायां मान्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयत्याग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपतेऽवनेनिक्ष्व । श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपतेऽवनेनिक्ष्व । अभिभूःसौर्यदिव्यानाꣳसर्पाणामधिपतेऽवनेनिक्ष्वेति ॥ संस्रवप्राशनान्ते पूर्वकृतसक्तूनामेकदेशं बलित्रयपर्याप्तं नडवेणुशरेषीकान्यतममये शूर्पे न्युप्य कृत्वा उपनिष्क्रम्य शालायाः सकाशान्निर्गत्य बहिः प्राङ्गणे स्थण्डिलभूमिं गोमयेनोपलिप्योल्कायां ध्रियमाणायां ज्वलत्काष्ठे अन्येन ध्रियमाणे माऽन्तरागमतेत्यभिधाय वाग्यतः आग्नेयपाण्डुपार्थिवानामिति त्रिभिर्मन्त्रैः सर्पान् प्राक्तंस्थान् अवनेजयति भूमावुदकप्रक्षेपेणावनिक्तान् शुचीन् करोति । माऽन्तरागमत आवसथ्यस्य मम चान्तराले मा गच्छतेत्यर्थः । अत्र शूर्पं चर्मतन्तुबद्धमपि ग्राह्यमेव शूर्पस्वरूपस्य तथा प्रसिद्धत्वात् । उल्का च लौकिकाग्निना कार्या । विषये लौकिकमुपयुक्तत्वादिति कात्यायनोक्तेः ॥ यथाऽवनिक्तन्दर्व्योपघातꣳ सक्तून् सर्पेभ्यो बलिꣳ हरत्याग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपत एष ते बलिः श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपत एष ते बलिः । अभिभूःसौर्यदिव्यानाꣳ सर्पाणा-

मधिपत एष ते बलिरिति ॥ येषु देशेषु अवनेजनकृतं तदनतिक्रम्य यथाऽव-
निक्तन्दर्व्या प्रसिद्धया उपघातं उपहत्योपहत्य गृहीत्वा आग्नेयेत्यादिभिर्मन्त्रैः
प्रतिमन्त्रं सर्पेभ्यो बलिं हरति ददाति । उपपूर्वो हन्तिर्ग्रहणार्थः । अथ स्रुवेणो-
पहत्याज्यमिति वत् ॥ अवनेज्य पूर्ववत्कङ्कतैः प्रलिखत्याग्नेयपाण्डुपार्थि-
वानाꣳ सर्पाणामधिपते प्रलिखस्व श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधि-
पते प्रलिखस्वाभिभूःसौर्यदिव्यानाꣳ सर्पाणामधिपते प्रलिखस्वेति ।
तत आग्नेयेत्यादिमन्त्रैः पूर्ववदवनेजनं कृत्वा कङ्कतैस्त्रिभिर्वैकङ्कतीयैः प्रादेशप्र-
माणैरेकतोदन्तैः समुच्चितैराग्नेयेत्यादित्रिभिर्मन्त्रैर्यथासङ्ख्यं दत्तबलिं प्रलिखति
कण्डूयति ॥ अञ्जनानुलेपनꣳ स्रजश्चाञ्जस्वानुलिम्पस्व स्रजोऽपि नह्यस्वेति ॥
अञ्जनं सौवीराञ्जनम् लौकिकदीपजकज्जलं वा । अनुलेपनं चन्दनादि । स्रजः
पुष्पमालाः । आग्नेयेत्यादित्रिभिर्मन्त्रैरञ्जस्वानुलिम्पस्व स्रजोऽपि नह्यस्वेत्यन्तैः
प्रतिमन्त्रं प्रतिबलि यथाक्रममेकैकन्ददाति ॥ सक्तुशेषꣳ स्थण्डिले न्युप्योदपा-
त्रेणोपनिनीयोपतिष्ठते नमोऽस्तु सर्पेभ्य इति तिसृभिः ॥ सक्तुशेषं बल्यर्थं
यत्पूर्वं शूर्पे कृत्वा आनीतं बलिदानावशिष्टं तत्स्थण्डिले उपलिप्तायां भूमौ शूर्पे-
णैव न्युप्य प्रक्षिप्योदपात्रेणोपनिनीय आप्लाव्य नमोऽस्तु सर्पेभ्य इति तिसृभि-
र्ऋग्भिः बलिमुपतिष्ठते । बलिसमीपे तिष्ठन् मन्त्रम्पठतीत्यर्थः ॥ स यावत्काम-
येत न सर्पा अभ्युपेयुरिति तावत्सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन्
परीयादपश्वेतपदा जहीति द्वाभ्याम् ॥ स यजमानो यावत् यावन्तं देशं सर्पा
नाभ्युपेयुर्नागच्छेयुरिति कामयेत इच्छेत् तावत् तावन्तन्देशं भूभागं सन्ततया
अनवच्छिन्नया जलधारया निवेशनं गृहम् अपश्वेतपदा जहीति पूर्वोक्ताभ्यां
मन्त्राभ्याम्परिषिञ्चन् त्रिः परीयात् । त्रीन्वारान् गृहस्य परितः प्रादक्षिण्येन
गच्छेत् । सकृन्मन्त्रेण परिगमनम् । द्विस्तूष्णीम् । तत इतरयावृत्तिः । कर्त्रन्तर-
स्यानुपदेशात्स्वयङ्कर्तृकाणि स्मार्तानि कर्माणि तत्र स इत्युच्चारणे तस्यैव प्राप्नु-
वन्ति । काम्येषु तु पुनर्ग्रहणं नियमार्थम् । काम्यन्नियमेन स्वयङ्कर्तव्यम् । यत्त्व-
कामसंयुक्तं कालनिमित्ते चोद्यते तदागते काले अवश्यङ्कर्तव्यम् । असन्निहिते च
यजमाने अन्येनापि कारयितव्यमिति भर्तृयज्ञाः ॥ दर्वीशूर्पे प्रक्षाल्य प्रतप्य
प्रयच्छति ॥ यया बलिदानं कृतन्तान्दर्वीं शूर्पं च प्रक्षाल्य प्रतप्य सन्निधानादु-
ल्कायामेव सकृत्तापयित्वा प्रयच्छति उल्काधाराय सन्निधानात् ॥ द्वारदेशे

**मार्जयन्त आपोहिष्ठेति तिसृभिः ॥** ऋग्भिः बहुवचनाद्ब्रह्मयजमानोल्काधाराः शालाया द्वारे आपोहिष्ठेति तिसृभिर्ऋग्भिर्मार्जयन्ते अद्भिरात्मानमभिषिञ्चन्ति ॥ **अनुगुप्तमेतꣳ सक्तुशेषन्निधाय ततोऽस्तमितेऽस्तमितेऽग्निम्परिचर्य दर्व्योपघातꣳ सक्तून्सर्पेभ्यो बलिꣳ हरेदाग्रहायण्याः ॥** एतत्प्रकृतं सक्तुशेषम् अनुगुप्तं सुगुप्तं यथा भवति तथा स्थापयित्वा । ततस्तेभ्यः सक्तुभ्योऽस्तमितेऽस्तमिते सूर्ये प्रत्यहम् अग्निहोमानन्तरं दर्व्योपघातम् दर्व्योपहत्योपहत्य सक्तून्सर्पेभ्यो बलिं हरेदाग्रहायणीं पौर्णमासीं यावत् ॥ **तꣳ हरन्तन्नान्तरेण गच्छेयुः ॥** तमावसथ्याग्निम् बलिं हरन्तं यजमानं चान्तरा मध्ये न गच्छेयुर्लोकाः । श्वादयोऽपि निवार्याः ॥ **दर्व्याचमनम्प्रक्षाल्य निदधाति ॥** ततो दर्व्या आचमनं मुखं प्रक्षाल्य निदधाति प्रतिदिनम् । अत्र न शूर्पप्रक्षालनमनुक्तत्वात् ॥ **धानाः प्राश्नन्त्यसꣳस्यूताः ॥** श्रावण्यां पौर्णमास्यां संस्थिते श्रवणाकर्मणि धाना अश्नन्ति दन्तैरचर्वयन्तो ब्रह्मयजमानोल्काधाराः ॥ **ततो ब्राह्मणभोजनम् ॥** ॥ * ॥ इति श्री त्रिरग्निचित्सम्राट्स्थपतिवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्डे चतुर्दशी कण्डिका ॥ १४ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

अथ पदार्थक्रमः ॥ तत्र प्रथमप्रयोगे मातृपूजापूर्वकं नान्दीमुखं श्राद्धं कृत्वा आवसथ्ये कर्म कार्यम् । ब्रह्मोपवेशनादिदक्षिणादानान्ते विशेषः । चरुपात्रानन्तरम्भर्जनखर्परस्यासादनम् । तत एककपालम् । तण्डुलानन्तरं यवानामासादनम् । ततः पिष्टानां । प्रोक्षणञ्च यथासादितानाम् । उपकल्पनीयानि । दृषदुपले । शूर्पम् । उल्का । उदपात्रम् । दर्वी । कङ्कतत्रयम् । अञ्जनम् । अनुलेपनम् । स्रजश्चेति । उल्काधारकः । मार्जनीयोदकम् । धानाः प्राशनार्था लौकिका इति त्रयमधिकमुपकल्पनीयमिति रेणुकः । ततः पवित्रकरणादिप्रोक्षणीनिधानान्ते चरुदेशस्योत्तरतो भर्जनखर्पराधिश्रयणम् । अत्र सव्याग्नेयेऽङ्गारकरणमिति रेणुकः । भर्जनस्योत्तरत एककपालोपधानम् । आज्यनिर्वापः । चरुपात्रे तण्डुलप्रक्षेपः । प्रणीतोदकेन पिष्टसंयवनम् । ब्रह्मण आज्याधिश्रयणम् । तदुत्तरतश्चरोरधिश्रयणं यजमानस्य । चरोरुत्तरतः खर्परे यवाधिश्रयणमुल्काधारस्य । कपाले पुरोडाशमधिश्रित्यैककपालम्प्रथयेदितरः । सर्वेषाम्पर्यग्निकरणम् । स्रुवसंस्कारः । तत आज्यादीनामुद्वासनमुदक्संस्थम् । आज्योत्पवनम् । अवेक्षणम् । प्रोक्षण्युत्पवनम् । धानानां भूयसीः पिष्ट्वा अल्पानां स्थापनम् । आज्येन सक्तूनामञ्जनम् । तत उपय-

मनकुशादानाद्याज्यभागान्ते आज्याहुतिद्वयं कुर्यात् । तत्र अपश्वेतपदेति प्रथमाम् । इदं श्वेतपदे० । नवै श्वेतस्येति द्वितीयाम् इदं श्वेतपदाय वैदर्व्याय० । ततःस्थालीपाकेनाहुतिचतुष्टयम् । विष्णवे स्वाहा० । श्रवणाय स्वाहा० । श्रावण्यै पौर्णमास्यै० । वर्षाभ्यः० ॥ इदं विष्णवे नममेत्यादित्यागः ॥ धानावन्तमित्यृचा धानानामेकाऽऽहुतिः । इन्द्रायस्वाहा इदमिन्द्रायन० । ततः सक्तूनामाहुतित्रयं जुहुयात् ॥ आग्नेयपाण्डुपार्थिवानामिति प्रथमाम् । श्वेतवायवान्तरिक्षाणामिति द्वितीयाम् । अभिभूरिति तृतीयाम् । यथा मन्त्रान्ते त्यागाः । स्वाहाकारवर्जिता इदंशब्दादयः । ततो ध्रुवाय भौमाय स्वाहेति पुरोडाशं सकलं जुहोति । इदं ध्रुवाय भौमाय० । ततश्चरुधानासक्तुभ्य उत्तरतः स्विष्टकृत् । ततो नवाहुतयः । संस्रवप्राशनादिदक्षिणादानान्तम् । सक्तुशेषैकदेशस्य शूर्पे प्रक्षेपः । शालाया वह्निर्निष्क्रमणम् । बहिरेव स्थण्डिलोपलेपनम् । तत उल्काधारणम् । माऽन्तरागमतेति प्रैषः । वाग्यतः स्थण्डिले सर्पानवनेजयति आग्नेयपाण्डुपार्थिवानाᳬ सर्पाणामधिपतेऽवनेनिक्ष्वेति त्रिभिर्मन्त्रैः प्रतिमन्त्रम् । ततोऽवनेजनस्थानेष्ववनेजनक्रमेणैतैरेव मन्त्रैरेष ते बलिरित्यन्तैस्त्रिभिः प्रतिमन्त्रं बलिं हरति । अत्र यथादैवतं त्यागा इति गर्गः । नेत्यपरे । नाञ्जनादौ त्याग इति रेणुकः । ततः पूर्ववत्पुनरवनेजनम् । एतैरेव मन्त्रैः प्रलिखस्वेत्यन्तैः कङ्कतत्रयेण प्रतिबलि प्रतिमन्त्रं प्रलिखति । ततोऽञ्जस्वेत्यन्तैरुक्तमन्त्रैः प्रतिबलि प्रतिमन्त्रमञ्जनन्ददाति । तथैवानुलिम्पस्वेत्यनुलेपनदानम् । स्रजोऽपि नह्यस्वेत्यन्तैः पुष्पमालादानम् । ततः सक्तुशेषं स्थण्डिले न्युप्योदपात्रनिनयनं सक्तुशेषस्योपरि । नमोऽस्तु सर्पेभ्य इति तिसृभिरुपस्थानम् । स यावन्तं कामयेत एतावन्तन्देशं न सर्पा अभ्युपेयुरिति तावन्तं गृहदेशमुदधारया सन्ततया त्रिः परिषिञ्चन्परीयादपश्वेतपदा जहीति द्वाभ्याम् । अत्र स्वाहाकारो नेति गर्गरेणुकौ । सकृन्मन्त्रेण परिगमनम् । द्विस्तूष्णीम् । तत इतरथावृत्तिरिति रेणुकः । दर्वीं शूर्पञ्च प्रक्षाल्योल्कायां प्रतप्योल्काधाराय प्रयच्छति । ततो जलेन मार्जनम् द्वारदेशे आपो हिष्ठेति तिसृभिर्ब्रह्मयजमानोल्काधाराणाम् । ततो धानानां प्राशनन्तेषामेव । ततो ब्राह्मणभोजनम् । सक्तुशेषस्थापनं सुगुप्ते भाण्डे । ततोऽस्तमिते अक्षतहोमानन्तरमुल्काधारणादिबलिहरणकङ्कतपरिलेखान्तम्पूर्ववत् । माऽन्तरागमतेति प्रैषाभावेऽपि नान्तरागमनम् । दर्वीमुखप्रक्षालनम् । शूर्पदर्व्योः प्रक्षालनमिति वासुदेवरेणुकौ । एवमन्वहं बलिहरणमाग्रहायणीं यावत् । इति पदार्थक्रमः । अथ गर्गमते विशेषः ।

पात्रासादने । चरुस्थाली । आज्यानन्तरं यवाः । तण्डुलाः । पिष्टम् । कर्परिका । कपालम् । बर्हिः । दर्वी । उल्का । उल्काधारश्च । शूर्पम् । कङ्कतास्त्रयः । अञ्जनम् । अनुलेपनं स्रजश्च । उदकम् । दृषदुपले । वरश्च । ततः स्फ्योपहितमोषधिकरणम् । ततो ग्रहणम् । विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यो जुहोति । तण्डुलानां ग्रहणम् । इन्द्राय जुष्टं गृह्णामीति यवानाम् । ध्रुवाय भौमाय जु० पिष्टस्य ग्रहणम् । प्रोक्षणे त्वाधिकः । प्रोक्षणीनिधानान्ते भर्जनाधिश्रयणादिपर्यग्निकरणान्ते स्रुवप्रतपनादिबर्हिस्तरणान्तम् । धाना उद्वास्याल्पानां पेषणं कृत्वा चर्वादीनामुद्वासनमिति गर्गमतमिति तत्पद्धतौ । स्तरणान्ते आज्योद्वासनादिधानोद्वासनान्तम् । अल्पानां धानानां पृथक्करणम् । भूयिष्ठानां पेषणम् । ततः सर्वेषामभिघारणम् । बर्हिष्यासादनं च । तत उपयमनादानाद्याज्यभागान्तम् । ततः स्विष्टकृदादि दर्वीं शूर्पं प्रक्षाल्य प्रतप्य प्रदानान्तं समानम् । बलिहरणादौ सक्तुहोमवर्ज्ययोर्द्देशत्यागाः । परिषेचनमन्त्रयोः स्वाहाकारवर्जितयोरुच्चारणमिति गर्गपद्धतौ । मार्जनं यजमानपत्न्युल्काधाराणाम् । सक्तूनां स्थापनम् । ततो धानाप्राशनं स्वामिब्रह्मोल्काधाराणाम् । ततो बर्हिर्होमादिब्राह्मणभोजनान्तम् । ततोऽस्तमिते उल्काधारणादिपरिलेखान्तं पूर्ववत् । यथोक्ता एव त्यागाः । एवं प्रत्यहमाग्रहायणीं यावत् । इति गर्गमते । कारिकायां विशेषः श्रवणाकर्माकरणे । श्रवणाकर्म लुप्तं चेत्कथं चित्सूतकादिना । आग्रहायणिकं कर्म बलिवर्जमशेषतः ॥ अकृत्वाऽन्यतमं यज्ञं पञ्चानामधिकारतः । उपवासेन शुद्ध्यन्ति पाकसंस्थां तथैव च ॥ पाकसंस्थासु लुप्तासु श्रवणाकर्म आदितः । प्राजापत्यं चरेत्कृच्छ्रं वचनात्तु प्रजापतेः ॥ स्वयं होमाश्च यावन्तो न कृताश्चेत्प्रमादतः ॥ तावतोऽपि बलींश्चायं हरेत्तदहरेव तु ॥ एकैकम्परिलेखान्तमेकमेवोदपावकम् । प्रक्षालनन्तदन्ते स्याच्छूर्पदर्व्योर्भवेदिति ॥

मूलम् ॥ प्रौष्ठपद्यामिन्द्रयज्ञः ॥ १ ॥ पायसमैन्द्रꣳ श्रपयित्वाऽपूपाꣳश्चापूपैस्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीन्द्रायेन्द्राण्या अजायैकपदेऽहिर्बुध्न्याय प्रौष्ठपदाभ्यश्चेति ॥ २ ॥ प्राशनान्ते मरुद्भ्यो बलिꣳ हरत्यहुतादो मरुत इति श्रुतेः ॥ ३ ॥ आश्वत्थेषु पलाशेषु मरुतोऽश्वत्थे तस्थुरिति वचनात् ॥ ४ ॥ शुक्रज्योतिरिति प्रतिमन्त्रम् ॥ ५ ॥ विमुखेन च ॥ ६ ॥

मनसा ॥ ७ ॥ नामान्येषामेतानीति श्रुतेः ॥ ८ ॥ इन्द्रं दैवी-
रिति जपति ॥ ९ ॥ ततो ब्राह्मणभोजनम् ॥ १० ॥ ॥ १५ ॥

कर्कः ॥ प्रौष्ठपद्यामिन्द्रयज्ञः ॥ इन्द्रयज्ञ इति कर्मणो नामधेयम् । प्रौष्ठपदी च भाद्रपदी पौर्णमासी ॥ पायसमैन्द्रं श्रपयित्वाऽपूपाँश्च ॥ ऐन्द्रग्रहणात् इन्द्राय स्वाहेति होमो लभ्यते । इह च पयस उपसर्जनार्थतया अपां क्षीरस्य च प्रणयनं क्रियते ॥ अपूपैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥ इन्द्रायेन्द्राण्यै इत्येवमाद्याः ॥ अपूपैः स्तरणमग्नेः । आज्याहुत्यन्ते इन्द्राय स्वाहेति पायसेन होमः । ततः स्विष्टकृदादि ॥ प्राशनान्ते मरुद्भ्यो बलिं हरत्याश्वत्थेषु पलाशेषु । कुत एतत् ॥ मरुतोऽश्वत्थे तस्थुरिति वचनात् ॥ शुक्रज्योतिरिति । एभिर्मन्त्रैर्नमस्कारान्तैः प्रतिमन्त्रम् ॥ विमुखेन च मनसा । बलिहरणम् ॥ विमुखश्च उग्रश्च भीमश्चेत्यध्येतृणाम्प्रसिद्धः । नामान्येषामेतानीति श्रुतेः ॥ एषाम्मरुतामेतानि नामानि श्रूयन्ते ॥ इन्द्रं दैवीरिति जपति ॥ ततो ब्राह्मणभोजनम् ॥ ॥ १५ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ इन्द्रयज्ञ इति कर्मणो नामधेयम् । प्रौष्ठपदी भाद्रपदपौर्णमासी । ऐन्द्रग्रहणादिन्द्राय स्वाहेति एकाहुतिको होमो लभ्यते । इह च पयस उपसर्जनार्थतया अपां क्षीरस्य च प्रणयनङ्क्रियते । अपूपैः स्तीर्त्वा ऽऽज्यभागाविष्ट्वा आज्याहुतीर्जुहोति इन्द्राय इन्द्राण्यै इत्येवमाद्याः पञ्च । अपूपैः स्तरणमग्नेः आज्याहुत्यन्ते इन्द्राय स्वाहेति पायसेनैकाहुतिर्होमः । ततः स्विष्टकृदादि । प्राशनान्ते मरुद्भ्यो बलिं हरति । अहुतादो मरुत इति श्रुतेः । आश्वत्थेषु पलाशेषु । कुत एतत् । यतोऽश्वत्थे तस्थुरिति वचनात् । शुक्रज्योतिरित्येतैर्मन्त्रैर्नमस्कारान्तैः प्रतिमन्त्रं विमुखेन च मनसा बलिहरणम् । विमुखश्च उग्रश्च भीमश्चेत्यध्येतृणाम्प्रसिद्धः । नामान्येषामेतानीति श्रुतेः । एषाम्मरुतां एतानि शुक्रज्योतिरित्यादीनि नामानि श्रूयन्ते । इन्द्रन्दैवीरिति जपति बलिहरणान्ते । ततो ब्राह्मणभोजनम् ॥ ॥ १५ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ प्रौष्ठपद्यामिन्द्रयज्ञः ॥ प्रौष्ठपदी भाद्रपदी प्रकरणात् पौर्णमासी । तस्यां इन्द्रयज्ञनामधेयं कर्म भवति औपासननाम्नि ॥ पायसमैन्द्रं श्रपयित्वाऽपूपांश्च ॥ पायसं पयसा सिद्धं चरुम् ऐन्द्रम् इन्द्रदैवत्यं श्रपयित्वा यथाविधि पक्का

अपूपांश्च श्रपयित्वा तांश्च चतुरः प्रतिदिशं संस्तरणार्थम् । ऐन्द्रमित्यनेन देवता-तद्धितेन इन्द्रायस्वाहेति होमलक्षणा । उपरि होमस्य मन्त्रान्तरस्य चानुक्तत्वात् । अत्र पायसश्रपणोपदेशात् पयश्च प्रणीयते ॥ **अपूपैः स्तीर्त्वाऽऽज्यभागाविष्ट्वा ऽऽज्याहुतीर्जुहोतीन्द्रायेन्द्राण्या अजायैकपदेऽहिर्बुध्न्याय प्रोष्ठपदाभ्यश्चेति ॥** अपूपैः प्रतिदिशमग्निं स्तीर्त्वा परिस्तीर्य आज्यभागौ हुत्वा इन्द्रायेत्यादिभिः स्वाहान्तैः पञ्चभिर्मन्त्रैः प्रतिमन्त्रम्पञ्चाज्याहुतीर्जुहोति । अत्रानुक्तोऽपि पायसेन इन्द्राय स्वाहेत्येकाहुतिहोमः । अन्यथा पायसश्रपणमदृष्टार्थं स्यात् ॥ **प्राशनान्ते मरुद्भ्यो बलिᳲहरत्यहुतादो मरुत इति श्रुतेः ॥** ततः स्विष्टकृदादिप्राशनान्ते मरुद्भ्य एकोनपञ्चाशत्सङ्ख्येभ्यो देवताभ्यो बलिन्ददाति । ननु मरुतां देवतात्वे सति कथं होमसम्बन्धरहितत्वं बलिदानार्हत्वं च । शृणु । अहुतादो मरुत इति श्रुतेः । अहुतमदन्तीत्यहुतादः मरुतो देवा इति श्रुतेः वेदवचनात् ॥ **आश्वत्थेषु पलाशेषु मरुतोऽश्वत्थे तस्थुरिति वचनात् ॥** मरुद्भ्यो बलिᳲहरतीत्युक्तम् तस्याधिकरणमुच्यते । अश्वत्थस्य इमानि आश्वत्थानि तेषु पिप्पलोद्भवेषु पत्रेषु बलिं हरतीति शेषः । ननु बलिहरणं भूमौ अन्यत्र दृश्यते इह कस्मादश्वत्थपत्रेष्विति शङ्कते । आह मरुतः शुक्रज्योतिप्रभृतयो यस्मात् अश्वत्थे तस्थुः स्थितवन्त इति वचनात् श्रुतेः ॥ **शुक्रज्योतिरिति प्रतिमन्त्रं विमुखेन च मनसा नामान्येषामेतानीति श्रुतेः ॥** मन्त्रापेक्षायामाह । शुक्रज्योतिरित्येवमादिभिर्मन्त्रैर्नमस्कारान्तैः प्रतिमन्त्रं विमुखेन च उग्रश्च भीमश्चेत्येवमादिना अध्येतृप्रसिद्धेन मनसा मनोव्यापारेण बलिं हरतीति शेषः । कुत एभिर्मन्त्रैर्बलिहरणम् । एषाम्मरुतामेतानि शुक्रज्योतिश्च चित्रज्योतिश्चेत्येवमादीनि विक्षिप इत्यन्तानि नामानि इति श्रुतेः वेदवचनात् ॥ **इन्द्रन्देवीरिति जपति ॥** बलिहरणान्ते इन्द्रन्देवीरित्येतामृचं जपति ॥ **ततो ब्राह्मणभोजनम् ॥** इतिसूत्रार्थः ॥ अथ प्रयोगः । भाद्रपदपौर्णमास्याम्प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं विधायावसथ्याग्नौ इन्द्रयज्ञाख्यं कर्म कुर्यात् । तत्र ब्रह्मोपवेशनादिप्राशनान्ते विशेषः । सक्षीरम्प्रणयनम् मूलदेशे पयः इतरत्र जलम्प्रक्षिप्य प्रणयेत् । उपकल्पनीयानि । तण्डुलपिष्टम् सप्ताश्वत्थपर्णानि तत आज्यनिर्वापानन्तरम्प्रणीताभ्यः क्षीरमुत्सिच्य चरुपात्रे तण्डुलान्प्रक्षिप्य प्रणीतोदकेन पिष्टं सम्पूय चतुरोऽपूपान्निर्मायाज्यमधिश्रित्य तदुत्तरतश्चरुं तदुत्तरतः कर्परे चतुरोऽपूपान् अधिश्रयति । आसादनक्रमेणोद्वासनादि । तत उपयमनकुशादानात् पूर्व-

मपूपैरग्नेः पुरस्तात् दक्षिणतः पश्चिमत उत्तरतश्च एकैकेन परिस्तरणङ्कृत्वा आज्यभागान्ते पञ्चाज्याहुतीर्जुहोति । इन्द्राय स्वाहा इदमिन्द्राय० इन्द्राण्यै स्वाहा इदमिन्द्राण्यै० अजायैकपदे स्वाहा इदमजायैकपदे० अहिर्बुध्न्याय स्वाहा इदमहिर्बुध्न्याय० प्रौष्ठपदाभ्यः स्वाहा इदम्प्रौष्ठपदाभ्यो० । ततः पायसेन इन्द्राय स्वाहेत्येकामाहुतिं हुत्वा इदमिन्द्रायेति त्यक्त्वा पायसेनैव स्विष्टकृद्धोमं विधाय महाव्याहृत्यादिहोमसंस्रवप्राशनदक्षिणादानानि कुर्यात् । अथाग्नेरुत्तरतः प्राक्संस्थानि प्रागग्राणि सप्ताश्वत्थपत्राणि निधाय तेषु मरुद्भ्यो बलीन् हरति पायसशेषम् स्रुवेणादायादाय शुक्रज्योतिरित्येवमादिभिः षड्भिर्मन्त्रैर्नमस्कारान्तैरुग्रश्च भीमश्चेत्येतेनैव सप्तमेन च मनसोच्चारितेन च प्रतिमन्त्रं सप्तसु पत्रेषु यथाक्रमम् । स्पष्टार्थम्प्रयोग उच्यते त्यागश्च । शुक्रज्योतिश्चेत्यारभ्य ऋतपाश्चात्यꣳहा नमः इदं शुक्रज्योतिषे चित्रज्योतिषे सत्यज्योतिषे ज्योतिष्मते शुक्राय ऋतपसेऽत्यꣳहसे च० । ईदृङ्चान्यादृङ्चेत्यादि सभरा नमः इदमीदृशे अन्यादृशे सदृशे प्रतिसदृशे मिताय सम्मिताय सभरसे च० । ऋतश्चेत्यादि विधारयो नमः इदमृताय सत्याय ध्रुवाय धरुणाय धर्त्रे विधर्त्रे विधारयाय च० । ऋतजिच्चेत्यारभ्य गणो नमः इदमृतजिते सत्यजिते सेनजिते सुषेणाय अन्तिमित्राय दूरे अमित्राय गणाय च० । ईदृक्षास इत्यारभ्य यज्ञे अस्मिन्नमः इदमीदृक्षेभ्यः एतादृक्षेभ्यः सदृक्षेभ्यः प्रतिसदृक्षेभ्यो मितेभ्यः सम्मितेभ्यो सभरेभ्यो मरुद्भ्यश्च० । स्वतवांश्चेत्यादि उज्जेषी नमः इदं स्वतवसे प्रघासिने सान्तपनाय गृहमेधिने क्रीडिने शाकिने उज्जेषिणे च० । उग्रश्चेत्यारभ्य विक्षिपः स्वाहा नमः मनसा । इदमुग्राय भीमाय ध्वान्ताय धुनये सासहुषेऽभियुग्वने विक्षिपाय चेत्यपि मनसा ॥ तत इन्द्रन्दैवीरित्येतामृचं जपति यजमानः । ततो ब्राह्मणभोजनमिति ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

**गदाधरः** ॥ **प्रौष्ठपद्यामिन्द्रयज्ञः** ॥ इन्द्रयज्ञ इति कर्मणो नामधेयम् । प्रौष्ठपदी च भाद्रपदी पौर्णमासी तस्यामेतत्कर्मावसथ्येऽग्नौ भवति ॥ **पायसमैन्द्रꣳ श्रपयित्वाऽपूपाꣳश्च** ॥ पायसम् पयसि पक्वं चरुम् ऐन्द्रम् इन्द्रदेवत्यम् यथाविधि श्रपयित्वा अपूपांश्च चतुरः श्रपयित्वा । ऐन्द्रग्रहणात् इन्द्राय स्वाहेति होमो लभ्यते । अत्रापां क्षीरस्य च प्रणयनङ्कार्यम् ॥ **अपूपैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीन्द्रायेन्द्राण्या अजायैकपदेऽहिर्बुध्न्याय प्रौष्ठपदाभ्यश्च** ॥ अग्नेः प्रतिदिशमपूपैः स्तीर्त्वा प्रदक्षिणम्परिस्तीर्य आज्यभागानन्तरमिन्द्रायेत्यादिभिः

स्वाहाकारान्तैः पञ्चमन्त्रैः प्रतिमन्त्रम्पञ्चाज्याहुतीर्जुहोति । आज्याहुत्यन्ते इन्द्रायस्वाहेति पायसेन होमः । ततः स्विष्टकृदादि ॥ **प्राशनान्ते मरुद्भ्यो बलिं हरत्यहुतादो मरुतइति श्रुतेराश्वत्थेषु पलाशेषु मरुतोऽश्वत्थे तस्थुरितिवचनात्** ॥ संस्रवप्राशनान्ते मरुद्भ्यो देवताभ्यो बलिन्ददाति । ननु होमासम्बन्धे कथमेषान्देवतात्वं बलिकर्मार्हत्वं च । उच्यते । अहुतादो मरुत इति श्रुतेः । अहुतमदन्तीत्यहुतादो मरुत इति श्रुतेः । अतएव बलिदानमेव न तु होमः । तच्चाश्वत्थेषु पत्रेषु कार्यम् । कुतः यस्मान्मरुत अश्वत्थे तस्थुः स्थितवन्तः । अतएवाश्वत्थपत्राणां सदैव चाञ्चल्यम् । अश्वत्थस्येमानि आश्वत्थानि पर्णानि तेषु बलिं हरतीत्यर्थः ॥ **शुक्रज्योतिरिति प्रतिमन्त्रम्** ॥ यद्बलिहरणं तच्छुक्रज्योतिरित्येवमादिभिः षड्भिर्मन्त्रैर्नमस्कारान्तैः प्रतिमन्त्रं कार्यम् ॥ **विमुखेन च मनसा नामान्येषामेतानीति श्रुतेः** ॥ चकाराद्बलिहरणं विमुखेन उग्रश्च भीमश्चेत्यध्येतृप्रसिद्धेन मन्त्रेण मनसोच्चारितेन । एतैर्मन्त्रैरिति कुतः । नामान्येषामेतानीति श्रुतेः ॥ एषाम्मरुतामेतानि शुक्रज्योतिरित्यादीनि नामानि श्रूयन्ते ॥ **इन्द्रन्दैवीरिति जपति** ॥ बलिहरणानन्तरमिन्द्रन्दैवीरित्येतामृचं जपति ॥ **ततो ब्राह्मणभोजनम्** ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

इति श्री त्रिरग्निचित्सम्राट्स्थपतिवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्डे पञ्चदशी कण्डिका ॥ ॥ १५ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

अथ पदार्थक्रमः ॥ प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । ब्रह्मोपवेशनादिदक्षिणादानान्ते विशेषः । सक्षीरम् प्रणयनम् । उपकल्पनीयानि । यवपिष्टम् । व्रीहिपिष्टं वा । सप्ताश्वत्थपत्राणि पोतकम् । कर्परमपूपार्थम् । निरूप्याज्यम् प्रणीताभ्यः । पोतकेन क्षीरं गृहीत्वा चरुपात्रे कृत्वा तण्डुलप्रक्षेपः । प्रणीतोदकेन पिष्टसंयवनम् । लौकिकेनेति रेणुकः । आज्याधिश्रयणम् ततश्चतुर्णामपूपानामधिश्रयणम् । उपयमनादानात्पूर्वमग्नेरपूपैस्स्तरणम् पुरस्तात्प्रथमम् प्रदक्षिणम् । आज्यभागान्ते पञ्चाज्याहुतयः । इन्द्राय स्वा० इ० ॥ इन्द्राण्यै स्वा० इ० । अजायैकपदे० इ० । अहिर्बुध्न्याय० इ० । प्रौष्ठपदाभ्यः० इ० । सुगमास्त्यागाः । ततः पायसेन इन्द्राय स्वाहा इदमिन्द्राय० । ततो नवाहुतयः स्विष्टकृच्च । संस्रवप्राशनम् । मार्ज्जनम् । पवित्रप्रतिपत्तिः । प्रणीताविमोकः । दक्षिणादानम् । प्राक्संस्थान्युदक्संस्थानि वा सप्ताश्वत्थपत्राणि कृत्वा तेषु मरुद्भ्यो बलिहरणम् पायस-

शेषेणैव स्रुवेण शुक्रज्योरिति षड्भिरुग्रश्चेत्यनेन सप्तमेन च प्रतिमन्त्रम् । शुक्रज्योति० नमः । इदं शुक्रज्योतिषे चित्रज्योतिषे सत्यज्योतिषे ज्योतिष्मते शुक्राय ऋतपसे ऽत्यꣳहसे च नमम ॥ १ ॥ ईदृङ्चान्यादृङ्च० रा नमः । इदमीदृशेऽन्यादृशे सदृशे प्रतिसदृशे मिताय सम्मिताय सभरसे च न० ॥ २ ॥ ऋतश्च० रयो नमः । इदमृताय सत्याय ध्रुवाय धरुणाय धर्त्रे विधर्त्रे विधारयाय च न० ॥ ३ ॥ ऋतजिच्च० गणो नमः । इदमृतजिते सत्यजिते सेनजिते सुषेणायान्तिमित्राय दूरे अमित्राय गणाय च न० ॥ ४ ॥ ईदृक्षास० अस्मिन्नमः । इदमीदृक्षेभ्य एतादृक्षेभ्यः सदृक्षेभ्यः प्रतिसदृक्षेभ्यो मितेभ्यः सम्मितेभ्यः सभरेभ्यो न० ॥ ५ ॥ स्वतवांश्च० ज्जेषी नमः । इदं स्वतवसे प्रघासिने सान्तपनाय गृहमेधिने क्रीडिने शाकिने उज्जेषिणे च० ॥ ६ ॥ उग्रश्च भीमश्च० पः स्वाहा नमः । मनसा । इदमुग्राय भीमाय ध्वान्ताय धुनये सासह्वते अभियुग्वने विक्षिपाय चेत्यपि मनसा ॥ ७ ॥ इन्द्रन्दैवीरित्यस्याः कण्डिकाया जपः । ततो विप्रभुक्तिः । मुख्यकालाभावे गौणेऽप्येतत्कार्यम् । अभावान्मुख्यकालस्य गौणकालेऽपि शस्यत इतिकारिकोक्तेः । गर्गमते । ग्रहणे इन्द्राय जुष्टम् । प्रोक्षणे त्वाधिकः । इन्द्रन्दैवीरित्यस्याः कण्डिकाया जपान्ते बर्हिर्होमादिब्राह्मणतर्पणान्तम् । ततो वैश्वदेवः । अन्यत्समानम् । इति पदार्थक्रमः ॥

मूलम् ॥ आश्वयुज्याम्पृषातकाः ॥ १ ॥ पायसमैन्द्रꣳ श्रपयित्वा दधिमधुघृतमिश्रं जुहोतीन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति ॥ २ ॥ प्राशनान्ते दधिपृषातकमञ्जलिना जुहोति ऊनम्मे पूर्यतां पूर्णम्मे मात्यगात्स्वाहेति ॥ ३ ॥ दधिमधुघृतमिश्रममात्या अवेक्षन्त आयात्विन्द्र इत्यनुवाकेन ॥ ४ ॥ मातृभिर्वत्सान्सꣳसृज्य ताꣳ रात्रिमाग्रहायणीं च ॥ ५ ॥ ततो ब्राह्मणभोजनम् ॥ ६ ॥ ॥ १६ ॥ ॥ * ॥

कर्क्कः ॥ आश्वयुज्याम्पृषातकाः । पृषातका इति कर्मणो नामधेयम् । तच्चाश्वयुज्याम्पौर्णमास्यां भवति ॥ पायसमैन्द्रꣳ श्रपयित्वा दधिमधुघृतमिश्रं जुहोति । इन्द्रायेन्द्राण्या ॥ इत्येवमाद्याः पञ्चाहुतयः । ततः स्विष्टकृदादि ॥ प्राशनान्ते दधिपृषातकमञ्जलिना जुहोत्यूनम्मे पूर्यतामिति ॥ अनेन मन्त्रेण । दधिपृषातकशब्देन पृषदाज्यमभिधीयते ॥ दधिमधुघृतमिश्रममात्या

अवेक्षन्त आयात्विन्द्र इत्यनुवाकेन । दधिमधुघृतमिश्रः पायसः । अमात्या यजमानगृह्याः ॥ मातृभिर्वत्सान्सꣳसृज्य ताꣳरात्रिम् ॥ तस्यां रात्रौ मातृभिर्वत्साः संसृष्टा एव वसन्ति ॥ अधिकारमुपजीवन्नाह ॥ आग्रहायणीं च । रात्रिं वत्ससंसर्गः । ततो ब्राह्मणभोजनम् ॥ १६ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ पृषातका इति कर्मणो नामधेयम् । तदाश्वयुज्यां पौर्णमास्याम् भवति ॥ पायसमैन्द्रꣳ श्रपयित्वा दधिमधुघृतमिश्रञ्जुहोति । इन्द्राय इन्द्राण्यै इत्येवमाद्याः पञ्चाहुतयः । ततः स्विष्टकृदादि । प्राशनान्ते दधिपृषातकमञ्जलिना जुहोत्यूनम्मे पूर्यताम् । इत्यनेन मन्त्रेण । अस्यार्थः । तत्र गार्ग्यो गायत्री प्रजापतिः पृषदाज्यहोमे० । अत्र देवतालिङ्गाभावात् आज्यन्द्रव्यमनादेशे जुहोतिषु विधीयते । मन्त्रस्य देवतायाश्च प्रजापरिति स्थितिरिति छन्दोगपरिशिष्टपरिभाषितत्वादग्निरेवात्र देवता तस्य प्रजापतित्वश्रवणात् । हे अग्ने अनेन पृषदाज्यहोमेन मे मम यदूनन्तत्पूर्यताम् पूर्णन्त्वया क्रियताम् । यच्च पूर्णम्मे मम तन्मा व्यगात् विपरीतभावम् अपूर्णताम्मा गच्छतु । दधिपृषातकशब्देन पृषदाज्यमभिधीयते । आयात्विन्द्र इत्यनुवाकेन दधिमधुघृतमिश्रः पायसः चरुशेषम् अमात्या यजमानगृह्या अवेक्षन्ते । तस्यां रात्रौ मातृभिर्वत्सान्संसृज्य । एवंसति अधिकारमुपजीवन्नाह । 'आग्रहायणीं च रात्रिं वत्ससंसर्गः । ततो ब्राह्मणभोजनम् ॥ ॥ १६ ॥

हरिहरः ॥ आश्वयुज्याम्पृषातकाः ॥ पृषातका इति सञ्ज्ञकङ्कर्म भवति ॥ तच्च आश्वयुज्यां पौर्णिमायां भवति ॥ पायसमैन्द्रꣳ श्रपयित्वा दधिमधुघृतमिश्रं जुहोति ॥ तत्र ऐन्द्रम् इन्द्रदेवत्यम् पायसं चरुं संसाध्य दधिमधुघृतैर्मिश्रङ्कृत्वा आवसथ्याग्नौ जुहोति । केभ्य इत्याह ॥ इन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति ॥ इन्द्रायेत्यादिभिः पञ्चभिर्मन्त्रैः स्वाहाकारान्तैः प्रतिमन्त्रं पञ्चाहुतीर्जुहोति । यथामन्त्रं त्यागः ॥ प्राशनान्ते दधिपृषातकमञ्जलिना जुहोत्यूनं मे पूर्य्यतां पूर्णम्मे माव्यगात्स्वाहेति ॥ ततः स्विष्टकृत्प्रभृति प्राशनान्ते पृषातकं पृषदाज्यमञ्जलिना ऊनम्मे इत्यादिना मन्त्रेण जुहोति पृषदाज्यं घृते दधिप्रक्षेपाद्भवति । दुग्धेनापि तत्सम्भवाद्दधिग्रहणम् ॥ दधिमधुघृतमिश्रममात्या अवेक्षन्त आयात्विन्द्र इत्यनुवाकेन ॥ ततो दधिमधुघृतमिश्रं हुतशेषम्पायसम् अमात्या अमा च गृहम् तत्र भवा अमात्या यज-

मानस्य गृह्याः भ्रातृपुत्रादयः अवेक्षन्ते आयात्विन्द्रो वम उपन इत्यारभ्य यूयं पात स्वस्तिभिः सदा न इत्यन्तेन अनुवाकेनावेक्षन्ते पश्यन्ति ॥ **मातृभिर्वत्सान् सꣳसृज्य ताꣳ रात्रिम् ॥** ताम् आश्वयुजीसम्बन्धिनीं रात्रिं वत्सान् तर्णकान् मातृभिर्जननीभिर्धेनुभिः संसृज्य संसृष्टान् कृत्वा तां रात्रिमिति कालाध्वनोरत्यन्तसंयोगे इत्युपपदविभक्तिर्द्वितीया तेन सन्ध्यायां वत्सान् संसृज्य सकलां रात्रिं न बध्नीयात् ॥ **आग्रहायणीं च ॥** न केवलन्तामेव रात्रिं वत्ससंसर्गः आग्रहायणीं च मार्गशीर्षसम्बन्धिनीमपि रात्रिम् ॥ **ततो ब्राह्मणभोजनम् ॥** इति सूत्रार्थः । अथ प्रयोगः । तत्र आश्वयुज्यां पौर्णमास्यां पृषातकाख्यं कर्म भवति । तद्यथा । प्रथमप्रयोगे मातृपूजाभ्युदयिकपूर्वकं आवसथ्याग्नौ ब्रह्मोपवेशनादिप्राशनान्ते विशेषः । सक्षीराः प्रणीताः प्रणयेत् दधिमधुनी उपकल्पयेत् प्रणीताःक्षीरेण पायसं श्रपयेत् । तत उपयमनकुशादानादर्वाक् पायसे दधिमधुघृतानि आवपेत् । आज्यभागानन्तरन्दधिमधुघृतमिश्रेण पायसेन इन्द्राय स्वाहा इदमिन्द्राय० इन्द्राण्यै स्वाहा इदमिन्द्राण्यै० अश्विभ्याꣳ स्वाहा इदमश्विभ्यां० आश्वयुज्यै पौर्णमास्यै स्वाहा इदमाश्वयुज्यै पौर्णमास्यै० शरदे स्वाहा इदं शरदे० । एवम्पञ्चाहुतीर्हुत्वा तत एव पायसात् स्विष्टकृते हुत्वा महाव्याहृत्यादिदक्षिणादानान्ते स्थाल्यामाज्यं दधि आसिच्य पृषदाज्यं कृत्वा अञ्जलिनाऽऽदाय ऊनम्मे पूर्यतां पूर्णं मे माव्यगात्स्वाहेति मन्त्रेणैकामाहुतिं जुहोति इदमग्नये० ॥ ऊनम्मे पूर्यतामित्यस्य होमस्य का देवतेत्यत्र सन्देहः । देवतात्वं तद्धितचतुर्थीमन्त्रलिङ्गवाक्यप्रकरणैः प्रतीयते । अत्र तु दधिपृषातकमञ्जलिना जुहोतीति होमविधिपरे वाक्ये पृषातकं द्रव्यमात्रं श्रूयते न तद्धितो न चतुर्थी वा । मन्त्रेऽपि न देवताप्रकाशकं लिङ्गमस्ति न च वाक्यम् । ततः प्रकरणमवशिष्यते तच्च ऐन्द्रं पायसमैन्द्रꣳ श्रपयित्वेति तद्धितात् अस्य यज्ञस्येन्द्रो देवतेति । तर्हि किं प्राकरणिकत्वात् अस्य होमस्य इन्द्रो देवता । तत आज्यद्रव्यमनादेशे जुहोतिषु विधीयते । मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिरिति छन्दोगपरिशिष्टपरिभाषातः प्रजापतिः । तत्र वाक्यप्रकरणयोर्वाक्यस्य बलीयस्त्वात् प्रकरणबाधः । तेनेह प्रजापतिरेव देवता । वासुदेवदीक्षितास्तु स्वपद्धतावग्नय इति लिखितवन्तः तत्कुत इति न ज्ञायते । ततो दधिमधुघृतमिश्रं हुतशेषं पायसम् अमात्याः पुत्रादयः आयात्विन्द्र इत्यनुवाकेन यूयं पात स्वस्तिभिः सदा न इत्यन्तेन अवेक्षन्ते । ततो ब्राह्मणभोजनम् । कृतैतत्कर्माङ्गतया ब्राह्मणमेकं भोजयिष्ये ॥ १६ ॥   ॥ * ॥   ॥ * ॥   ॥ * ॥

गदाधरः ॥ आश्वयुज्यां पृषातकाः ॥ पृषातका इति वक्ष्यमाणकर्मणो नामधेयम् । तच्चावसथ्ये आश्वयुज्यां पौर्णमास्यां भवति । आश्वयुजी आश्विनी पौर्णिमा ॥ पायसमैन्द्रꣳश्रपयित्वा दधिमधुघृतमिश्रं जुहोतीन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति ॥ ऐन्द्रम् इन्द्रदेवत्यं पायसं पयसि शृतं चरुं श्रपयित्वा यथाविधि पक्त्वा दधिमधुघृतैर्मिश्रितं पायसं चरुम् इन्द्रायेत्यादिभिः पञ्चमन्त्रैः प्रतिमन्त्रम्पञ्चाहुतीर्जुहोति ॥ प्राशनान्ते दधिपृषातकमञ्जलिना जुहोत्यूनम्मे पूर्यताम्पूर्णम्मे माव्यगात्स्वाहेति ॥ संस्रवप्राशनान्ते दधिपृषातकं दध्ना मिश्रितं स्थाल्याज्यमञ्जलिना जुहोति ऊनम्मे पूर्यतामिति मन्त्रेण। दधिपृषातकशब्दः पृषदाज्यवाची । अत्राग्निर्देवतेति गर्गवासुदेवजयरामकारिकाकाराः । आज्यन्द्रव्यमनादेशे जुहोतिषु विधीयते॥ मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिरिति छन्दोगपरिशिष्टपरिभाषावचनाद्वाक्येन प्राकरणिकीमिन्द्रदेवतां बाधयित्वा प्रजापतिर्देवतेति हरिहरः । तच्चिन्त्यम् । अनादिष्टदेवतालिङ्गेष्वपि मन्त्रेषु देवतापेक्षायां सत्याम् किम् यत्किञ्चिद्देवतान्तरं परिकल्प्यताम् उत प्रकृतैव गृह्यतामिति । तत्र प्रकृतपरिग्रहो न्याय्यः सन्निधानात् । अप्रकृतोपादाने पुनरसन्निधानात् सन्देह इति । तथा च नैरुक्ताः । तथा येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा । यद्देवतः सयज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्तीति । तत्रापि मुख्यत्वादिन्द्र एव । अयमर्थो दर्शितः कर्केणापि पिष्टलेपाञ्जुहोतीति सूत्रे । मन्त्रार्थः । हे इन्द्र मे मम यदूनन्तदनेन होमेन पूर्यताम् पूर्णं क्रियताम् । यच्च पूर्णं तन्माव्यगात् विपरीतभावम् अपूर्णताम्मा गच्छतु ॥ दधिमधुघृतमिश्रममात्या अवेक्षन्त आयात्विन्द्र इत्यनुवाकेन ॥ अमा गृह्यम् तत्र भवा अमात्या यजमानगृह्या भ्रातृपुत्रादयः दधिमधुघृतैर्मिश्रितं चरुशेषं आयात्विन्द्र इत्यनुवाकेन स्वस्तिभिः सदा न इत्यन्तेनावेक्षन्ते विलोकयन्ति॥ मातृभिर्वत्सान्सꣳसृज्य ताꣳ रात्रिम् । वत्सान् धेनुभिः संसृज्य संसृष्टान् कृत्वा तस्यां रात्रौ संसृष्टा एव वसन्ति । तामिति कालाध्वनोरत्यन्तसंयोग इत्युपपदविभक्तिर्द्वितीया । तेन सम्पूर्णां रात्रिं वसन्ति । अधिकारमुपजीवन्नाह ॥ आग्रहायणीं च ॥ आग्रहायणीं मार्गशीर्षसम्बन्धिनीं रात्रिं संसृष्टा एव वत्साः वसन्ति ॥ ततो ब्राह्मणभोजनम् ॥

इति श्री त्रिरग्निचित्सम्राट्स्थपतिवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्डे षोडशी कण्डिका समाप्ता ॥ १६ ॥ * ॥ ॥ * ॥ ॥ * ॥

अथ पदार्थक्रमः ॥ प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । ब्रह्मोपवेशनादिदक्षिणादानान्ते विशेषः । सक्षीरं प्रणयनम् । दधिमधुनोरुपकल्पनम् । प्रणीतार्क्षीरमुत्सिच्य पायसश्रपणम् । प्रागुपयमनादानात्पायसे दधिमधुघृतावपनम् । आज्यभागान्ते दधिमधुघृतमिश्रेण पायसेन पञ्चाहुतयः । इन्द्राय स्वाहा० । इन्द्राण्यै० । अश्विभ्याᳬ स्वाहा । आश्वयुज्यै पौर्णमास्यै० । शरदे० । यथामन्त्रं त्यागाः । ततः पायसादेव स्विष्टकृत् । ततो महाव्याहृत्यादिनवाहुतयः । संस्रवप्राशनादिदक्षिणान्तम् । ततः स्थाल्याज्ये दध्यासिच्य तत्पृषदाज्यमञ्जलिना जुहोति ऊनम्मे पूर्यतामिति इदमिन्द्राय० । ततो दधिमधुघृतमिश्रं चरुशेषं यजमानगृह्याः पुत्रादयोऽवेक्षन्ते आयात्विन्द्र इत्यनुवाकेन यूयं पातस्वस्तिभिः सदा न इत्यन्तेन मन्त्रेण । ततो ब्राह्मणभोजनम् । रात्रौ वत्ससंसर्गः । गौणकालेऽपीदङ्कार्यम् । पृषातकमिदं कर्म गौणकालेऽपि शस्यत इति कारिकोक्तेः । गर्गमते विशेषः । ब्रह्मासनाद्याज्यभागान्ते बर्हिःसादनानन्तरं दधिमधुघृतानामासादनम् । पयश्च । ग्रहणे इन्द्राय जुष्टं गृह्णामि । इन्द्रायेन्द्राण्यै अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे जुष्टमिति केचित् । आज्यभागान्ते पायसे दध्याद्यावपनम् । स्विष्टकृदन्ते पृषदाज्यहोमः । इदमग्नय इति त्यागः । ततो महाव्याहृत्यादिदक्षिणान्तम् । ततो गृह्याणां चर्ववेक्षणम् । ततो बर्हिर्होमादिविप्रभुक्त्यन्तम् । ततो वैश्वदेवः ॥ रात्रौ वत्ससंसर्ग इति ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ अथ सीतायज्ञः ॥ १ ॥ व्रीहियवानां यत्र यत्र यजेत तन्मयᳬ स्थालीपाकᳬ श्रपयेत् ॥ २ ॥ कामादीजानोऽन्यत्रापि व्रीहियवयोरेवान्यतरᳬ स्थालीपाकᳬ श्रपयेत् ॥ ३ ॥ न पूर्वचोदितत्वात्सन्देहः ॥ ४ ॥ असम्भवाद्विनिवृत्तिः ॥ ५ ॥ क्षेत्रस्य पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे फलानुपरोधेन ॥ ६ ॥ ग्रामे वोभयसम्प्रयोगादविरोधात् ॥ ७ ॥ यत्र श्रपयिष्यन्नुपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय तन्मिश्रैर्दर्भैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥ ८ ॥ पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृताः । तमिहेन्द्रमुपह्वये शिवा नः सन्तु हेतयः स्वाहा । यन्मे किञ्चिदुपेप्सितमस्मिन्कर्मणि वृत्रहन् । तन्मे सर्वᳬ समृध्यतां जीवतः शरदः शतᳬ स्वाहा । सम्प-

त्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ श्रीः प्रजामिहावतु स्वाहा। यस्याभावे वैदिकलौकिकानां भूतिर्भवति कर्मणाम्। इन्द्रपत्नीमुपह्वये सीताꣳ सा मे त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा॥ अश्वावती गोमती सूनृतावती बिभर्ति या प्राणभृतो अतन्द्रिता। खलमालिनीमुर्वरामस्मिन्कर्मण्युपह्वये ध्रुवाꣳ सा मे त्वनपायिनी भूयात्स्वाहेति॥ ९॥ स्थालीपाकस्य जुहोति सीतायै यजायै शमायै भूत्या इति॥ १०॥ मन्त्रवत्प्रदानमेकेषाम्॥ ११॥ स्वाहाकारप्रदाना इति श्रुतेर्विनिवृत्तिः॥ १२॥ स्तरणशेषकुशेषु सीतागोप्तृभ्यो बलिꣳ हरति पुरस्ताद्ये त आसते सुधन्वानो निषङ्गिणः। ते त्वा पुरस्ताद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति॥ १३॥ अथ दक्षिणतोऽनिमिषा वर्मिण आसते। ते त्वा दक्षिणतो गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति॥ १४॥ अथ पश्चात् आभुवः प्रभुवो भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिः। ते त्वा पश्चाद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति॥ १५॥ अथोत्तरतो भीमा वायुसमा जवे। ते त्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति॥ १६॥ प्रकृतादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म॥ १७॥ स्त्रियश्चोपयजेरन्नाचरितत्वात्॥ १८॥ सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत्सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत्॥ १९॥ ॥ १७॥

कर्कः॥ अथ सीतायज्ञः। व्याख्यास्यत इति सूत्रशेषः। स चायं कृष्यादिप्रवृत्तस्यैव भवति॥ व्रीहियवानां यत्र यत्र यजेत तन्मयꣳ स्थालीपाकꣳ श्रपयेत्॥ व्रीहिकाले व्रीहीन् यवकाले यवान्॥ कामादीजानोऽन्यत्रापि व्रीहियवयोरेवान्यतरꣳ स्थालीपाकꣳ श्रपयेत्॥ ततोऽन्यत्रापि यागं

कुर्वन्यज्ञादिप्रभृतिषु व्रीहियवयोरेवान्यतरमिच्छया स्थालीपाकं श्रपयेत् ॥ न पूर्वचोदितत्वात्सन्देहः। नैवात्र सन्देहः पूर्वं चोदितमेवैतत् व्रीहीन् यवान्वा हविषी इति। अतो न वक्तव्यमेतत् ॥ असम्भवाद्विनिवृत्तिः ॥ यावस्य चरोरसम्भवाद्विनिवृत्तिरधस्तनस्य शास्त्रान्तरस्य तेन पुनरारम्भः। अनवस्रावितान्तरोष्मपाकविशदविषयसिद्धे तण्डुलपाके चरुशब्दस्य प्रयोगप्रत्ययादिति ॥ क्षेत्रस्य पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे फलानुपरोधेन। कर्तव्यः ॥ ग्रामे वोभयसम्प्रयोगात् ॥ ग्रामे वा कर्त्तव्यम्। उभयं हि सम्प्रयोक्तुं शक्यते। फलानुपरोधः कृष्टं च। न चात्र विरोधः। अतो वाशब्दो विकल्पार्थः ॥ यत्र अपथिष्वनुपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय तन्मिश्रैर्दर्भैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥ उपलेपनोद्धतावोक्षितग्रहणं कृष्टेऽपि यथास्यादिति। तन्मिश्रैर्दर्भैः स्तरणङ्कर्तव्यम्। व्रीहिकाले व्रीहिसस्यमिश्रैर्यवकाले यवसस्यमिश्रैः स्तरणम्। आज्यभागोत्तरकालमाज्याहुतीर्जुहोति ॥ पृथिवी द्यौः प्रदिशो दिश इत्यादि स्थालीपाकस्य जुहोतीत्यन्तम्। स्थालीपाकस्येत्यवयवलक्षणा षष्ठी ॥ सीतायै यजायै शमायै भूत्यै इति मन्त्रवत्प्रदानमेकेषाम्। एकेषामाचार्याणाम्मतम्मन्त्रवदेव प्रदानम्भवति न स्वाहाकारेण ॥ स्वाहाकारप्रदाना इति श्रुतेः ॥ श्रुतौ तु स्वाहाकारप्रदानता। वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नम्प्रदीयत इति। न चात्र वषट्कारः प्रवर्तते। याज्यापुरोनुवाक्यत्वे हि वषट्कारस्य हि श्रवणम्। तस्मात्स्वाहाकारोऽप्यत्र भवति। विनिवृत्तिरधस्तनस्य पक्षस्य मन्त्रवत्प्रदानमित्यस्य। अस्मिन्नवसरे लाङ्गलयोजनदेवताभ्यस्तद्धुतोपादानान्नेन स्थालीपाकेन होमः। स्थालीपाकहोमाधिकारात्। ततः स्विष्टकृदादि। स्तरणशेषकुशेषु सीतागोप्तृभ्यो बलिँ हरति। पुरस्ताद्ये त आसत०। इत्येवमादिभिर्मन्त्रैः। स्तरणे ये शेषभावं गतास्त एव कुशास्तेषु बलिं हरति। पुरस्ताद्ये त आसत इत्येवमादिभिर्मन्त्रैः। अथ दक्षिणतो ऽनिमिषा वर्मिण आसते०। इत्यनेन मन्त्रेण। अथ पश्चादाभुवः प्रभुव०। इत्यनेन मन्त्रेण। अथोत्तरतो भीमा वायुसमा जवे०। इत्यनेन मन्त्रेण ॥ प्रकृतादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म। कर्तव्यम्। स्त्रियश्चोपयजेरन्नाचरितत्वात् ॥ स्त्रियश्च बलिकर्म कुर्युः। कुत एतत् आचरितत्वात् आचरन्ति हि स्त्रियो बलिकर्म ॥ सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत्सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत् ॥ * ॥ इति श्री कर्कोपाध्यायकृतौ गृह्यभाष्ये द्वितीयं काण्डं समाप्तम् ॥

जयरामः ॥ अथ सीतायज्ञः । व्याख्यास्यत इति सूत्रशेषः । स चायङ्कृष्यभिप्रवृत्तस्यैव साग्नेर्भवति । यत्र यत्रापि व्रीहियवयोरेवान्यतरꣳ स्थालीपाकꣳ श्रपयेत् । व्रीहिकाले व्रैहेयम् । यवकाले यावम् । अतो ऽन्यत्रापि यागङ्कुर्वन् पञ्चादिप्रभृतिषु व्रीहियवयोरेवान्यतरमिच्छया स्थालीपाकं श्रपयेत् । नैवात्र सन्देहः । पूर्वचोदितत्वात् व्रीहीन् यवान्वा हविषी इति श्रौतेषूक्तत्वात् व्रीहियवयोरिति । असम्भवादिति । यावस्य चरोरसम्भवाद्विनिवृत्तिरधस्तनसूत्रस्य तेन पुनरयमारम्भः । यद्वा ननु यावस्य चरोर्विनिवृत्तिदर्शनात्कथमेकतरं श्रपयेत् तत्राह । असम्भवादिति । यावस्य चरोर्विनिवृत्तिः सा चासम्भवात् नतु शास्त्रतः असम्भवश्चानवस्रावितान्तरोष्मपाकविशदसिद्धे तण्डुलपाके चरुशब्दप्रयोगदर्शनात् । क्षेत्रस्य पुरस्तात्पूर्वस्यान्दिशि । कृष्टे फालेन विलिखिते फलानुरोधेन सस्याविनाशेन विधिना कार्यः । ग्रामे वा कर्तव्यः । उभयसम्प्रयोगात् उभयं हि फलानुरोधः कृष्टञ्च सम्प्रयोक्तुं शक्यम् । न चात्रविरोधः । एकतरोपादानेऽपरस्य बाधापत्तेः । तन्मिश्रे व्रीहिकाले विकल्पस्य विद्यमानत्वात् अत्रापि कृष्ट एव उपलेपनादिग्रहणं कृष्टे ऽपि च यथा स्यादिति । तन्मिश्रे व्रीहिकाले व्रीहिशष्पमिश्रैः यवकाले यवशष्पमिश्रैः स्तरणम् । आज्याहुतीः पृथिवीत्यादिपञ्चभिर्मन्त्रैः क्रमेण पञ्च । अथ मन्त्रार्थः । तत्र पञ्चानाम्प्रजापतिः आद्ययोरनुष्टुप् तृतीयादिषु प्रतिष्ठापङ्क्तिजगत्यः लिङ्गोक्ता आज्यहोमे० । पृथिव्यादिदेवता यस्मै इन्द्राय इन्द्रमुपासितुं स्थिताः । प्रदिशो विदिशः । किम्भूताः द्युभिः कान्तिभिरावृताः पूर्णाः । तमिन्द्रमिह सीतायज्ञे उपह्वये उपह्वानं करोमि । उपहूतस्येन्द्रस्य हेतयो वज्राद्यायुधानि शिवाः कल्याणकारिण्यः सन्तु तस्मै च स्वाहा सुहुतमस्तु । द्वितीयस्यार्थः । हे वृत्रहन् अस्मिन्कर्मणि सीतायज्ञे यत्किञ्चिन्मे ममोपस्थितम्प्राप्तमिष्टन्तत्सर्वं शतं शतं शरदो वत्सरान् जीवतः समृध्यताम् समृद्धिम्प्राप्नुताम् । तुभ्यं स्वाहेति समानं सर्वत्र । तृतीयस्यार्थः । प्रजापतिः प्रतिष्ठा लिङ्गोक्ता आज्यहोमे० । सम्पत्तिर्धनाद्युपचयः । भूतिरैश्वर्यम् । भूमिराश्रयः । वृष्टिरभीष्टवर्षणम् । ज्येष्ठतादिना ज्येष्ठत्वम् । श्रैष्ठ्यं सर्वोपकारित्वम् । श्रीयते सेव्यते सर्वैरिति श्रीः लाङ्गलपद्धतेः प्रतिष्ठासम्पत्यादिगणः । इह प्राप्तः सन् मदीयाम्प्रजां पुत्रादिकमवतु रक्षतु । इन्द्रो वा एतैर्युक्ताम्प्रजामवत्विति ॥ ३ ॥ चतुर्थस्यार्थः । यस्याः सीतायाः सद्भावे वैदिकलौकिकानां श्रौतस्मार्तकर्मणां भूतिः सम्पत्तिर्भवति । तामिन्द्रपत्नीं सीतामुपह्वये सा सीता मे मम अन्नपायिनी अदनीयादिवृद्धिकारिणी कर्मणि कर्मणि प्रतिकर्म तु विशेषात् भूयात्

भवतु इति । तस्यै स्वाहा ॥ ४ ॥ तामेव विशिनष्टि । अश्वावती अश्वाः विद्यन्ते यस्यां साऽश्ववती । सैवाश्वावती । दीर्घश्छान्दसः । गावो विद्यन्ते यस्यां सा गोमती । सूनृतं मधुरवाक्यं तिष्ठति यस्यां सा सूनृतवती सैव सूनृतावती । प्राणभृतोऽशेषजीवान् बिभर्ति पुष्णाति । अतन्द्रिता आलस्यरहिता सती ॥ खलमालिनी खले धान्यराशिस्थाने मालते शोभते इति खलमालिनी ताम् उर्वरां सर्वसस्याढ्याम् । ध्रुवाम् स्थिराम् तां सीतां अस्मिन्कर्मण्युपह्वये । सा मे अनपायिनी दुःखध्वंसिनी । तु विशेषात् भूयात्स्वाहेति । स्थालीपाकस्येत्यत्रावयवलक्षणा षष्ठी । सीतायै यजायै शमायै भूत्यै इति चतस्र आहुतीर्जुहोति । एकेषामाचार्याणाम्मते मन्त्रवत्प्रदानम्भवति यथामन्त्रं होमो नतु स्वाहाकारेण । कुतः स्वाहाकारप्रदाना इति श्रुतेः । श्रुतौ जुहोतीनां स्वाहाकारप्रदानता श्रूयते । इदन्तु स्मार्तङ्कर्म । ननु वषट्कारेण वा स्वाहाकारेण वा देवेभ्यो ऽन्नम्प्रदीयत इति सामान्योक्तेरत्रापि प्रवर्तततामिति चेत् । न चात्र वषट्कारप्रवृत्तिः । याज्यापुरोनुवाक्यावत्त्वे हि वषट्कारश्रवणम् । तत्सहपाठात्स्वाहाकारोऽप्यत्र न प्रवर्तते । तत्र विनिवृत्तिः । मन्त्रवत्प्रदानपक्षस्य निरासः । कुतः । स्मार्तेऽपि कर्मणि स्वाहाकारप्रदानत्वस्य विधानात् । तद्यथा छन्दोगपरिशिष्टे कात्यायनः । स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् । हन्तकारो मनुष्याणां स्वधाकारः स्वधाभुजामिति । अत्रावसरे सीतायज्ञे चेति सूत्रातिदिष्टाभ्यो लाङ्गलयोजनदेवताभ्य इन्द्रादिभ्यस्तद्गुतोपादानात्तेन स्थालीपाकेन होमः स्थालीपाकहोमाधिकारात् । ततश्च स्विष्टकृदादि । स्तरणशेषकूर्चेषु सीतागोप्तृभ्यो बलिं हरति पुरस्ताद्येत आसते इत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् । स्तरणे शेषभावं गतास्त एव कूर्चास्तेषु बलिहरणम् । अथ मन्त्रार्थः । तत्र चतुर्णाम्परमेष्ठी यजुः लिङ्गोक्ता बलिहरणे० । हे सीते ये देवाः सुधन्वानः शोभनधनुष्मन्तः निषङ्गिणः सतूणीराः ते तव पुरस्तात्पूर्वभागे आसते तिष्ठन्ति ते त्वा त्वां पुरस्तात्प्राच्यान्दिशि गोपायन्तु रक्षन्तु । गुपूधूपविच्छिपणिपनिभ्य आय इत्यायप्रत्ययः । किम्भूताः अप्रमत्ताः सावधानाः । अनपायिनः कष्टहराः । अहञ्चैषां देवानां देवेभ्यो नमस्करोमि । बलिञ्चेमेभ्यो हरामि इति । अथ एवन्दक्षिणतस्तव दक्षिणपार्श्वे ये अनिमिषाः निमेषमकुर्वाणाः वर्मिणः सन्नद्धाः । शेषं समानम् । अथैवं पश्चात्पश्चिमायान्दिशि । आभुव आसमन्ताद्भवाः प्रभुवः प्रकृष्टेन भवाः । तानेवाह । भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिरित्येवं नामानः । शेषं समानम् । अथैवमुत्तरतः उत्तरपार्श्वे भीमाः भीषणाः । जवे वेगे वायुना

समास्तुल्याः । क्षेत्रे खले गृहे अध्वनि वा वर्तमानं त्वा त्वाङ्गोपायन्तु । शेषं समानम् । एवमन्मन्त्रलिङ्गाच्चतसृषु दिनु बलिदानम् । प्रकृतात्प्रधानदेवतासम्बन्धिनो व्रीह्याद्यावाद्वा स्थालीपाकादन्यो यः सिद्धः पाकश्चरुस्तस्मात् । स्थाल्येनाज्यशेषेण च पूर्ववत् लाङ्गलयोजनवत् इन्द्रम्पर्जन्यमित्यादिभ्यो बलिहरणम् । स्त्रियश्चाचरितत्वादाचाराद्बलिकर्म कुर्युः । सꣳस्थिते कर्मणि ब्राह्मणान् भोजयेत् ॥ इत्याचार्यबलभद्रसुतजयरामकृते सज्जनवल्लभे गृह्यभाष्ये द्वितीयकाण्डविवरणम् ॥ २ ॥

हरिहरः ॥ **अथ सीतायज्ञः** ॥ अथेदानीं सीतायज्ञकर्म व्याख्यास्यत इति शेषः । तत्र कृषिप्रवृत्त औपासनिकोऽधिक्रियते ॥ **व्रीहियवानां यत्र यत्र यजेत तन्मयꣳ स्थालीपाकꣳ श्रपयेत्** ॥ तत्र सीतायज्ञे व्रीहयश्च यवाश्च व्रीहियवास्तन्मध्ये यत्र यत्र यस्मिन् यस्मिन् व्रीहिकाले यवकाले वा यजेत सीतायज्ञेन तत्र तत्र तन्मयं व्रीहिमयं व्रीहिकाले यवमयं यवकाले स्थालीपाकं चरुं श्रपयेत् ॥ **कामादीजानोऽन्यत्रापि व्रीहियवयोरेवान्यतरꣳ स्थालीपाकꣳ श्रपयेत्** ॥ कामात् इच्छातः अन्यत्रापि पक्षादिप्रभृतिषु ईजानो यागं कुर्वन् व्रीहियवयोरेवान्यतरं स्थालीपाकं श्रपयेत् ॥ **न पूर्वचोदितत्वात्सन्देहः** ॥ अत्र व्रीहियवयोरन्यतरस्य यागमात्रसाधनद्रव्यत्वे न सन्देहः । कुतः पूर्वचोदितत्वात् पूर्वोपदिष्टत्वात् । कुत्रेति चेत् व्रीहीन् यवान्वा हविषी इत्यत्र कल्पे अतो न सन्देहः । **असम्भवाद्विनिवृत्तिः** ॥ ननु यावस्य चरोर्विनिवृत्तिर्दृश्यते कथमन्यतरं स्थालीपाकं श्रपयेदिति चेत् उच्यते यावचरोर्या विनिवृत्तिः सा असम्भवात् न शास्त्रात् अतो नायमसम्भवविनिवृत्तस्य यावस्य चरोः प्रतिप्रसवः । यतः सामान्यशास्त्रविहितम् क्वचिच्छास्त्रान्तरेण प्रतिषिद्धम् पुनर्विधीयमानं हि प्रतिप्रसवमुच्यते । इदन्त्वसम्भवात्प्रतिषिद्धम् । कथमसम्भव इति चेत् अनवस्रावितान्तरोष्मपक्वे ईषदसिद्धे तण्डुलपाके चरुशब्दप्रयोगप्रत्ययात् । अतो वाचनिको यावस्थालीपाको यत्र तत्र गुलिकाभिः सम्पाद्यते यत्र पुनर्विकल्पः तत्रासम्भवाद्विनिवृत्तिरिति ॥ **क्षेत्रस्य पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे फलानुपरोधेन** ॥ क्षेत्रस्य सस्यवतः पुरस्तात् पूर्वस्यान्दिशि उत्तरतो वा उदीच्यां वा शुचौ अमेध्यद्रव्यरहिते देशे कृष्टे फालेन विलिखते फलस्य सस्यस्य अनुपरोधः अबाधः फलानुपरोधस्तेन फलानुपरोधेन सीतायज्ञः कर्तव्यः ॥ **ग्रामे वोभयसम्प्रयोगात्** ॥ यद्वा ग्रामे कर्तव्यः कुतः उभयसम्प्रयोगात् । उभयं क्षेत्रम् ग्रामश्च सम्प्रयोक्तुमधिकरणतया सम्बोद्धुं शक्यते

फलानुपरोधेन कृष्टत्वेन वा ॥ पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे इति ग्रामस्यापि विशेषणत्वेन सम्बध्यते अविरोधात् । ननु क्षेत्रग्रामयोः एकतरोपादानेन अन्यतरस्य बाधः प्रसज्येत ततो विरोध इति चेत् न ॥ अविरोधात् । न विरोधः अविरोधस्तस्मादविरोधात् विकल्पादेकतरोपादानम् न दोषः । व्यवस्थासम्भवे हि अष्टदोषदुष्टोऽपि विकल्प आश्रीयते न्यायविद्भिः ॥ यत्र अपयिष्यन्नुपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय तन्मिश्रैर्दर्भैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥ यत्र क्षेत्रे ग्रामे वा चरुं अपयिष्यन् भवति अपयितुमिच्छा भवति तत्र उपलिप्ते गोमयोदकेन उद्धते स्फ्येनोल्लिखिते अवोक्षिते मणिकोदकेन सिक्ते अग्निमावसथ्यं स्थापयित्वा । अत्र पुनरुपलेपनाद्युपदेशः कृष्टेऽपि प्राप्त्यर्थः । न पुनः परिसमूहनोद्धरणनिवृत्त्यर्थः । तन्मिश्रैर्दर्भैः स्तीर्त्वा तैर्व्रीहिभिर्यवैर्वा मिश्रा मिलिता दर्भास्तैस्तन्मिश्रैर्दर्भैरग्निं स्तीर्त्वा परिस्तीर्य आज्यभागयागानन्तरं वक्ष्यमाणमन्त्रैः पृथिवी द्यौरित्यादिभिः पञ्चभिर्मन्त्रैः क्रमेण पञ्चाज्याहुतीर्जुहोति ॥ स्थालीपाकस्य जुहोति सीतायै यजायै शमायै भूत्यै इति ॥ मन्त्रवत्प्रदानमेकेषाम् ॥ स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । तस्य सीताद्याभ्यश्चतसृभ्यो देवताभ्यश्चतस्र आहुतीः क्रमेण तन्नामभिरेव चतुर्थ्यन्तैः स्वाहाकारान्तैश्च जुहोति । एकेषामाचार्याणां मते मन्त्रवदेव प्रदानम् होमः न स्वाहाकारः । किंकारणम् ॥ स्वाहाकारप्रदाना इति श्रुतेः ॥ स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः जुहोतयः इति श्रुतेः श्रुतौ श्रौतकर्मणि स्वाहाकारप्रदानत्वम् इदन्तु स्मार्तङ्कर्म ॥ वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते इति सामान्यवचनात् गार्ह्येऽपि प्रवर्त्ततामिति चेत् नचात्र वषट्कारस्य प्रवृत्तिः किमिति याज्यापुरोनुवाक्यात्वे वषट्कारस्य श्रवणात् । तेन सह पाठाच्च स्वाहाकारोऽप्यत्र निवर्त्तते ॥ विनिवृत्तिः ॥ मन्त्रवत्प्रदानमित्येतस्य पक्षस्य विनिवृत्तिः निरासः अप्रवृत्तिरिति यावत् । कुतः स्मार्तेऽपि कर्मणि स्मृतिकारैः स्वाहाकारस्य विधानात् । तत् यथा छन्दोगपरिशिष्टे कात्यायनः । स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् । हन्तकारो मनुष्याणां स्वधाकारः स्वधाभुजामिति ॥ अथ सीतायज्ञ इत्यनेन सूत्रेणातिदिष्टाभ्यो लाङ्गलयोजनदेवताभ्यः तद्धूतोपात्तस्थालीपाकेनास्मिन्नवसरे जुहुयात् । कुतः ततः स्थालीपाकहोमाधिकारात् ततः स्विष्टकृदादि ॥ स्तरणशेषकुशेषु सीतागोप्तृभ्यो बलिं हरति पुरस्ताद्ये त आसत इत्यादि । तत्र पुरस्ताद्य इत्यादिभिश्चतुर्भि-

मन्त्रैः स्तरणे शेषभावमुपसर्जनत्वं गताः प्राप्ताः त एव कुशास्तेषु स्तरणशेषकुशेषु बलिं हरति केभ्यः सीतागोप्तृभ्यः सीता लाङ्गलपद्धतिः ताः गोपायन्ति पालयन्ति ये ते सीतागोप्तारस्तेभ्यः सीतागोप्तृभ्यः स्तरणशेषकूर्चाः प्राच्यादिषु चतसृषु दिक्षु यथालिङ्गम् ॥ **प्रकृतादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म** ॥ प्रकृतात्प्रधानदेवतासम्बन्धिनो व्रैह्याद्यावाद्वा स्थालीपाकात् अन्यो यः सिद्धोपात्तश्चरुस्तस्मात् स्थाल्येनाज्यशेषेण च पूर्ववत् लाङ्गलयोजनवत् बलिकर्म इन्द्रपर्जन्यादिभ्यो बलिहरणं कर्तव्यम् ॥ **स्त्रियश्चोपयजेरन्नाचरितत्वात्** ॥ स्त्रियश्च भार्यादिकाः उपयजेरन् बलिकर्मणा ताभ्य एव देवताभ्यः पूजां कुर्युः । कुत एतत् आचरितत्वात् । प्राचीनाभिः स्त्रीभिर्बलिकर्मणः कृतत्वात् ॥ **सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत् सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत्** ॥ संस्थिते समाप्ते सीतायज्ञाख्ये कर्मणि ब्राह्मणान् विप्रान् त्रिप्रभृतीन् भोजयेत् आशयेद्भक्ष्यभोज्यादिभिः । द्विरुक्तिरत्र काण्डसमाप्तिनिबन्धना ॥ इति सूत्रार्थः । अथ प्रयोगः । अथ सीतायज्ञः । कृषिं कुर्वतः साग्नेः व्रीहिनिष्पत्तिकाले यवनिष्पत्तिकाले च भवति । तत्र प्रथमप्रयोगे मातृपूजाभ्युदयिके भवतः । अनन्तरं क्षेत्रस्य पूर्वत उत्तरतो वा कृष्टे शुचौ देशे यत्र सस्यानि न नश्यन्ति तत्रेदं कर्म कुर्यात् । यद्वा ग्रामे पूर्वत उत्तरतो वा शुचिदेशस्य कर्षणं विधाय तत्र कर्त्तव्यम् । एवन्देशद्वयान्यतरे देशे पञ्च भूसंस्कारान् कृत्वा औपासनाग्निमुपसमाधाय ब्रह्मोपवेशनादि कुर्यात् । तत्र विशेषः व्रीहिकाले व्रीहिसस्यमिश्रैर्दर्भैरग्निं परिस्तृणाति यवकाले यवसस्यमिश्रैः । तत्र व्रीहिकाले व्रीहिमयम् एकमेव चरुं यवकाले यवमयं श्रपयति । अपरं स्थालीपाकं सिद्धमेवासादयति तण्डुलानन्तरमुपकल्पयति बलिपटलकं । बलिपटलकमिति शूर्पादिकं वैणवं पात्रम् कुलमाषौदनयुक्तमुच्यते । तण्डुलानन्तरं सिद्धं चरुं प्रोक्षति । आज्यभागानन्तरम् पञ्चाज्याहुतीर्जुहोति । तद्यथा पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृताः । तमिहेन्द्रमुपह्वये शिवानः सन्तु हेतयः स्वाहा इदमिन्द्राय० । यन्मे किंचिदुपेप्सितमस्मिन्कर्मणि वृत्रहन् । तन्मे सर्वꣳ समृध्यतां जीवतः शरदः शतꣳ स्वाहा । इदमिन्द्राय० । सम्पत्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ श्रीः प्रजामिहावतु स्वाहा । इदमिन्द्राय० । यस्याभावे वैदिकलौकिकानां भूतिर्भवति कर्मणाम् । इन्द्रपत्नीमुपह्वये सीताꣳ सा मे त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा । इदमिन्द्रपत्न्यै० । अश्वावती गोमती सूनृतावती बिभर्त्ति या प्राणभृतो अतन्द्रिता । खलमालिनीमुर्वरामस्मिन्कर्मण्युपह्वये ध्रुवाꣳ सा मे त्वनपायिनी भूयात्स्वाहा । इदं सीतायै० ।

अथ प्रकृतस्य स्थालीपाकस्य चतस्र आहुतीर्जुहोति । यथा सीतायै स्वाहा इदं सीतायै० यजायै स्वाहा इदं यजायै० शमायै स्वाहा इदं शमायै० भूत्यै स्वाहा इदं भूत्यै० । अथ सिद्धेन स्थालीपाकेन लाङ्गलयोजनदेवताभ्यो ऽष्टाहुतीर्जुहोति । यथा इन्द्राय स्वाहा इदमिन्द्राय० पर्जन्याय स्वाहा इदं पर्जन्याय० अश्विभ्याᳫं स्वाहा इदमश्विभ्यां० मरुद्भ्यः स्वाहा इदं मरुद्भ्यो० उदलाकाश्यपाय स्वाहा इदमुदलाकाश्यपाय० स्वातिकार्यै स्वाहा इदं स्वातिकार्यै० सीतायै स्वाहा इदं सीतायै० अनुमत्यै स्वाहा० इदमनुमत्यै० । यथादैवतं त्यागः । प्रकृतात् सिद्धान्नचरोः स्विष्टकृत् । ततो महाव्याहृत्यादि ब्रह्मणे दक्षिणादानान्तं कृत्वा क्षेत्रस्य पुरस्तादारभ्य प्रतिदिशं स्तरणशेषकुशतृणान्यास्तीर्य तेषु मुख्येन चरुणा यथास्तरणं वक्ष्यमाणमन्त्रैर्बलीन् हरति । यथा पुरस्ताद्ये त आसते सुधन्वानो निषङ्गिणः । ते त्वा पुरस्ताद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति पुरस्ताद्बलिहरणमन्त्रः । इदं सुधन्वभ्यो निषङ्गिभ्यो० । अथ दक्षिणतो ऽनिमिषा वर्मिण आसते । ते त्वा दक्षिणतो गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति दक्षिणतो बलिहरणमन्त्रः । इदमनिमिषेभ्यो वर्मिभ्यो० । अथ पश्चादाभुवः प्रभुवो भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिः । ते त्वा पश्चाद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति पश्चिमतो बलिहरणमन्त्रः । इदमाभूभ्यः प्रभूभ्यो भूत्यै भूम्यै पार्ष्ण्यै शुनङ्कुर्य्यै० । अथोत्तरतो भीमा वायुसमा जवे । ते त्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति उत्तरतो बलिहरणमन्त्रः । इदं भीमेभ्यो वायुसमाजवेभ्यो० । अथ सिद्धचरुशेषं स्थाल्येनाज्यशेषेण मत्रीय तेनेन्द्रादिभ्योऽनुमत्यन्तेभ्यो लाङ्गलयोजनदेवताभ्यो बलीन् हरति । ततो बलिपटलकेन स्त्रियश्चेन्द्रादिभ्यो हलयोजनदेवताभ्य अन्येभ्यश्च वृद्धव्यवहारसिद्धेभ्यः क्षेत्रपालादिभ्यो बलिदानं कुर्युः । ततो ब्राह्मणान् भोजयेत् । इत्यग्निहोत्रिहरिहरविरचितायां पारस्करगृह्यसूत्रव्याख्यानपूर्विकायां प्रयोगपद्धतौ द्वितीयः काण्डः समाप्तः ॥ ॥ * ॥

गदाधरः ॥ अथ सीतायज्ञः । व्याख्यास्यत इति सूत्रशेषः । सीतायज्ञ इति कर्मनाम । स चायं कृषिप्रवृत्तस्य साग्नेर्भवति ॥ व्रीहियवानां यत्र यत्र यजेत तन्मयᳫं स्थालीपाकᳫं श्रपयेत । व्रीहयश्च यवाश्च व्रीहियवाः । तेषां मध्ये यत्र यत्र यस्मिन् यस्मिन्काले व्रीहिकाले यवकाले वा सीतायज्ञेन यजेत तत्र तन्मयं व्रीहि-

काले व्रीहिमयं यवकाले यवमयं स्थालीपाकं चरुं श्रपयेत् ॥ कामादीजानोऽन्यत्रापि व्रीहियवयोरेवान्यतरꣳ स्थालीपाकꣳश्रपयेत् ॥ कामादिच्छया अतोऽन्यत्रापि ईजानो यागं कुर्वन् पत्नादिप्रभृतिषु व्रीहियवयोरेवान्यतरं स्थालीपाकं श्रपयेत् । न पूर्वचोदितत्वात्सन्देहः ॥ व्रीहियवयोरन्यतरस्य यागसाधनत्वे नैव सन्देहः । कुतः। परिभाषासूत्रे व्रीहीन् यवान्वा हविषी इति पूर्वं चोदितत्वात् पूर्वमुपदिष्टत्वात्। अतोऽर्थादपि च व्रीहिभिर्यवैर्वा यागः प्राप्नोतीति न वक्तव्यमेतत् ॥ ननु यावस्य चरोर्विनिवृत्तिदर्शनात्कथमन्यतरं चरुं श्रपयेत्तत्राह ॥ असम्भवाद्विनिवृत्तिः ॥ यावस्य चरोरसम्भवाद्विनिवृत्तिरधस्तनस्य शास्त्रान्तरस्य तेन यवानां स्थालीपाकं कुर्यादिति पुनरारम्भः । असम्भवश्चानवस्रावितान्तरोष्मपाकविशदविषयसिद्धे तण्डुलपाके चरुशब्दस्य प्रयोगप्रत्ययात् । अतः सर्वत्र स्थालीपाको व्रीहीणामेव ॥ क्षेत्रस्य पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे फलानुपरोधेन॥ सस्ययुक्तस्य क्षेत्रस्य पूर्वस्यान्दिशि उदीच्यां वा अमेध्यरहिते देशे कृष्टे सीरेण विलिखिते फलस्य सस्यस्यानुपरोधेन अबाधेनोक्ते देशे सीतायज्ञः कार्यः ॥ ग्रामे वोभयसम्प्रयोगात् । अविरोधात् । अथवा सीतायज्ञो ग्रामे वा कार्यः । उभयं हि सम्प्रयोक्तुं शक्यते । कुतः । फलानुपरोधः कृष्टं च । न चात्र विरोधः । अतो वाशब्दो विकल्पार्थः ॥ यत्र श्रपयिष्यन्नुपलिप्य उद्धतावोक्षितेऽग्निमुपसमाधाय तन्मिश्रितैर्दर्भैःस्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति । पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृताः । तमिहेन्द्रमुपह्वये शिवानः सन्तु हेतयः स्वाहा । यन्मे किञ्चिदुपेप्सितमस्मिन्कर्मणि वृत्रहन् । तन्मे सर्वꣳ समृध्यतां जीवतः शरदः शतꣳ स्वाहा ॥ सम्पत्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ श्रीः प्रजामिहावतु स्वाहा ॥ यस्याभावे वैदिकलौकिकानां भूतिर्भवति कर्मणाम् । इन्द्रपत्नीमुपह्वये सीताꣳ सा मे त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा ॥ अश्वावती गोमती सूनृतावती बिभर्ति या प्राणभृतो अतन्द्रिता । खलमालिनीमुर्वरामस्मिन्कर्मण्युपह्वये ध्रुवाꣳ सा मे त्वनपायिनी स्वाहेति ॥ यत्र क्षेत्रे ग्रामे वा चरुं श्रपयिष्यन् भवति तत्रोपलिप्ते उद्धते उल्लिखिते अवोक्षिते जलेनाभ्युक्षिते देशेऽग्निमावसथ्यमुपसमाधाय स्थापयित्वा तन्मिश्रैर्दर्भैर्व्रीहिकाले व्रीहिसस्यमिश्रैर्यवकाले यवसस्यमिश्रैर्दर्भैरग्निम्परिस्तीर्याज्यभागयागानन्त-

रमाज्येन पञ्चाहुतीर्जुहोति पृथिवी द्यौरित्यादिभिः पञ्चमन्त्रैः प्रतिमन्त्रम् । उपलेपनोद्धृतावोक्षितग्रहणं कृष्टेऽपि पञ्चसंस्कारप्रज्ञप्त्यर्थम् । नेतरपरिसङ्ख्यार्थम् । मन्त्रार्थः । पृथिव्यादिदेवता यस्मै इन्द्राय इन्द्रमुपाश्रितं स्थिताः । प्रदिशः दिशश्च । किम्भूताः । द्युभिः कान्तिभिरावृताः पूर्णाः । तमिन्द्रम् इह यज्ञे उपह्वये समीपमाह्वये । इन्द्रस्य हेतयो वज्राद्यायुधानि । शिवाः कल्याणकारिण्यः सन्तु । तस्मै च सुहुतमस्तु ॥ १ ॥ हे वृत्रहन् अस्मिन्कर्मणि सीतायज्ञे यत्किञ्चिन्मे ममोपेप्सितम् इष्टम् तत्सर्वं मे मम समृध्यताम् सम्पद्यताम् । किम्भूतस्य शतं शरदो वत्सरान् जीवतः । तुभ्यं स्वाहेति सर्वत्र समानम् ॥ २ ॥ सम्पत्तिर्धनाद्युपचयः । भूतिरैश्वर्यम् । भूमिराश्रयः । वृष्टिरभीष्टस्य । ज्यैष्ठ्यं जेष्ठत्वम् । श्रैष्ठ्यं श्रेष्ठत्वम् । श्रीः प्रतिष्ठासम्पत्त्यादिगणः । इह यज्ञे प्रीतः सन् मदीयां प्रजां पुत्रादिवर्गमवतु रक्षतु । इन्द्रो वा एतैर्युक्तास्प्रजामवत्विति ॥ ३ ॥ यस्याः सीतायाः सह वैदिकलौकिकानां श्रौतस्मार्तानां कर्मणां भूतिः सम्पत्तिर्भवति । तामिन्द्रपत्नीं सीतामुपह्वये । सा सीता मे मम अनपायिनी अदनीयादिवृद्धिकर्त्री कर्मणि कर्मणि प्रतिकर्म भूयात् भवतु ॥ तस्यै स्वाहा ॥ ४ ॥ तामेव विशिनष्टि ॥ अश्वावती अश्वादिसम्पत्तिकर्त्री ॥ एवं गोमत्यादौ ॥ सूनृता मधुरवाक् ॥ अतन्द्रिता सावधाना सती या प्राणभृतो जीवान् बिभर्ति पुष्णाति । किम्भूता । खलमालिनी धान्यराशिवती । उर्वरा सर्वसस्यानां सम्पत् । तां ध्रुवाम् स्थिराम् अस्मिन्कर्मण्युपह्वये । उपहूता च सा मे मम अनपायिनी दुःखध्वंसिनी भवतु । तस्यै स्वाहा ॥ **स्थालीपाकस्य जुहोति । सीतायै यजायै शमायै भूत्या इति** ॥ सीताया इति चतुर्भिर्मन्त्रैः प्रतिमन्त्रम् स्थालीपाकेन चतस्र आहुतीर्जुहोति । अवयवलक्षणा षष्ठी स्थालीपाकस्येति ॥ **मन्त्रवत्प्रदानमेकेषाम् । स्वाहाकारप्रदाना इति श्रुतेः** ॥ एकेषामाचार्याणाम्मते मन्त्रवत्प्रदानम् । यथामन्त्रं होमो न तु स्वाहाकारेण । कुतः । स्वाहाकारप्रदाना इति श्रुतेः । श्रुतौ हि जुहोतीनां स्वाहाकारप्रदानता श्रूयते । इदन्तु स्मार्तङ्कर्म ॥ ननु वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नम्प्रदीयत इति सामान्येनोक्तेरत्रापि तत्प्रवर्ततामिति चेत् । न चात्र वषट्कारप्रवृत्तिः । याज्यापुरोनुवाक्यत्वे च वषट्कारश्रवणम् ॥ तत्सहपाठात्स्वाहाकारोऽप्यत्र न प्रवर्तते ॥ विनिवृत्तिः ॥ पूर्वोक्तपक्षस्य मन्त्रवत्प्रदानमित्यस्य विनिवृत्तिर्निरासः । स्मार्तेऽपि कर्मणि स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् । हन्तकारो मनुष्याणां स्वधाकारः स्वधाभुजामिति कात्यायनस्मृतौ विधानात् ॥ सीतायज्ञेचेत्यतिदेशादस्मिन्नवसरे

लाङ्गलयोजनदेवताभ्यः तद्धृतोपात्तेन स्थालीपाकेन होमः । स्थालीपाकहोमाधिकारात् । ततः स्विष्टकृदादि ॥ स्तरणशेषकूर्चेषु सीतागोप्तृभ्यो बलिꣳ हरति पुरस्तादेत आस ते सुधन्वानो निषङ्गिणः । ते त्वा पुरस्ताद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति ॥ अग्नेः परिस्तरणे ये कुशा व्रीहिसम्यमिश्रा यवसम्यमिश्रा वा शेषभावमङ्गभावं प्राप्तास्त एव कूर्चाः आसनानि तेषु बलिं हरति । सीतागोप्तृभ्यः सीता लाङ्गलपद्धतीर्यं गोपायन्ति पालयन्ति ते सीतागोप्तारस्तेभ्यः । तत्र पुरस्तात्प्राच्यां ये त आसत इति मन्त्रेण । मन्त्रार्थः । हे सीते ये देवाः सुधन्वानः शोभनधनुष्मन्तः निषङ्गिणः सतूणीराः ते तव पुरस्तात् आसते तिष्ठन्ति ते त्वां पुरस्तात्प्राच्यां दिशि गोपायन्तु रक्षन्तु । किम्भूताः अप्रमत्ताः सावधानाः । अनपायिनः कष्टहराः । अहं चैषां नमस्करोमि । बलिमेवमेभ्यो हरामि ददामि ॥ अथ दक्षिणतोऽनिमिषा वर्मिण आसते । ते त्वा दक्षिणतो गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति ॥ अथ पुरस्ताद्बल्यनन्तरमग्नेर्दक्षिणपार्श्वे कूर्चेषु बलिं हरति । अनिमिषा इति मन्त्रेण । मन्त्रार्थः । ये अनिमिषाः निमेषरहिताः वर्मिणः सन्नद्धाः शेषं पूर्ववत् ॥ अथ पश्चादाभुवः प्रभुवो भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिः । ते त्वा पश्चाद् गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति । अथाग्नेः पश्चिमायान्दिशि आभुव इति बलिं ददाति । मन्त्रार्थः । आ समन्ताद्भवाः । तानेवाह । भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिरित्येवं नामानः शेषं व्याख्यातम् ॥ अथोत्तरतो भीमा वायुसमा जवे । ते त्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति । अथोत्तरपार्श्वे बलिं ददाति । भीमा इति मन्त्रेण । मन्त्रार्थः । भीमाः भीषणाः जवे वेगे वायुना समास्तुल्याः क्षेत्रे खले गृहे अध्वनि वा वर्तमानं त्वा त्वां गोपायन्तु शेषं समानम् ॥ प्रकृतादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म ॥ प्रकृतात्प्रधानयागदेवतासम्बन्धिनः स्थालीपाकादन्यो यः सिद्धो गृहीतश्चरुस्तस्मात्स्थाल्याज्येनाज्यशेषेण च पूर्ववत् इन्द्रपर्जन्यादिभ्यो लाङ्गलयोजनदेवताभ्यो बलिहरणं कार्यम् ॥ स्त्रियश्चोपयजेरन्नाचरितत्वात् ॥ ततः स्त्रियो भार्यादिका उपयजेरन् बलिहरणं कुर्युः इन्द्रा-

दिभ्योऽन्येभ्यश्च क्षेत्रपालादिदेवताभ्यो वृद्धव्यवहारेण । कुतः आचरितत्वात् । प्राचीनाभिः कृतत्वात् बलिकर्मणः । **सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत्सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत् ॥** समाप्ते स्त्रीकर्तृकबल्यनन्तरं त्रीन्ब्राह्मणान्भोजयेत् । द्विरभ्यासः काण्डसमाप्तिसूचनार्थः ॥ ॥ * ॥ इति श्री त्रिरग्निचित्सम्राट्स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्ड सम्पूर्णम् ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

अथ पदार्थक्रमः । प्रथमप्रयोगे मातृश्राद्धम् । उक्ते देशे आवसथ्याग्नेः स्थापनम् । ब्रह्मोपवेशनादिदक्षिणान्ते विशेषः । सस्यमिश्रैर्दर्भैरग्नेः परिस्तरणम् । एकश्चरुः श्रप्यते । अपरः सिद्ध एव तण्डुलानन्तरमासादनीयः । उपकल्पनीयानि । बलिपटलकम् । शूर्पादि वैणवम्पात्रम् कुल्माषौदनयुक्तं बलिपटलकमित्युच्यते । तण्डुलोत्तरं सिद्धचरोः प्रोक्षणम् । आज्यभागान्ते पञ्चाहुतयः । पृथिवीद्यौ० इदमिन्द्राय० १ यन्मे० इदमिन्द्राय० २ सम्पत्ति० इदमिन्द्राय० ३ यस्याभावे० इदमिन्द्रपत्न्यै० ४ अश्वावती० इदं सीतायै० ५ ॥ प्रकृतचरुणा आहुतिचतुष्टयम् ॥ सीतायै स्वाहा० यजायै स्वाहा० ० शमायै० भूत्यै० ६ ॥ एवं त्यागाः । ततः सिद्धचरुणा लाङ्गलयोजनदेवताभ्यो होमः । इन्द्राय स्वाहा० १ पर्जन्याय० २ अश्विभ्याꣳ० ३ मरुद्भ्यः० ४ उदलाकाश्यपाय० ५ स्वातिकार्यै० ६ सीतायै० ७ अनुमत्यै स्वाहा० ८ । स्विष्टकृदुभयोः । महाव्याहृत्यादिदक्षिणान्तम् । प्रतिदिशम्प्रदक्षिणम् पुरस्तात्प्रथमं ये त इति प्रतिमन्त्रं बलिचतुष्टयदानम् । त्यागाः । इदं सुधन्वभ्यो निषङ्गिभ्यो० १ इदमनिमिषेभ्यो वर्मिभ्यो० २ इदमाभूभ्यः प्रभूभ्यो भूत्यै भूम्यै पार्ष्ण्यै शुनङ्कुर्यै० ३ इदं भीमाभ्यो वायुसमाजवेभ्यो० ४ चरोराज्यस्य च मिश्रणम् । तेन लाङ्गलयोजनदेवताभ्य इन्द्रादिभ्योऽनुमत्यन्तेभ्यो बलिहरणम् । ततो बलिपटलकेन स्त्रियश्च बलिहरणङ्कुर्युः इन्द्रादिभ्योऽन्येभ्यश्च क्षेत्रपालादिदेवताभ्यो वृद्धाचारेण । ततो ब्राह्मणत्रयभोजनम् ॥ ॥ * ॥ इति श्री त्रिरग्निचित्सम्राट्स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्डे सीतायज्ञपदार्थक्रमः ॥ ॥ * ॥ समाप्तञ्चेदं द्वितीयकाण्डम् ॥ ॥ २ ॥ ॥ * ॥

मूलम् ॥ अनाहिताग्नेर्नवप्राशनम् ॥ १ ॥ नवꣳ स्थालीपाकꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति । शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे । शतं यो नः शरदो ऽजीजानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा । ये चत्वारः पथयो देवयाना अन्तराद्यावापृथिवी वियन्ति । तेषां योऽज्यानिमजीजिमावहात्तस्मै नो देवाः परिधत्तेह सर्वे स्वाहेति ॥ २ ॥ स्थालीपाकस्याग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च स्विष्टमग्ने अभितत् पृणीहि विश्वाꣳश्च देवः पृतना अविष्यत् । सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मद्धेह्यजरन्न आयुः स्वाहेति ॥ ३ ॥ अथ प्राश्नाति । अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः । भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावशेन समशीमहि त्वा । स नो मयोऽभूः पितो आविशस्व शन्तोकाय तनुवे स्योन इति ॥ ४ ॥ अन्नपतीयया वा ॥ ५ ॥ अथ यवानामेतमुत्यं मधुना संयुतम् ॥ यवꣳसरस्वत्या अधिवनाय चकृषुः इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति ॥ ६ ॥ ततो ब्राह्मणभोजनम् ॥ ७ ॥ १ ॥ ॥ ॥

कर्कः ॥ अनाहिताग्नेर्नवप्राशनम् ॥ व्याख्यास्यत इति सूत्रशेषः । अनाहिताग्निरवैतानिकः । नवप्राशनमिति कर्मणो नामधेयम् । अन्वर्थमज्ञाकरणाच्च कृत्वैतत् नवं प्राश्यते नाकृत्वा । न चैतदाग्रयणशब्दवाच्यम् अतः पौर्णमास्याममावास्यायामिति नियमो न भवति । औचित्याच्छरद्वमन्तौ तु भवतः ॥ नवꣳ स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति शतायुधायेति । द्वे प्रतिमन्त्रम् ॥ स्थालीपाकस्याग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च स्विष्टमग्ने इति ॥ अतश्च स्विष्टकृद्धोमस्य पूर्वम्पश्चाच्च स्विष्टमग्न इत्याज्याहुतिहोमः । ततो महाव्याहृत्यादि । अथ प्राश्नाति । अग्निः प्रथमः प्राश्नात्विति । अनेन मन्त्रेण । यत्र हुतशेषप्राशनं तत्रायं गुणविधिः । अन्नपती-

यया वा । प्राशनङ्कर्त्तव्यम् अन्नपतीशब्दो यस्यां विद्यते सेयमन्नपतीया छप्रत्ययं ह्यत्र स्मरन्ति । अत्र यवानां प्राशने मन्त्रमाह । शतमुत्यमिति । ततो ब्राह्मणभोजनम् ॥ ॥ १ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ अनाहिताग्नेर्नवप्राशनम् ॥ वक्ष्यत इति सूत्रशेषः । अनाहिताग्निरवैतानिक औपासनिक इति पर्यायः । तस्य नवप्राशनमिति कर्मणो नामधेयम् । अन्वर्थसञ्ज्ञाकरणात् कृत्वैतत् नवमन्नम्प्राश्यते नाकृत्वा । नन्वत्र किन्नवमात्रम्प्रतिषिद्धम् उत कतिपयानीत्याशङ्क्य श्यामाकव्रीहियवानामेव नियमो नान्येषाम् । यथाह गृह्यसङ्ग्रहकारः । नवयज्ञाधिकारस्थाः श्यामाका व्रीहयो यवाः । नाश्नीयात्तानहुत्वैवमन्येष्वनियमः स्मृतः । वेणवः सर्वगुञ्जाश्च नीवाराश्चणकास्तिलाः । अकृताग्रयणो ऽश्नीयान्नैषामुक्ता हविर्गुणा इति । यत्तु श्रूयते नवमात्रप्रतिषेधस्तदाहिताग्निविषयः । शरद्वसन्तयोरेव तद्भवति औचित्यात् । न चात्र पौर्णमास्यादिकालनियमः । अनारायणत्वात् । नवꣳ स्थालीपाकꣳ श्रपयित्वाऽऽज्यभागौ इष्ट्वा आज्याहुती द्वे शतायुधायेति द्वाभ्याम् मन्त्राभ्याम् प्रतिमन्त्रम् । अथ मन्त्रार्थः । तत्र द्वयोः प्रजापतिस्त्रिष्टुप् आद्यस्येन्द्रो परस्य विश्वेदेवा आज्यहोमे० । स इन्द्रः नो ऽस्मान् शतं शरदो वर्षाणि अजीजान् जीवयतु । यद्वा नो ऽस्मभ्यं धान्यञ्जनयतु तत्र न इलि तन्त्रम् । तेन नो ऽस्माकन्दुरितानि दुर्व्यसनानि पापानि वा विश्वा विश्वानि सर्वाणि अतिनेषत् अतिनेष्यति । तस्मै स्वाहा सुहुतमस्तु । किम्भूताय शतायुधाय शतमपरिमितान्यायुधानि यस्य तस्मै । तथा शतवीर्याय अपरिमितशक्तये । तथा शतोतये अनन्तलीलाय । तथा अभिमातिषाहे अभिमातयः अरातयः तान्सहते जयतीत्यभिमातिषाट् तस्मै । हे सर्व देवाः ये चत्वारः पथयः पन्थानः देवपितृमनुष्यसर्पाणां मार्गाः देवयाना देवनम् क्रीडां सम्पादयन्तः देवादिभिर्गम्यमाना वा । अन्तरा द्यावापृथिवी । द्यावापृथिव्योर्मध्यस्थाः । पृथ्वीशब्देनात्र पृथ्वीतलं लक्ष्यते । वियन्ति वियत्तुल्याः । अतिनिर्मला इत्यर्थः । यद्वा विविधत्वं यन्ति भिन्नत्वेनेत्यर्थः । तेषाञ्चतुर्णाम्पथाम्मध्ये यः पन्था अजीजिम् अजेयत्वम् परैरनभिभवनमिति यावत् । आवहात् आवहेत् प्रापयेत् । तस्मै पथे नो ऽस्मान् परिधत्त परिदत्त समर्पयतेत्यर्थः । तम्पन्थानम् अस्मान् प्रापयतेत्यर्थः । इह अस्मिन्कर्मणि कृते सति । अनेन कर्मणा प्रतोषम्प्राप्येत्यर्थः । किम्भूतामजीजिम् । अज्यानिम् ज्यानिर्ग्लानिः हानिर्वा तद्रहिताम् । क्षेमेणाभीष्टपदप्राप्तिहेतुमित्यर्थः । युष्मभ्यं स्वाहे-

यामाहुतिं हुत्वा इदं देवेभ्य इति त्यक्त्वा अपराः पञ्चाहुतीस्तूष्णीं जुहोति इदं प्रजापतये इति त्यागः पञ्चसु। तत उत्थाय पशुं मोचयित्वा वपाश्रपणीभ्यां नियोजनीं त्यजति। ततः पान्नेजनीमादाय पशोः प्राणान्स्वयमेव शुन्धति। तद्यथा। पान्नेजनीजलमादाय मुखं दक्षिणोत्तरे नासिके दक्षिणोत्तरे चक्षुषी दक्षिणोत्तरौ कर्णौ नाभिम् मेढ्रम् पायुमेकीकृत्य पादांश्च क्रमेण शुन्धति शेषं पशोः पश्चान्निषिञ्चति। ततः पशुमुत्तानं कृत्वा नाभ्यग्रे उदगग्रं तृणन्निधायासिधारया तृणमभिनिधाय छिनत्ति। अथ द्विधाभूतस्य तृणस्य मूलमादाय उभयतो लोहितेनाङ्क्त्वा निरस्य वपामुत्खिदति। ततो वपाश्रपण्यावादाय प्रोर्णौति ततश्छिनत्ति वपां ताञ्च प्रक्षाल्याग्नेरुत्तरतः स्थित्वा प्रतप्य शाखाग्न्योरन्तरेणाहृत्याग्नेर्दक्षिणतः स्थित्वा वपां श्रपयति। श्रप्यमाणां च स्रुवेणाज्यं गृहीत्वाऽभिघार्य प्रत्याहृत्य ब्रह्माणं प्रदक्षिणीकृत्य स्वासने उपविश्य स्रुवेणाज्यं गृहीत्वा वपायां प्राणदानं कृत्वा प्लक्षशाखायामासाद्यालभते। ततो ब्रह्मान्वारब्ध आज्यभागौ हुत्वा त्रिᳬशत्स्वसार इति दशाहुतीरनन्वारब्धो हुत्वा अष्टकाचरुणा शान्ता पृथिवीत्यादिचतुर्भिर्मन्त्रैश्चतस्र आहुतीर्हुत्वा वपाहोमाय वामहस्तस्थे स्रुवे आज्यमुपस्तीर्य हिरण्यशकलमवधाय वपां द्विधाऽवदाय गृहीत्वा पुनर्हिरण्यशकलमवधाय द्विरभिघार्य वह्नवपां जातवेदः पितृभ्य इति प्राचीनावीतिनो दक्षिणामुखस्य वपाहोमः। इदं पितृभ्य इति त्यागः इदं जातवेदस इति वा त्यक्त्वा यज्ञोपवीती भूत्वोदकं स्पृष्ट्वा वपाश्रपण्यौ विपर्यस्ते अग्नौ प्रास्य पशुं विशास्ति। तद्यथा। हृदयम् जिह्वाम् क्रोडम् सव्यबाहुम् पार्श्वे यकृत् वृक्कौ गुदमध्यम् दक्षिणश्रोणिमिति सर्वावदानपक्षे। दक्षिणबाहुम् गुदतृतीयानिष्टम् सव्यश्रोणिमिति त्र्यङ्गानि स्विष्टकृद्द्रव्याणि यदा त्रीणि तदा हृदयम् जिह्वाम् क्रोडमिति त्रीणि। पञ्चावदानपक्षे हृदयम् जिह्वाम् क्रोडम् सव्यबाहुम् पार्श्वे इति पञ्चावद्यति खण्डयति। तस्मिन्पक्षे शेषान् स्विष्टकृतेऽवद्यति। ततोऽवदानानि प्रक्षाल्य शूलेन हृदयं प्रतर्द्य उखामग्नावधिश्रित्य अवदानानि प्रक्षिपति स्वल्पमुदकञ्च। ततस्तैः प्रच्युते हृदयमुपरि कृत्वा पृषदाज्येन हृदयमभिघार्येतराण्यवदानानि त्र्यङ्गवर्जितानि आज्येनाभिघारयति। अथोषामुद्वास्याव दानान्युद्धृत्य कस्मिंश्चित्पात्रे हृदयादिक्रमेण उदक्संस्थानि निधाय स्रुवेणाज्यमादाय हृदयादीनां त्र्यङ्गवर्जितानां क्रमेण प्राणदानं कृत्वा शाखाग्न्योरन्तरेणाहृत्य प्लक्षशाखासु हृदयादिक्रमेणोदक्संस्थान्यासादयति। ततस्त्र्यङ्गवर्जितान्यालभते। अथ प्रधानहोमार्थं स्रुवेणाज्यमुपस्तीर्य हिरण्यशकलमवधार्य। हृदयादिभ्यः

क्रमेण द्विर्द्विरवदाय स्रुवे कृत्वा स्थालीपाकाच्च सकृदवदायोपरि कृत्वा तदुपरि हिरण्यशकलं दत्वा सकृदभिघार्य विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयात् । इदं विश्वेभ्यो देवेभ्य इति त्यक्त्वा स्विष्टकृदर्थं स्रुवमुपस्तीर्य हिरण्यशकलन्दत्वा त्र्यङ्गेभ्यो द्विर्द्विरवदाय स्रुवे कृत्वा चरुद्वयाच्च सकृत्सकृदवदाय हिरण्यशकलमवधार्य द्विर्द्विरभिघार्य अग्नये स्विष्टकृते स्वाहेति जुहुयात् इदमग्नये स्विष्टकृते इति त्यागः । असर्वावदानपक्षे प्रधानावदानशेषात् स्विष्टकृद्धोम इति विशेषः । ततो महाव्याहृत्यादिप्राजापत्यान्ता नवाज्याहुतीर्हुत्वा ब्रह्मान्वारब्धो हुत्वा संस्रवं प्राश्य ब्रह्मणे पशवङ्गन्दक्षिणान्दद्यात् । ततः स्मृत्यन्तरोक्तम्पञ्चविंशतिब्राह्मणभोजनं च दद्यात् । अस्यैव पशोः सव्यपार्श्वसक्थिभ्यामपरदिनेऽन्वष्टकाकर्म पूर्ववत् । माघ्या ऊर्ध्वं कृष्णाष्टम्यां तृतीयाष्टका प्राजापत्या । सा यथा प्रथमाष्टका । तत्र अपूपस्थाने कालशाकचरुन्तदग्निसिद्धमेवासादनकाले आसाद्य प्रोक्षणकाले प्रोक्षयेत् । ततोऽपूपयागस्थाने प्रजापतये स्वाहेति कालशाकञ्जुहुयात् । शेषं समानम् । कालशाकालाभे वास्तुकम् । अन्येद्युः पूर्ववदन्वष्टकाकर्मेति । प्रोष्ठपद्या ऊर्ध्वं कृष्णाष्टम्यां चतुर्थी पित्र्या शाकाष्टका । सा च प्रथमाष्टकावत् । एतावान् विशेषः । चरुस्थालीद्वयम् तण्डुलानन्तरं कालशाकमासादयेत् । कालशाकचरुसम्बद्धमासादनादि होमान्तं कर्म प्राचीनावीती दक्षिणामुखः कुर्यात् । अन्यद्यज्ञोपवीती पूर्वाभिमुखः कालशाकचरुसम्बद्धकर्म कृत्वोदकमुपस्पृशेत् । अपूपहोमस्थाने पितृभ्यः स्वाहेति शाकचरोरेकामाहुतिञ्जुहुयात् । प्रातरन्वष्टकाकर्म पूर्ववदिति ॥ ३ ॥

मूलम् ॥ अथातः शालाकर्म ॥ १ ॥ पुण्याहे शालाङ्कारयेत् ॥ २ ॥ तस्या अवटमभिजुहोत्यच्युताय भौमाय स्वाहेति ॥ ३ ॥ स्तम्भमुच्छ्रयति इमामुच्छ्रयामि भुवनस्य नाभिं वसोर्धारामप्रतरणीं वसूनाम् । इहैव ध्रुवान्निमिनोमि शालां क्षेमे तिष्ठतु घृतमुक्षमाणा । अश्वावती गोमती सूनृतावत्युच्छ्रयस्व महते सौभगाय । आत्वा शिशुराक्रन्दत्वा गावो धेनवो वाश्यमानाः । आत्वा कुमारस्तरुण आवत्सो जगदैः सह । आत्वा परिस्रुतः कुम्भ आदध्नः कलशैरुपक्षेमस्य पत्नी बृहती सुवासा रयिन्नो धेहि सुभगे सुवीर्यम् । अश्वावद्गोमदूर्जस्वत् पर्णं वनस्पतेरिव । अभिनः पूर्य्यताᳩं रयिरिदमनुश्रेयो वसान इति

चतुरः प्रपद्यते ॥ ४ ॥ अभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रम्प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वा निष्क्रम्य द्वारसमीपे स्थित्वा ब्रह्माणमामन्त्रयते ब्रह्मन् प्रविशामीति ॥ ५ ॥ ब्रह्मानुज्ञातः प्रविशत्यृ*तम्प्रपद्ये शिवं प्रपद्य इति ॥ ६ ॥ आज्यꣳ संस्कृत्येहरतिरित्याज्याहुती हुत्वाऽपरा जुहोति । वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः । यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा। वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रणवया गातुमत्या । पाहि क्षेम उत योगे वरन्नो यूयम्पात स्वस्तिभिः सदा नः स्वाहा। अमीवहा वास्तोष्पते विश्वारूपाण्याविशन्। सखा सुशेव एधि नः स्वाहेति ॥ ७ ॥ स्थालीपाकस्य जुहोति । अग्निमिन्द्रं बृहस्पतिं विश्वान्देवानुपह्वये सरस्वतीं च वाजीं च वास्तु मे दत्त वाजिनः स्वाहा । सर्पदेवजनान्त्सर्वान् हिमवन्तꣳ सुद†र्शनम् । वसूꣳश्च रुद्रानादित्यानीशानं जगदैः सह । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा । पूर्वाह्णमपराह्णं चोभौ मध्यन्दिना सह। प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथाम् । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा ॥ कर्तारं च विकर्तारं विश्वकर्माणमोषधींश्च वनस्पतीन् । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा। धातारं च विधातारं निधीनां च पतिꣳ सह। एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा । स्योनꣳ शिवमिदं वास्तु दत्तं ब्रह्मप्रजा-

* ऋतमिति पाठान्तरम् । † नगेश्वरमिति पाठान्तरम् ॥

पती । सर्वाश्च देवताः स्वाहेति ॥ ८ ॥ प्राशनान्ते कांस्ये सम्भारानोप्यौदुम्बरपलाशानि सशुराणि शाद्वलं गोमयं दधि मधु घृतं कुशान्यवांश्चासनोपस्थानेषु प्रोक्षेत् ॥ ९ ॥ पूर्वे सन्धावभिमृशति । श्रीश्च त्वा यशश्च पूर्वे सन्धौ गोपायेतामिति ॥ १० ॥ दक्षिणे सन्धावभिमृशति । यज्ञश्च त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेतामिति ॥ ११ ॥ पश्चिमे सन्धावभिमृशति । अन्नं च त्वा ब्राह्मणाश्च पश्चिमे सन्धौ गोपायेतामिति ॥ १२ ॥ उत्तरे सन्धावभिमृशति । ऊर्क्च त्वा सूनृता चोत्तरे सन्धौ गोपायेतामिति ॥ १३ ॥ निष्क्रम्य दिश उपतिष्ठते । केता च मा सुकेता च पुरस्ताद्गोपायेतामित्यग्निर्वै केतादित्यः सुकेता तौ प्रपद्ये ताभ्यान्नमो ऽस्तु तौ मा पुरस्ताद्गोपायेतामिति ॥ १४ ॥ अथ दक्षिणतो गोपायमानं च मारक्षमाणा च दक्षिणतो गोपायेतामित्यहर्वै गोपायमानꣳ रात्रीरक्षमाणा ते प्रपद्ये ताभ्यान्नमोऽस्तु ते मा दक्षिणतो गोपायेतामिति ॥ १५ ॥ अथ पश्चात् दीदिविश्च मा जागृविश्च पश्चाद्गोपायेतामित्यन्नं वै दीदिविः प्राणो जागृविस्तौ प्रपद्ये ताभ्यान्नमोऽस्तु तौ मा पश्चाद्गोपायेतामिति ॥ १६ ॥ अथोत्तरतोऽस्वप्नश्च मानवद्राणश्चोत्तरतो गोपायेतामिति चन्द्रमा वा अस्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यान्नमोऽस्तु तौ मोत्तरतो गोपायेतामिति ॥ १७ ॥ निष्ठितां प्रपद्यते धर्मस्थूणा राजꣳ श्रीस्तूपमहोरात्रे द्वारफलके । इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह प्रजया पशुभिः सह । यन्मे किञ्चिदस्त्युपहूतः सर्वगणसखायसाधुसंवृतः । तान्त्वा शालेऽरिष्टवीरा गृहान्नः सन्तु सर्वत इति ॥ १८ ॥ ततो ब्राह्मणभोजनम् ॥ ४ ॥ * ॥

* ब्राह्मणाश्चेति पाठान्तरम् ॥

कर्कः ॥ अथातः शालाकर्म । व्याख्यास्यते इति सूत्रशेषः । शालाशब्देन गृहमभिधीयते ॥ पुण्याहे शालां कारयेत् ॥ पुण्याहग्रहणमुदगयनापूर्यमाणपक्षयोरनादरार्थम् ॥ तस्या अवटमभिजुहोत्यच्युताय भौमाय स्वाहेति । तस्याः शालायाः यो योऽवटस्तन्तमभिजुहोति । अवटसंस्कारत्वात्प्रत्यवटं होमः । चत्वारो ह्यवटा मूलस्तम्भानाम्प्रसिद्धा इति स्तम्भशालायाम् । धवलगृहे चतुर्षु कोणशिलास्थानेषु होमः स्तम्भस्थानीयत्वाच्छिलानाम् । स्तम्भमुच्छ्रयतीमामुच्छ्रयामीति । एभिर्मन्त्रैः । पूर्यताꣳ रयिरिदमनुश्रेयो वसानः । इत्येवमन्त्रैः । इति चतुरः । एवं चतुरः स्तम्भानुच्छ्रयति । इतरगृहे तु शिलान्यास एतैर्मन्त्रैः । अभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकꣳ श्रपयित्वा निष्क्रम्य । बहिर्निष्क्रमणन्तु प्रोक्षण्युत्पवनीयोपयमनकुशादानात्पूर्वम्भवति । द्वारसमीपे स्थित्वा ब्रह्माणमामन्त्रयते । ब्रह्मन्प्रविशामीति ॥ शालायामभ्यन्तरतोऽग्निमुपसमाधाय ब्रह्मोपवेशनं चोदपात्रावसरविधित्सया । प्रणीतानां ह्यधिकमेतत् । स्थालीपाकꣳ श्रपयित्वा निष्क्रम्य द्वारसमीपे स्थित्वा ब्रह्मन्प्रविशामीति ब्रह्माणमामन्त्रयते । ब्रह्मानुज्ञातः प्रविशत्यृचं प्रपद्ये । इत्यनेन मन्त्रेण । आज्यꣳ संस्कृत्येहरतिरित्याज्याहुती हुत्वाऽपरा जुहोति । वास्तोष्पते प्रतिजानीहि० । इत्येभिर्मन्त्रैः प्रतिमन्त्रम् । आज्यꣳ संस्कृत्येत्यवसरविधित्सया आज्याहुतीनामुच्यते । तत आघारादि । स्थालीपाकस्य जुहोत्यग्निमिन्द्रमिति । एवमादिभिर्मन्त्रैः प्रतिमन्त्रम् ॥ ततः स्विष्टकृदादि । प्राशनान्ते काꣳस्ये सम्भारानोप्यौदुम्बरपलाशानि ससुराणि शाद्वलं गोमयं दधिमधुघृतं कुशान् यवाँश्चासनोपस्थानेषु प्रोक्षेत् । प्राशनोत्तरकालं कांस्ये भाजने सम्भारानावपेत् । औदुम्बरपत्राणि ससुराणि सक्षीराणि । सह सुरयेत्यपरे । शाद्वलं दूर्वागोमयं दधिमधुघृतं कुशान्यवांश्च तैरासनोपस्थानेषु प्रोक्षणं करोति । आसनानि जयन्तीनागदन्तकादिस्थानानि । उपस्थानानि देवतास्थानानि तानि च वास्तुशास्त्रे ज्ञेयानि । पूर्वे सन्धावभिमृशति श्रीश्च त्वा यशश्चेति । अनेन मन्त्रेण । सन्धिशब्देन कुड्योऽभिधीयते ॥ दक्षिणे सन्धावभिमृशति यज्ञश्च त्वा दक्षिणा चेति । अनेन मन्त्रेण । पश्चिमे सन्धावभिमृशत्यन्नं च त्वा ब्राह्मणाश्चेति । अनेन मन्त्रेण ॥ उत्तरे सन्धावभिमृशत्यूर्क्च त्वा सूनृता चेति । अनेन मन्त्रेण । निष्क्रम्य

दिश उपतिष्ठते केता च मा सुकेता च० । इत्येभिर्मन्त्रैः । निगदव्याख्यातमेतत् ॥ निष्ठितां प्रपद्यते धर्मस्थूणाराजमिति । अनेन मन्त्रेण ॥ निष्ठितां परिसमाप्तां शालां प्रविशत्यनेन मन्त्रेण ॥ ततो ब्राह्मणभोजनम् ॥ ४ ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ अथातः शालाकर्म वक्ष्यत इति सूत्रशेषः । शाला गृहमित्यनर्थान्तरम् । सा च पुण्याहे कार्या । पुण्याहग्रहणमुदगयनापूर्यमाणपक्षयोरनादरार्थम् । तस्याः शालायाः यो यो ऽवटस्तन्तमभिजुहोति । अवटसंस्कारत्वात्प्रत्यवटं होमः । स्तम्भशालायां चत्वारो ऽवटा मूलस्तम्भानाम् । धवलगृहे तु चतुर्षु कोणशिलास्थानेषु होमः । स्तम्भस्थानीयत्वाच्छिलानाम् । तत्र होममन्त्रः अच्युतायेति । अस्यार्थः । तत्र प्रजापतिरनुष्टुप् इन्द्रो ऽवटहोमे० । अच्युताय अप्रच्युतस्वरूपाय । भौमाय भूनागायेति । इमामुच्छ्रयामीत्येवमादिमन्त्राणां विश्वामित्रः क्रमेण त्रिष्टुप्पङ्क्तिजगत्यनुष्टुभः स्तम्भोच्छ्रयणे० । इमां स्थूणां शालाधाररूपाम् उच्छ्रयामि उत्थापयामि । किम्भूताम् । भुवनस्य भूर्लोकस्य भुवनैकदेशवर्तिनो गृहस्य वा नाभिम् आधारम् वसोर्द्धाराम् वसुनो धनस्य धारां स्रुतिं धरित्रीं वा । वसूनां गोमहिष्यश्वस्वर्णरत्नादिविविधधनानाम् प्रतरणीम् प्लावनीम् प्रसारिणीमिति यावत् । इहैव अत्रैव स्थूणायां शालां गृहं निमिनोमि स्थापयामि । कीदृशीम् शालाम् । ध्रुवाम् स्थिराम् ॥ इयञ्च शाला क्षेमे निरुपद्रवे प्रदेशे घृतं सुखम् उक्षमाणा सिञ्चन्ती अस्मान्प्रापयन्ती तिष्ठतु स्थिता भवतु । हे शाले त्वम् अश्वावती अश्वयुक्ता । गोमती गोयुक्ता । सूनृतावती प्रियसत्यवाक्यवती । उच्छ्रयस्व उत्थिता भव । किमर्थम् । महते सौभगाय भाग्योदयाय । हे शाले त्वा त्वाम् अधिष्ठाय शिशुराक्रन्दतु बालकः क्रीडात्यहासशब्दङ्करोतु । जातावेकवचनम् ॥ अथवा बालाः क्रीडार्थं स्परस्परमाह्वयन्तु । तथा धेनवः प्रसूताः गावो ऽप्रसूताश्च वाश्यमानाः आक्रन्दन्तु इति क्रियां विपरिणमय्य सम्बन्धः । आ त्वा त्वामाश्रित्य तरुणः ममर्यः कुमारो बटुः आक्रन्दतु वेदघोषङ्करोतु । एवं वत्सः स्तनन्धयः स्तनपानार्थमाक्रन्दतु मातरमाह्वयतु जगदैरनुगै रक्षकैः सह । तथा परिस्रुतः उत्सिञ्चत् कुम्भो दध्नः कलशो ऽन्यैर्मृण्मयादिकलशैः सह उप तत्समीपे पूर्णशब्दङ्करोतु । एतैर्युक्ता भवेत्यर्थः । पुनरपि तां स्तुत्वा प्रार्थयते क्षेमस्येति । हे शाले सुभगे सुन्दरि सुसमृद्धे या त्वन्नो ऽस्मभ्यं रयिं धनन्धेहि देहि । अस्मासु धारयेति वा । किंविशिष्टा त्वम् । क्षेमस्य रक्षणस्य पत्नी स्वामिनी । बृहती स्वरूपेण गुणैश्च महती । सुवामाः शोभनवस्त्रादिसमृद्धा शोभनवसतिर्वा । किञ्च नो ऽस्मभ्यं सुवीर्यं शोभनां शक्तिम् पुष्कलप्रजा-

हेतुं वा धेहि । रयिविशेषणं वा । दानादिसुशक्तियुक्तन्धनन्देहीत्यर्थः । किञ्च भो शाले नो ऽस्मान् अभि अभितः अस्मासु सर्वभावेन रयिन्धनम्पूर्यताम् पूर्णक्रियताम् धनेनास्मान्पूरयेत्यर्थः । किंविशिष्टा रयिः । अश्वावत् अश्ववती । गोमत् गोमती । ऊर्जस्वत् रसवती विस्तृता वा । वनस्पतेः पर्णमिव । यथा वनस्पतेः पर्णानि वसन्तादौ पूर्यते तथा । एकत्वमत्र जात्या । यद्वा अश्वावदित्यादीनि पर्णविशेषणानि । अश्वावत् अश्वव्यवहारयोग्यमित्यादि । इदं स्थानं वसानः अधिवसन् अहं पूर्यताम् पूर्यै पूर्णो भवानीत्यर्थः । अधिवसाने मयि रयिं पूर्यतामिति वा ॥ १ ॥ इतिशब्द उभयत्र सम्बध्यते । तन्त्रत्वात् । इति चतुरः । एवं चतुरः स्तम्भानुच्छ्रयति । इतरगृहे तु शिलान्यास एवैतेन मन्त्रेण । ब्रह्मोपवेशनग्रहणन्तूदपात्रावसरज्ञापनार्थम् । प्रणीताभ्योऽधिकमेतत् । प्रविशेति ब्रह्मानुज्ञातः प्रविशति ऋतमितिमन्त्रेण । तदर्थः सुगमः । तत्र परमेष्ठी यजुः शाला तत्प्रवेशे० । ऋतम् सत्यभूतं त्वाम्प्रपद्ये प्राप्नोमि । एवं शिवं कल्याणरूपं त्वाम्प्रपद्ये । आज्यꣳ संस्कृत्येत्यवसरविधानार्थमाज्याहुतीनाम् । नत आघारादि । अपराश्चतस्रो वास्तोष्पते इत्यादिचतुर्भिर्मन्त्रैः । तदर्थः । तत्र वास्तोष्पते इत्यादिचतसृणां वशिष्ठस्त्रिष्टुप् इन्द्रो नवशालायामाज्यहोमे० । वसतेर्निवासकर्म इतिनिरुक्ताद्वास्तुगृहम् । तस्य वास्तोः पते स्वामिन् इन्द्र । वास्तोष्पतिर्गोष्पतिरितीन्द्रपर्यायः । अस्मान् रक्षितुं प्रतिजानीहि प्रतिज्ञाङ्कुरु । ऊरीकुर्वित्यर्थः । कथम् स्वावेशः सुष्टुप्रवेशो नो ऽस्माकं भवा भव । दीर्घश्छान्दसः । अस्मानुत्तमान्विधाय प्रवेशयेत्यर्थः । किञ्च । अनमीवः अमीवम् पापम् रोगो वा तद्विरोधी । किञ्च । यत्किञ्चिद्वयं त्वा त्वाम् ईमहे प्रार्थयामहे । तद्वस्तुजातम्प्रापय्य नो ऽस्मान् जुषस्व प्रीणयस्व प्रीयस्वेति वा । प्रार्थयानानस्मान्प्रीणयित्वा त्वमपि प्रीतो भवेत्यर्थः । किञ्च । नो ऽस्माकं द्विपदे मनुष्यवर्गाय शम् सुमङ्गलस्वरूपो भव । चतुष्पदे पशुवर्गाय शं सुखस्वरूपो भव । स्वाहाकारो मन्त्रावसानज्ञापनार्थः प्रदर्शितः सर्वत्र । हे वास्तोष्पते त्वन्नो ऽस्माकं प्रतरणः आपन्निस्तारकः एधि भव । किम्भूतानाम् । गोभिर्गवादिभिर्द्विशफैः अश्वेभिरश्वादिभिरेकशफैर्युक्तानाम् । किञ्च हे इन्द्र परमेश्वर गयस्फानः प्राणवर्द्धकश्चैधि । 'प्राणा वै गया इति श्रुतेः । किञ्च ते तव सख्ये मैत्र्यां सति वयमजरासः अक्षीणसम्पदाः स्याम भूयास्म । पुत्रान्प्रति पितेव वर्तमानस्त्वं नो ऽस्मान्प्रति जुषस्व प्रीतो भव । हे वास्तोष्पते तव शग्मया सुखरूपया । शिवं शग्ममिति सुखनामनी । संसदा सभया सक्षीमहि सम्बध्येमहि वयम् । षच समवाये । किम्भूतया रण्वया । शास्त्रीयं रणनम् उप-

न्यामकुर्वाणा रणवा तया । गातुमत्या यज्ञवत्या त्रयीप्रधानया वा । त्वञ्च नो ऽस्मान् योगे अलब्धलाभे उत अपि क्षेमे लब्धरक्षणे निमित्ते वरं यथा स्यात्तथा पाहि रक्ष । हे इन्द्रानुचराः यूयन्नो ऽस्मान्स्वस्तिभिः अभीष्टफलैः सदा पात आप्याय्य रक्षत ॥ ३ ॥ हे वास्तोष्पते इन्द्र त्वम् अमीवहा पापरोगपीडादिनाशको यतः । अतो नो ऽस्माकं सखा इहामुत्र बन्धुरेधि भव । किङ्कुर्वन् । विश्वा विश्वानि ब्रह्मादिस्तम्बपर्यन्तानि रूपाणि शरीराण्याविशन् प्रविशन् सर्वशरीरिरूपेणास्मासु अनुकूलो भवेत्यर्थः । किम्भूतः सुशेवः शोभनसुखहेतुः । अग्निमिन्द्रमित्यादिषण्णां विश्वामित्रो ऽनुष्टुप् लिङ्गोक्ता होमे० । अहमग्न्यादीन्देवान् हविर्ग्रहणाय उपह्वये मत्समीपमाह्वयामि । न केवलमेतान् । सरस्वतीं वाचम् । वाजीम् अन्नमयीं सीताञ्च । हे अग्न्यादयो देवा यूयमागत्य मे मह्यं वास्तुगृहं दत्त दद्धम् मदायत्तङ्कुरुतेत्यर्थः । किम्भूताः वाजिनः अन्नवन्तः वेगवन्तो वा । अनेनोत्तरमन्त्रा अपि व्याकृताः । विशेषास्तूच्यन्ते । एतान्सर्पादीनुपह्वये इत्यनुषङ्गः । उपहूय च तान्प्रपद्ये शरणं व्रजे ऽहम् । जगदैरनुचरैः सह वर्त्तमानान् । तत्र व्युष्टाम्, उषसम् देवीम् द्योतनात्मिकाम् । महापथाम् अनेकमार्गाम् बहुसुखामित्यर्थः । इदं वास्तु स्योनं सुखसेव्यम् सुखरूपत्वात् शिवम् कल्याणरूपम् शान्तं वा वास्तु गृहम्मह्यम् । हे ब्रह्मप्रजापती वेदब्रह्माणौ युवां दत्तम्प्रयच्छतम् । हे सर्वा देवताः यूयमपि चकाराद्दत्तेति क्रियाविपरिणामः । स्वाहेति प्रागुक्तम् । कांस्ये कांस्यपात्रे सम्भारान्, उदुम्बरस्येत्यौदुम्बरपलाशादीन् ओप्य संस्थाप्य । तत्रौदुम्बरपत्राणि समुराणि क्षीरेण सुरया वा पृक्तानि । तैरुपहारैश्चासनानि गजदन्तादिनिर्मितानि उपस्थानानि देवतायतनादीनि च प्रोक्षेत् । आसनान्युपस्थानानि च वास्तुशास्त्रप्रसिद्धानि शालाभवान्येव । पूर्व सन्धौ कुड्यादौ अभिमृशति स्पृशति "श्रीश्चत्वेति मन्त्रेण । तस्यार्थः । तदादिचतुर्णाम्प्रजापतिर्यजुर्लिङ्गोक्ताः स्पर्शने० । हे शाले त्वा त्वाम्पूर्वे सन्धौ श्रीलक्ष्मीः यशः कीर्त्तिश्च गोपायेताम् रक्षेताम् । एवमुत्तरत्रापि व्याख्येयम् । ऊर्क् तेजः प्राशनम् । सूनृता शोभनवाक् । निष्क्रम्य गृहाद्बहिर्निर्गत्य दिश उपतिष्ठते स्तौति "केता च मेत्यादिभिर्मन्त्रैः प्रतिमन्त्रम् । तदर्थः सुगमः । तत्र चतुर्णाम्प्रजापतिस्त्रिष्टुप् लिङ्गोक्ता उपस्थाने० । गोपायेतामित्येतत्पदावृत्तिर्गोपनस्याभीष्टत्वेनात्यादरसूचनार्था । निष्ठिताम् निष्पन्नाम्प्रपद्यते प्रविशति धर्मस्थूणाराजमितिमन्त्राभ्याम् । तदर्थः । तत्र द्वयोर्ब्रह्मा जगतीबृहत्यौ लिङ्गोक्ता प्रवेशने० । धर्मस्थूणाराजं धर्मयुक्तं स्थूणाराजं महतीं स्थूणाम् । श्रीस्तूपम् लक्ष्मीस्वरूपम् । चलदण्डिकारूपस्त्रीयुक्तम् ।

अगारे हि स्तूपो बध्यते । स्तूपइत्यरुषाभिधानम् । अहोरात्रे तद्देवते द्वारफलके द्वारकपाटे लोकालोकरूपत्वात् । इन्द्रस्य इमे गृहाः इन्द्रदेवतात्वात् वसुमन्तः धनिनः वरूथिनः रक्षकाः बहुप्रजासो वा । तानेतानहम्प्रपद्ये अधिवसामि । प्रजया पुत्रादिरूपया सह पशुभिर्गोमहिष्यादिभिश्च सह । यत्किञ्चिन्मे मम वस्त्वस्ति तेन सह वास्तोष्पतिनोपहूतः सन् हे शाले त्वा त्वाम् याचे । किम् । नो ऽस्मान् गृहान् गृहस्थान्प्राप्य सर्वे देवा इमे गृहा वा अरिष्टवीराः अरिष्टा निराधिव्याधयो वीराः पुत्रादयो येभ्यस्तथा सन्तु सर्वतः सर्वभावेन । किम्भूतो ऽहम् । सर्वगणसखायसाधुसंवृतः सर्वैर्गणैः परिवारैः सखायैर्मित्रसमूहैः साधुतया अन्यैः साधुभिर्वा संवृत आश्रितः । तत इत्युक्तार्थम् ॥ ४ ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ अथातः शालाकर्म ॥ अथान्वष्टकाकर्मानन्तरं यत आवसथ्याधानादीनि कर्माणि शालाग्निमाध्यान्यनुविहितानि शालाकरणं च नोक्तम् अतो हेतोः शालाकर्म शालाया गृहस्य क्रिया व्याख्यास्यत इति सूत्रशेषः । तद्यथा । पुण्याहे शालां कारयेत् ॥ पुण्यं शुभं मलमासबालवृद्धास्तमितगुरुशुक्रगुर्वादित्यसिंहस्थगुरुक्षयमासदिनत्र्यहंक्रूरग्रहाक्रान्तभुक्तभोग्यनक्षत्रादिदोषरहितं ज्योतिःशास्त्रादिनोक्तगृहारम्भविहितमासपक्षतिथिवारनक्षत्रयोगकरणमुहूर्तचन्द्रताराबललग्नादिगुणान्वितमहः पुण्याहं तस्मिन्पुण्याहे शालां गृहं कारयेत् निर्मापयेत् । पुनः पुण्याहग्रहमन्तूदगयनशुक्लपक्षयोरनियमार्थम् । शालां कारयेदित्युक्तम् । तच्च शालाकरणं देशमन्तरेण न सम्भवति इति सामान्यतो देशे प्राप्ते "यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् । इतिवचनात् । पारस्कराचार्येणानुक्तमपि* गोभिलगृह्यसूत्रोक्तदेशविशेषमविरोधादपेक्षितत्वाच्चात्र

---

* श्रीः । गृहभूमिनिर्णायकं यावदुपयुक्तं गोभिलगृह्यसूत्रं तद्भाष्यञ्च । सूत्रम् । अवसानं जोषयेत । टी० अवस्यन्ति निवसन्त्यस्मिन्नित्यवसानं आवासः । गृहार्थं भूस्थानमत्राभिप्रेतम् । ननु गृहमेवेति कुतः । समामित्येवमादीनां विशेषणानां तदर्थत्वात् । तत्रावसानं प्राग्द्वारं यशस्कामो बलकामः कुर्वीतेति च परस्ताद्विर्देशात् । जोषयेत । जुषी प्रीतिसेवनयोः । सेवेत परिगृह्णीयादित्यर्थः । कीदृशमित्यत आह । सू० समं लोमशमविभ्रंशि । टी० समं अनिम्नोन्नतं । लोमशं सतृणम् । तृणानि भूमेर्लोमानीति वचनात् । यद्वा लोमानीव यत्र मृदूनि तृणानि तल्लोमशम् । अविभ्रंशि । यत्र कृतस्य वेश्मनो नदीतीरतडागभेदशृङ्गपातमार्गादिभ्यो विभ्रंशो विनाशो नस्यात्तदविभ्रंशि स्थानं । जोषयेतेति सर्वत्रानुषज्यते ॥ सू० प्राच्य उदीच्यो वा यत्राप: प्रवर्त्तेरन् ॥ टी० प्राच्यः प्राङ्मुखाः उदीच्यो वा उदङ्मुखा वा यत्र यस्मिन् स्थाने आपः प्रवर्त्तेरन् गच्छेयुः । सत्यार्थमिच्छाविकल्पः ॥ सू० अक्षीरिण्योऽकंटका अकटुका यत्रौषधयः स्युः ॥ टी० क्षीरिण्यः क्षीरवत्यः । न क्षीरिण्यः अक्षीरिण्यः । अर्कादिभ्योऽन्याः । अकण्टकाः । कण्टकरहिताः । बर्बुरादिभ्योऽन्याः ।

लिखामः । तद्यथा । कीदृशे देशे शालां कारयेत् । समे लोमशे अविभ्रंशिनि प्राचीनप्रवणे उदक्प्रवणे वा अक्षीराकण्टकाकटुकौषधिवितते विप्रस्य गौरपांसौ क्षत्रियस्य लोहितपांसौ वैश्यस्य कृष्णपांसौ, वास्तुशास्त्रमते वैश्यस्य पीतपांसौ शूद्रस्य कृष्णपांसौ, स्थिराघाते एकवर्णे अशुष्के अनूषरेऽमरौ मरुर्निर्जलो देशः । अक्लिन्ने

अकटुकाः कटुगुणरहिताः । निम्बादिभ्योऽन्याः । यत्रौषधयः स्युर्भवेयुः ॥ **सू० गौरपांसु ब्राह्मणस्य ॥** टी० गौराः गौरवर्णाः पांसवो रेणवः यस्मिन्नवसाने तद्गौरपांस्ववसानं । तद्ब्राह्मणस्य भवति । उत्तरसूत्रयोरप्येवमेव विग्रहः ॥ **सू० । लोहितपांसु क्षत्रियस्य कृष्णपांसु वैश्यस्य । स्थिराघातमेकवर्णमशुष्कमनूषरममरुपरिहितमक्लिन्नं ॥** टी० मुद्गरादिभिरपि यदाहन्यमानं नविदीर्यते तत् स्थिराघातं । एकवर्णमभिन्नवर्णं । यत्रोत्पद्यमाना एवौषधयो नशुष्येयुस्तदिदमशुष्कं । ऊषरमिरिणं । यत्रोप्तं न प्ररोहति । न ऊषरं अनूषरं । मरुशब्देनोदकरहितः प्रदेश उच्यते । यत्र दूरमपि खनद्भिः किंचिद्वैवोदकमुपलभ्यते । उक्तं च द्वीपमुन्नतमाख्यातं शादाश्चैवेष्टकाः स्मृताः ॥ क्लिन्नं सज्जलं प्रोक्तं दूरखातोदको मरुः । तया मरुभूम्या यत्परिहितं सर्वतो वेष्टितं स्थानं तन्मरुपरिहितं नमरुपरिहितं अमरुपरिहितं । क्लिन्नं प्रत्यासन्नोदकत्वादुदकाक्लिन्नमुच्यते । उक्तं च । क्लिन्नं सज्जलं प्रोक्तमिति ॥ **सू० दर्भसम्मितं ब्रह्मवर्चसकामस्य ॥** टी० दर्भसंमितं दर्भसंयुक्तं । ब्रह्मवर्चसं व्याख्यातं तत्कामस्य ॥ **सू० बृहत्तृणैर्बलकामस्य ॥** टी० बलं भरं भवति बिभर्त्तेः । तत्कामस्य । बृहत्तृणैर्वीरणादिभिः । सम्मितमितिवर्त्तते ॥ **सू० मृदुतृणैः पशुकामस्य ॥** टी० संमितमिति वर्त्तते ॥ **सू० शादासम्मितं मण्डलं द्वीपसंमितं वा ॥** टी० शादा इष्टका । देशांतरे प्रसिद्धः । उक्तंच । शादा चैवेष्टकाः स्मृता इति । तया संमितं तदाकृति । चतुरस्रमित्यर्थः । कथं नाम स्थानस्य परिवृत्तमपि चतुरस्रं कार्यमिति । मंडलं परिमंडलं । वर्त्तुलमित्यर्थः । द्वीपशब्देनोन्नतमभिधीयते । द्वीपमुन्नतमाख्यातमिति वचनात् । मंडलं च तत् द्वीपं च मंडलद्वीपं । तत्संमितं वा । तदाकृति वा । कथं नाम । उन्नतस्य सतः परितः परिमंडला कार्या चतुरस्रा वेति ॥ **सू० यत्र वा श्वभ्राः स्वयंखाताः सर्वतोऽभिमुखाः स्युः ॥** टी० यत्र वा यस्मिन्स्थाने श्वभ्राः अवटाः स्वयंखाताः स्वयमुत्पन्नाः सर्वतः सर्वासु दिक्षु । अभिमुखाः इतरेतराभिमुख्येनावस्थिताः स्युः भवेयुः ॥ **सू० तत्रावसानं प्राग्द्वारं यशस्कामो बलकामः कुर्वीत ॥** टी० तत्र तस्मिन्नेवंगुणविशिष्टे स्थाने अवसानं गृहं । अयमवसानशब्दो गृहवचनः । कुतः । पुनरवसानग्रहणात् । अनुद्वारं च गृहद्वारमिति गृहशब्दश्रुतेश्च । प्राग्द्वारं प्राङ्मुखद्वारं यशस्कामो बलकामः कुर्वीत । कामशब्दाभ्यामाद्यन्यतरकामो नोभयकामः । यद्युभयमभिप्रेतं स्यात् तथामिति यशोबलकाम इत्यवक्ष्यत् । तस्माद्यशस्कामो बलकामो वेति द्रष्टव्यम् ॥ **सू० उदग्द्वारं पुत्रपशुकामः ॥** टी० अवसानं कुर्वीतेति वर्त्तते ॥ **सू० दक्षिणा द्वारं सर्वकामः ॥** टी० दक्षिणाद्वारं वास्तुनि यद्यत्कामयते तत्तद्भवतीति दर्शयति ॥ **सू० न प्रत्यग्द्वारं कुर्वीत ॥** टी० स्पष्टार्थम् ॥ **सू० अनुद्वारञ्च गृहद्वारम् ॥** टी० न कुर्वीतेति वर्त्तते । अनु पश्चात् द्वारं अनुद्वारं । तादृश गृहद्वारं न कुर्वीतेति । द्विद्वारमित्यर्थः । अथवा द्वारं अनु गृहद्वारं न कुर्वीत । कथं नाम । अन्यगृहद्वाराभिमुखं गृहद्वारं न कुर्वीतेत्यर्थः । तथाच वास्तुविद्वचनम् । द्वारशवास्तम्भैः कर्दमभित्त्यन्तकोणवेधैश्च ॥ नेष्टं वास्तुद्वारं विद्धमनाक्रान्तमार्गो च ॥ तथाच गृहद्वारं न कुर्वीत ॥ **सू० यथा न संलोकी स्यात् ॥** टी० यथा येन प्रकारेणायं वास्तुनि मध्योपासनस्य मार्जनभोजनादिक्रियाप्रवृत्तो बहिर्वर्त्तिनां चाण्डालपतितादीनां संलोकी आलोकनगम्यो न स्यात् न भवेत् । अन्यत् । यथा न संलोकिस्यादिति पठंति । तत्रार्थः । यथागृहमध्ये धनधान्यादिकं बालसुवर्णमणीमुक्तादिकञ्च बहिर्जनस्य संलो-

ब्रह्मवर्चसकामस्य दर्भयुक्ते बलकामस्य बृहत्तृणयुते पशुकामस्य मृदुतृणयुते शादासम्मिते मण्डलद्वीपसम्मिते वा। स्वयंखातश्च भवति वा। यशस्कामस्य बलकामस्य च प्रागद्वारां पुत्रपशुकामस्योदगद्वारां सर्वकामस्य दक्षिणद्वारां न प्रत्यगद्वारां मुख्यद्वारसम्मुखात् द्वाररहितां। पूर्वादितः प्रदक्षिणक्रमेणाश्वत्थप्लक्षवटौदुम्बरवृक्षवर्जितां कारयेत्॥ भवनस्य पूर्वादौ वटौदुम्बराश्वत्थप्लक्षाः सार्वकामिकाः विपरीतास्त्वसिद्धिदा इति मत्स्यपुराणे। तथा कण्टकी क्षीरवृक्षश्च आसन्नः सफलो द्रुमः। भार्याहानिं प्रजाहानिं कुर्वन्ति क्रमशस्तथा॥ न च्छिन्द्याद्यदि तानन्यानन्तरे स्थापयेच्छुभान्। पुन्नागाशोकबकुलशमीतिलकचम्पकान्॥ दाडिमी पिप्पली द्राक्षा तथा कुसुममण्डपम्। जम्बीरपूगपनसद्रुममञ्जरीभिर्जातीसरोजशतपत्रिकमल्लिकाभिः। पुन्नारिकेलकदलीदलपाटलाभिर्युक्तं तदत्र भवनं श्रियमातनोति॥ तस्या अवटमभिजुहोत्यच्युताय भौमाय स्वाहेति॥ तस्याः शालाया अवटं स्तम्भारोपणार्थं खातं अभिमुखेन जुहोति, अच्युताय भौमाय स्वाहेति मन्त्रेण॥ अत्रावटमित्येकवचनम् अन्येषां त्रयाणामुपलक्षणार्थम् संस्कार्यत्वाविशेषात् गृहं सम्मार्ष्टीतिवदेकवचनम्। अवटाश्चत्वारः कुत इति चेत् धवलगृहस्य स्तम्भशालारूपस्य च चतुर्षु कोणेषु चत्वारो मूलस्तम्भा भवन्ति, ते च शिलामुच्छ्रीयन्ते शिलाश्चावटेष्विति चत्वारः। अतश्चतुर्षु कोणेषु आग्नेयादिषु चत्वारोऽवटा भवन्ति तेष्वेवाज्येन होमः॥ स्तम्भमुच्छ्रयतीमामुच्छ्रयामीति॥ स्तम्भमुच्छ्रयति उत्थापयति अवटे मिनोतीत्यर्थः। केन मन्त्रेण। इमामुच्छ्रयामीत्यादिश्रेयोवसान इत्यन्तेन मन्त्रेण चतुरः। ततोऽनेनैव मन्त्रेण नैर्ऋत्याद्यवटेषु चतुरः स्तम्भानुच्छ्रयति। इतरगृहे तु चतुर्षु कोणेषु शिलान्यास एव भवति अनेनैव मन्त्रेण। प्रपद्यते। ततः शालां प्रपद्यते प्रविशति॥ अभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रम्प्रतिष्ठाप्य स्थालीपाकꣳ श्रपयित्वा निष्क्रम्य द्वारसमीपे स्थित्वा ब्रह्माणमामन्त्रयते ब्रह्मन्प्रविशामीति॥ अभ्यन्तरतः अर्द्धनिष्पन्नायाः

कि आलोकनगम्यं नम्यार्दित। किमुक्त भवति। स्यावृतद्वारं वेश्म कर्त्तव्यमिति। तस्य च वेश्मनो न परिश्रुतस्यापि॥ सू० वर्जयेत्पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा। न्यग्रोधमपराद्देशादुत्तराच्चाप्युदुंबरम्॥ टी० अश्वत्थादयः प्रसिद्धाः। एतैरेताम् दिक्ष्ववस्थितैः किं भवतीत्यत आह॥ सू० अश्वत्थादग्निभयं ब्रूयात् प्लक्षाद्ब्रूयात्प्रमायुकान्॥ न्यग्रोधाच्छस्त्रसंपीडामक्षामयमुदुम्बरात्॥ टी० प्रमायुकान् नष्टायुषः। अक्षामयोऽक्षिरोगः॥ स्पष्टमन्यत्॥ सू० आदित्यदेवतोऽश्वत्थःप्लक्षो वै यमदेवतः। न्यग्रोधो वारुणो वृक्षः प्राजापत्य उदुम्बरः॥ टी० देवतानिर्देश उत्तरार्थः। स्पष्टमन्यत्॥

शालाया मध्ये अग्निमावसथ्यमुपसमाधाय पञ्चभूसंस्कारपूर्वकं स्थापयित्वा दक्षिणतः अग्नेर्दक्षिणपार्श्वे ब्रह्माणमुपवेश्य उत्तरतः अग्नेरुत्तरप्रदेशे उदपात्रं जलपूर्णन्ताम्रादिभाजनं प्रतिष्ठाप्य निधाय। अत्र पुनर्ब्रह्मोपवेशनमुदपात्रप्रतिष्ठापनावसरविज्ञापनार्थम् । स्थालीपाकं चरुं श्रपयित्वा यथाविधि पक्त्वा ब्रह्माणं प्रथममृत्विजमामन्त्रयते सम्बोधयति । कथं, ब्रह्मन्प्रविशामीति ॥ **ब्रह्मानुज्ञातः प्रविशत्यृचं प्रपद्ये शिवं प्रपद्य इति** ॥ तत आमन्त्रितेन ब्रह्मणा प्रविशस्वेत्यनुज्ञातः प्रसूतः प्रविशति, ऋचं प्रपद्ये शिवम्प्रपद्य इति मन्त्रेण शालां प्रपद्यते॥ **आज्यꣳ संस्कृत्येहरतिरित्याज्याहुती हुत्वाऽपरा जुहोति वास्तोष्पत इत्यादि** ॥ अत्र प्राप्तमप्याज्यसंस्कारविधानमाघारादर्वाक् इहरतिरिति आज्यस्य होमप्राप्त्यर्थम् । आज्यसंस्कारानन्तरं पर्युक्षणान्ते इहरतिरित्यादि इह स्वधृतिःस्वाहेत्यन्तेन मन्त्रेणैकाम्। उपसृजमित्यादिसुदीधरत्स्वाहेत्यन्तेन मन्त्रेण द्वितीयामाहुतिं हुत्वा वास्तोष्पत इति चतसृभिर्ऋग्भिरपराश्चतस्र आज्याहुतीर्जुहोति । तत आघारावाज्यभागौ हुत्वा ॥ **स्थालीपाकस्य जुहोति अग्निमिन्द्रमित्यादि** ॥ ततः स्थालीपाकस्य चरोरग्निमिन्द्रमित्यादिभिः षड्भिर्मन्त्रैः प्रतिमन्त्रं मन्त्राहुतीर्जुहोति॥ **प्राशनान्ते काꣳस्ये सम्भारानोप्यौदुम्बरपलाशानि समुराणि शाद्वलं दधि मधु घृतं कुशान्यवाँश्चासनोपस्थानेषु प्रोक्षेत्** ॥ ततः स्विष्टकृदादिसंस्रवप्राशनान्ते कांस्ये कांस्यमये पात्रे सम्भारान् वक्ष्यमाणानोप्य कृत्वा औदुम्बरपत्राणि समुराणि सक्षीराणि शाद्वलम् दूर्वागोमयम् अरोगिण्यादिगोः शकृत् दधि मधु घृतं यवान् निगदव्याख्यातान् आसनानि च उपस्थानानि च आसनोपस्थानानि वास्तुशास्त्रोपदिष्टानि तेषु प्रोक्षेत् उदुम्बरपलाशादिसम्भारैस्तान्यभिषिञ्चेदित्यर्थः ॥ तत्रासनानि नागदन्तादिमयस्थानानि उपस्थानानि देवतास्थानानि ॥ **पूर्वे सन्धावभिमृशति श्रीश्च त्वेति** ॥ ततः शालायाः पूर्वे सन्धौ अभिमृशति पूर्वसन्धिप्रदेशमालभते श्रीश्च त्वेति मन्त्रेण। एवं दक्षिणे सन्धौ यज्ञस्य त्वेति मन्त्रेण। तथैव पश्चिमे सन्धौ अन्नं च त्वेति। तद्वदुत्तरे सन्धौ ऊर्क्चत्वेति॥ **निष्क्रम्य दिश उपतिष्ठते** ॥ एवं शालायाः पूर्वादिसन्धीनभिमृश्य बहिर्निष्क्रम्य दिशः प्राचीप्रमुखाश्चतस्रः केता च मा सुकेता चेत्यादिभिश्चतुर्भिर्मन्त्रैः प्रदक्षिणक्रमेण प्रतिमन्त्रमुपतिष्ठते स्तौति ॥ **निष्ठितां प्रपद्यते धर्मस्थूणेति** ॥ निष्ठितां निर्मितां सम्पूर्णामिति यावत् । प्रपद्यते प्रविशति धर्मस्थूणेत्यादिसन्तु सर्वत इत्यन्तेन मन्त्रेण ॥ ततो

ब्राह्मणभोजनम् । इति सूत्रार्थः । अथ प्रयोगः । अथ शालाकर्मोच्यते । तत्र पुण्याहे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा पूर्णाहुतिवदाज्यं संस्कृत्य स्तम्भस्थानावटेषु चतुर्षु प्रत्यवटमाग्नेयकोणादारभ्य अच्युताय भौमाय स्वाहेत्यनेन मन्त्रेणैकैकामाज्याहुतिं जुहुयात् । इदमच्युताय भौमायेति प्रत्याहुति त्यागः । अथ होमक्रमेणावटेषु तूष्णीं शिलाः स्थापयित्वा तदुपरि "इमामुच्छ्रयामि भुवनस्य नाभिं वसोर्द्धारां प्रतरणीं वसूनाम् । इहैव ध्रुवां निमिनोमि शालां क्षेमे तिष्ठतु घृतमुक्षमाणा । अश्वावती गोमती सूनृतावत्युच्छ्रयस्व महते सौभगाय । आत्वा शिशुराक्रन्दत्वा गावो धेनवो वाश्यमानाः । आत्वा कुमारस्तरुण आवत्सो जगदैः सह । आत्वा परिस्रुतः कुम्भ आदध्नः कलशैरुप । क्षेमस्य पत्नी बृहती सुवासा रयिन्नो धेहि सुभगे सुवीर्यम् । अश्वावद्गोमदूर्जस्वत्पर्णं वनस्पतेरिव । अभिनः पूर्यताᳬं रयिरिदमनुश्रेयो वसान" इत्यनेन मन्त्रेण होमक्रमेणैव चतुर्षु अवटेषु चतुरः स्तम्भानुच्छ्रयति मिनोति । स्तम्भाभावेऽनेनैव मन्त्रेण प्रत्यवटं शिलां स्थापयेत् । अर्द्धनिष्पन्नायां शालायां तन्मध्यप्रदेशे पञ्चभूसंस्कारपूर्वकमावसथ्याग्निं स्थापयित्वा ब्रह्माणमुपवेश्याग्नेरुत्तरत उदपात्रम्प्रतिष्ठाप्य प्रणीताप्रणयनं विधाय कुशकण्डिकापूर्वकं चरुं श्रपयित्वा प्रोक्षण्युत्पवनान्ते बहिर्निष्क्रम्य द्वारसमीपे गृहाभिमुखं स्थित्वा ब्रह्मन्प्रविशामीति ब्रह्माणमामन्त्र्य प्रविशस्वेति ब्रह्मणानुज्ञात ऋतं प्रपद्ये शिवं प्रपद्य इति मन्त्रेण शालां प्रविशेत् । अथ स्वासने उपविश्य उपयमनकुशानादाय समिदाधानपर्युक्षणानि कृत्वा इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहेत्येकामाज्याहुतिं जुहुयात्, इदमग्नय इति त्यागं विधाय, उपसृजं धरुणं मात्रे धरुणो मातरं धयन् । रायस्पोषमस्मासु दीधरत्स्वाहेति मन्त्रेण द्वितीयामाज्याहुतिं जुहोति, इदमग्नय इति त्यक्त्वा अपराश्चतस्र आज्याहुतीर्जुहोति । वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः । यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे स्वाहेत्येकाम् इदं वास्तोष्पतये० । वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति तन्नो जुषस्व स्वाहेति द्वितीयाम् इदं वास्तोष्पतये० । वास्तोष्पते शग्मया सᳬंसदा ते सक्षीमहि रण्वया गातुमत्या । पाहि क्षेम उतयोगे वरन्नो यूयं पात स्वस्तिभिः सदा नः स्वाहेति तृतीयाम् इदं वास्तोष्पतये० । अमीवहा वास्तोष्पते विश्वारूपाण्याविशन् । सखा सुशेव एधि नः स्वाहेत्यनेन चतुर्थीं जुहुयात् इदं वास्तोष्पतय इति चतसृषु त्यागः । तत आघारावाज्यभागौ हुत्वा चरुणा अग्निमिन्द्रमित्यादिभिः

षड्भिर्मन्त्रैः षडाहुतीर्जुहुयात्। तद्यथा। अग्निमिन्द्रं बृहस्पतिं विश्वान्देवानुपह्वये। सरस्वतीं च वाजीञ्च वास्तु मे दत्त वाजिनः स्वाहेति प्रथमा। इदमग्नये इन्द्राय बृहस्पतये विश्वेभ्यो देवेभ्यः सरस्वत्यै वाज्यै च०। सर्पदेवजनान् सर्वान् हिमवन्तꣳ सुदर्शनम्। वसूꣳश्च रुद्रानादित्यानीशानं जगदैः सह। एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहेति द्वितीयाम्। इदं सर्पदेवजनेभ्यो हिमवते सुदर्शनाय वसुभ्यो रुद्रेभ्य आदित्येभ्य ईशानाय जगदेभ्यश्च०। पूर्वाह्णमपराह्णं चोभौ मध्यन्दिना सह। प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथाम्। एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहेति तृतीयाम्। इदं पूर्वाह्णायापराह्णाय मध्यन्दिनाय प्रदोषायार्द्धरात्राय व्युष्टायै देव्यै महापथायै च०। कर्तारं च विकर्तारं विश्वकर्माणमोषधीश्च वनस्पतीन्। एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहेति चतुर्थीम्। इदं कर्त्रे विकर्त्रे विश्वकर्मणे ओषधिभ्यो वनस्पतिभ्यश्च०। धातारं च विधातारं निधीनां च पतिꣳ सह। एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहेति पञ्चमीम्। इदं धात्रे विधात्रे निधीनां पतये च०। स्योनꣳ शिवमिदं वास्तु मे दत्तं ब्रह्मप्रजापती। सर्वाश्चदेवताः स्वाहेति षष्ठीम्। इदं ब्रह्मणे प्रजापतये सर्वाभ्यो देवताभ्यश्च०। ततः स्थालीपाकेन स्विष्टकृतं हुत्वा महाव्याहृत्यादिप्राजापत्यान्ता नवाहुतीर्हुत्वा संस्रवान् प्राश्य ब्रह्मणे दक्षिणान्दत्वा कांस्यपात्रेऽनुपहते सक्षीराण्यौदुम्बरपर्णानि दूर्वागोमयदधिमधुघृतकुशयवांश्च सम्भारान्कृत्वा आसनानि नागदन्तस्थानानि उपस्थानानि च देवतास्थानानि प्रोक्षेत् तैः पत्रादिसम्भारैः। अथ पूर्वे सन्धौ, श्रीश्च त्वा यशश्च पूर्वे सन्धौ गोपायेतामिति मन्त्रेणाभिमर्शनं करोति। ततो दक्षिणे सन्धौ, यज्ञस्य त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेतामिति। अथानन्तरं पश्चिमे सन्धौ, अन्नं च त्वा ब्राह्मणश्च पश्चिमे सन्धौ गोपायेतामिति। अथोत्तरे सन्धौ, ऊर्क्च त्वा सूनृता चोत्तरे सन्धौ गोपायेतामिति। अथ गृहान्निष्क्रम्य वक्ष्यमाणमन्त्रैर्यथालिङ्गं दिश उपतिष्ठते। केता च मा सुकेता च पुरस्ताद्गोपायेतामित्यग्निर्वै केतादित्यः सुकेता तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पुरस्ताद्गोपायेतामिति मन्त्रेण प्राचीन्दिशमुपस्थाय, अथ दक्षिणतः, गोपायमानं च मा रक्षमाणा च दक्षिणतोगोपायेतामित्यहर्वै गोपायमानꣳरात्री रक्षमाणा ते प्रपद्ये ताभ्यां नमोऽस्तु ते मा दक्षिणतो गोपायेतामिति दक्षिणां दिशमुपस्थाय, अथ पश्चाद्दीदिविश्च मा जागृविश्च पश्चाद्गोपायेतामित्यन्नं वै दीदिविः प्राणो जागृविस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पश्चाद्गोपायेतामिति मन्त्रेण पश्चि-

मामुपस्थाय, अथोत्तरतः, अस्वप्नश्च मानवद्राणश्चोत्तरतो गोपायेतामिति चन्द्रमा वा अस्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मोत्तरतो गोपायेतामिति मन्त्रेणोत्तरामुपतिष्ठते। ततः समाप्तायां शालायां ज्योतिर्विदुपदिष्टे पुण्येऽहनि "प्रवेशे नववेश्मन" इतिवचनान्मातृपूजाभ्युदयिकश्राद्धे विधाय ब्राह्मणैः कृतस्वस्त्ययनो मङ्गलतूर्यगीतशान्तिपाठेन सजलकलशब्राह्मणपुरःसरः शुक्लमाल्यानुलेपनस्तादृशसकलपुत्रपौत्रकलत्रादिसमेतः सुशकुनसूचिताभ्युदयस्तोरणाढ्यां शालां द्वारेण प्रविशति। धर्मस्थूणाराजꣳश्रीस्तूपमहोरात्रे द्वारफलके इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह प्रजया पशुभिः सह । यन्मे किञ्चिदस्त्युपहूतः सर्वगणसखायसाधुसंवृतः तां त्वा शालेऽरिष्टवीरा गृहान्नः सन्तु सर्वत इत्यनेन प्रविशेत् । ततो ब्राह्मणभोजनम् ॥ इति शालाकर्म ॥ ४ ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ अथातो मणिकावधानम् ॥ १ ॥ उत्तरपूर्वस्यां दिशि यूपवदवटं खात्वा कुशानास्तीर्याक्षतानरिष्टकाँ(सुमनसः कपर्द्दिकान्)श्चान्यांनि चाभिमङ्गलानि तस्मिन् मिनोति, मणिकꣳसमुद्रोऽसीति ॥ २ ॥ अप आसिञ्चति । आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च । रायश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद्गृणते वयोधादिति ॥ ३ ॥ आपो हिष्ठेति च तिसृभिः ॥ ४ ॥ ततो ब्राह्मणभोजनम् ॥ ५ ॥ ॥ ५ ॥

कर्कः ॥ अथातो मणिकावधानं । व्याख्यास्यत इति शेषः । मणिकशब्देनालिञ्जरोऽभिधीयते तस्यावस्थानं स्थापनम् ॥ उत्तरपूर्वस्यान्दिशि यूपवदवटं खात्वा तस्मिन्कुशानास्तीर्याक्षतानरिष्टकाँश्चान्यानि चाभिमङ्गलानि तस्मिन्मिनोति मणिकꣳ समुद्रोऽसीति ॥ शालायामेवोत्तरपूर्वस्यां दिशि यूपवदवटं खात्वा तस्मिन्कुशानास्तीर्य अक्षतानरिष्टकांश्चान्यानि चाभिमङ्गलानि ऋद्धिवृद्ध्यादीनि तस्मिन्मिनोति मणिकं समुद्रोऽसीत्यनेन मन्त्रेण शम्भूरित्येवमन्त्तेन । एवमन्तता कथं ज्ञायते । वक्ष्यति ह्युपरिष्टान्मयोभूरित्यनुवाकशेषेणेति । अप आसिञ्चत्यापो रेवतीः ॥ इत्यनेन मन्त्रेण । आपोहिष्ठेति च तिसृभिः । अप आसिञ्चति । ततो ब्राह्मणभोजनम् ॥ ५ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ अथ मणिकस्य अलिञ्जरस्यावधानं स्थापनम् । वक्ष्यत इति सूत्रशेषः । अग्नेरुत्तरपूर्वस्यामीशान्यान्दिशि । यूपवदिति देवस्यत्वेत्यभ्यादानम् । आददे नारीत्यवटखननम् । तत्र कुशास्तरणम् । अक्षतादीनाञ्च प्रक्षेपः । तत्र मङ्गलानि ऋद्धिवृद्ध्यादीनि । तस्मिन्नवटे मणिकम्मिनोति स्थापयति । समुद्रोऽसीत्यादिना शम्भूरित्यन्तेन मन्त्रेण ।' एतदन्तता मयोभूरित्यनुवाकशेषेणेति वक्ष्यमाणत्वात् । आपोरेवतीरिति मन्त्रेण आपोहिष्ठेत्यादितिसृभिश्चापस्तत्रासिञ्चति प्रक्षिपति । तस्यार्थः । आपो रेवतीरिति परमेष्ठी त्रिष्टुप् आपो ऽपामासेचने० । हे आपः यूयं रेवतीः धनवत्यः हि यस्मात् इत्थं वस्वः वसुनो धनस्य क्षयथा निवास भूताः स्थ भवथ । किञ्च भद्रं श्रेष्ठं क्रतुं यज्ञं विभृथ धारयथ । अमृतं रसं ब्रह्म वा फलं वा बिभृथ धारयथ । किञ्च रायो धनस्य स्वपत्यस्य शोभनापत्यस्य पत्नीः स्वामिन्यो यूयम् तद्दातुं समर्था इत्यर्थः । तत् युष्मत्स्वरूपं गृणते स्तुवते सरस्वती देवी वय आयुरधात् दधातु ददात्वित्यर्थः ॥ ॥ ५ ॥

हरिहरः ॥ अथातो मणिकावधानम् ॥ अथ शालाकर्मानन्तरं यतः शालायां मणिकेन भवितव्यमतो मणिकावधानं वक्ष्यत इति सूत्रशेषः ॥ उत्तरपूर्वस्यान्दिशि यूपवदवटं खात्वा कुशानास्तीर्याक्षतानरिष्टकाँश्चान्यानिचाभिमङ्गलानि च तस्मिन्मिनोति मणिकꣳसमुद्रोऽसीति ॥ तत्र शालाया उत्तरपूर्वस्यामैशान्यान्दिशि यूपवत् अस्यादानपरिलेखनपूर्वकमवटं मणिकबुध्नावस्थानपर्यन्तङ्गर्त्तं खात्वा निखाय ततः प्राचः पांसूनपोह्यावटस्योपरि प्रागग्रान् दीर्घान् कुशानास्तीर्य स्तृत्वा अक्षतान्यवान् अरिष्टकफलानि अन्यानि च सुमङ्गलानि ऋद्धिवृद्धिसिद्धार्थकादीनि तान्यथास्तीर्य आेप्य चकारः समुच्चयार्थः । तस्मिन्नवटे मणिकं उदकधानीं मिनोति स्थापयति "समुद्रोसि नभस्वानार्द्रदानुः शम्भूरित्येतावता मन्त्रेण ॥ अप आसिञ्चत्यापो रेवतीरिति ॥ तस्मिन्मणिके अप अशूद्राहृतनद्याद्युदकमासिञ्चति प्रक्षिपति आपोरेवतीरितिमन्त्रेण ॥ आपोहिष्ठेति च तिसृभिः ॥ आपोहिष्ठा मयोभुव इत्यादिभिस्तिसृभिर्ऋग्भिः पुनर्मणिके सकृदप आसिञ्चति । ततो ब्राह्मणभोजनम् । इतिसूत्रार्थः । अथ पद्धतिः । ततो मणिकावधाननिमित्तमातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अग्नेरीशानप्रदेशे "देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नार्यसि"इति मन्त्रेणाभ्रिमादाय "इदमहꣳरक्षसां ग्रीवा अपि कृन्तामीत्यवटं भाण्डानुमानं परिलिख्य

उदकं स्पृष्ट्वा गर्त्तं खात्वा प्राचः पांसूनपास्य कुशानास्तीर्य अक्षतानरिष्टकान् ऋद्धिवृद्धिहरिद्रादूर्वासितसर्षपादिमङ्गलद्रव्यं निक्षिप्य तदुपरि समुद्रोऽसि नभस्वानार्द्रदानुः शम्भूरित्येतावता मन्त्रेण मणिकमवटे निधाय तत " आपोरेवतीः क्षयथाहिवस्वः क्रतुं च भद्रं बिभृथामृतं च । रायश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद्गृणते वयोधादित्यनेन मन्त्रेण । तथा आपो हिष्ठामयो भुव इत्यादितृचेन च सकृन्मणिके अप आसिञ्चति । ततो ब्राह्मणमेकं भोजयेत् । इति मणिकावधानम् ॥

मूलम् ॥ अथातः शीर्षरोगभेषजम् ॥ १ ॥ पाणी प्रक्षाल्य भ्रुवौ विमार्ष्टि । चक्षुर्भ्याᳬश्रोत्राभ्यां गोदानाच्छुबुकादधि । यक्ष्मᳬ शीर्षण्यᳬरराटाद्विवृहामीममिति ॥ अर्द्धं चेदवभेदकविरूपाक्ष श्वेतपक्ष महायशः । अथो चित्रपक्ष शिरो मास्याभितापीदिति ॥ ३ ॥ क्षेम्यो ह्येव भवति ॥ ४ ॥ ॥ ६ ॥

कर्कः ॥ अथातः शीर्षरोगभेषजम् ॥ व्याख्यास्यते ॥ पाणी प्रक्षाल्य भ्रुवौ विमार्ष्टि ॥ पाणिभ्यामेव चक्षुर्भ्यामित्यनेन मन्त्रेण । अर्द्धञ्चेत् शीर्षरोगेण गृह्यते । अवभेद इत्यनेन मन्त्रेण भ्रुवि मार्जनम् ॥ एवंच कृते क्षेम्य एव भवति ॥ ॥ * ॥

जयरामः ॥ अथातः शिरोरोगस्य भेषजन्निवर्तकम् वक्ष्यत इति सूत्रशेषः । प्रक्षालिताभ्याम्पाणिभ्यां सव्यासव्याभ्यां भ्रुवोः सव्यासव्ययोर्यथाक्रमं मार्जनं युगपत् चक्षुर्भ्यामिति मन्त्रेण । तस्यार्थः । तत्र परमेष्ठी अनुष्टुप् वायुरपाकरणे० । चक्षुराद्यङ्गेभ्यः अधि सकाशादिमं यक्ष्मं रोगविशेषम् शीर्षणि भवं शीर्षण्यं विवृहामि पृथक्करोमि निराकरोमीत्यर्थः । तत्र गोदानं शिरोदेशः । शुबुकं चिबुकम् । रराटं ललाटम् । अर्द्धञ्चेच्छीर्षं रोगेण गृह्यते तदापि पाणी प्रक्षाल्य पीडितभ्रूपार्श्ववर्तिना हस्तेन तद्भ्रूमार्जनम् अवभेदकेति मन्त्रेण । तस्यार्थः तत्र प्रजापतिरनुष्टुप् विरूपाक्षः अपाकरणे० । अव अवाचीनङ्कृत्वाऽङ्गम्भेदयति विदारयति इति हे अवभेदक विरूपे विकृते अक्षिणी यस्मादिति हे विरूपाक्ष । श्वेतपक्षेत्यादीन्यन्वर्थसम्बोधनानि । भो एवम्भूत शिरोरोग अस्य रोगिणः शिरः मा तापसीत् । त्वत्प्रसादात् तापयुक्तम्माभूत् । यद्वा भवानस्य शिरो मा सन्तापयत्विति । इत्येवङ्कृते हि निश्चितं क्षेम्यः क्षेमार्होऽयम्भवति । एतेनार्द्धशीर्षरोगस्वरूपम्प्रतिपादितम् ॥ ॥ ६ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ अथातः शीर्षरोगभेषजम् ॥ अथ मणिकावधानानन्तरं यतः शिरोरोगवान् किञ्चित्कर्म कर्तुं न शक्नोति अतो हेतोः शीर्षणि मूर्द्धनि रोगस्तस्य भेषजम्प्रतीकारः वक्ष्यत इति सूत्रशेषः ॥ पाणी प्रक्षाल्य भ्रुवौ विमार्ष्टि चक्षुर्भ्यांश्रोत्राभ्यां गोदानाच्छुबुकादधि । यक्ष्मᳫंशीर्षण्यᳫंरराटाद्विवृहामीममिति ॥ यदि स्वस्य परस्य वा पीडा भवति तत्र पाणी स्वकीयौ हस्तौ प्रक्षाल्य अद्भिरवनेज्य भ्रुवौ युगपत् ताभ्यां पाणिभ्यां विमार्ष्टि प्रोञ्छति । अन्यस्य वा स्वयं करोति चक्षुर्भ्यामित्यादि विवृहामीममित्यन्तेन मन्त्रेण ॥ अर्द्धञ्चेदवभेदक विरूपाक्ष श्वेतपक्ष महायशः । अथो चित्रपक्ष शिरो मास्याभिताप्सीदिति ॥ अर्द्धञ्चेत् शीर्षं व्यथते तदा पूर्ववत्पाणी प्रक्षाल्य दक्षिणेन पाणिना यदि शिरसो दक्षिणभागे रुक् तर्हि दक्षिणाम् वामे वामाम् अवभेदकेत्यादिना मास्याभिताप्सीदित्यन्तेन मन्त्रेणैकां भ्रुवं विमार्ष्टि ॥ क्षेम्यो ह्येव भवति ॥ हि ततः क्षेम्यः शिरोरोगरहित एवासौ भवतीति ॥ ॥ ६ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ उतूलपरिमेहः ॥ १ ॥ स्वपतो जीवविषाणे स्वं मूत्रमासिच्याप*सलवि त्रिः परिषिञ्चन्परीयात् । परि त्वा गिरेरहं परिमातुः परिस्वसुः परिपित्रोश्च भ्रात्रोश्च सख्येभ्यो विसृजाम्यहम् । उतूल परिमीढोऽसि परिमीढः क्व गमिष्यसीति ॥ २ ॥ स यदि भ्रम्याद्द्वावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयात् । परि त्वा ह्वलनो ह्वलनिवृत्तेन्द्रवीरुधः ॥ इन्द्रपाशेन सित्वा मह्यं मुक्त्वाऽथान्यमानयेदिति ॥ ३ ॥ क्षेम्यो ह्येव भवति ॥ ॥ ४ ॥ ॥ १ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

कर्कः ॥ उतूलपरिमेहः ॥ उतूलो दास उच्यते । तस्य भ्रमणशीलस्य वशीकरणाय परिमेहः परिषेकः क्रियते ॥ स्वपतो जीवविषाणे स्वं मूत्रमासिच्यापसलमेव त्रिः परिषिञ्चन् परीयादिति परि त्वागिरेरहं० । इत्यनेन मन्त्रेण ॥ स्वपतो दासस्य जीवतः पशोर्विषाणे स्वम्मूत्रमासिच्यापसव्यन्तमेव त्रिः परिषिञ्चन्परीयात् परित्वा गिरेरित्यनेन मन्त्रेण ॥ स यदि भ्रम्याद्द्वावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयात् ॥ स यदि पुनर्भ्रम्यादेव ततो

* अपसलमेवेति पाठान्तरम् ।

दावाग्निमुपसमाधाय आगन्तुकत्वाच्चतुर्दशाहुतिकान्ते घृताक्तानि कुशेण्ड्वानि जुहुयात् परित्वाह्वलनो ह्वलमित्यनेन मन्त्रेण। एवं कृते सौम्य एव भवति ॥ ० ॥ * ॥

जयरामः ॥ उतूलो विवशो दासः तस्य परिमेहो वशीकरणायाभिषेकः । वक्ष्यतइति सूत्रशेषः । स्वपतो दासस्योपचारः । जीवतः पशोर्विषाणे शृङ्गे स्वम्मूत्रमासिच्य तेनैव दासम् अपसलवि अप्रदक्षिणम्परिषिञ्चन् त्रिवारम्परीयात्परिभ्रमेत् "परित्वेति मन्त्रेण । तस्यार्थः । तत्र प्रजापतिरनुष्टुप् वायुः सेचने० । भो उतूल त्वा त्वां गिरेः पर्वतादपि परि आकृष्य विशिष्टतया सृजामि मय्यनुरक्तङ्करोमि मात्रादिभ्यश्च । तत्र भगिनीभ्रात्रोर्मातापित्रोश्चेति षष्ठ्यौ पञ्चम्यर्थे। परिशब्दावृत्तिर्मन्त्रशक्तिदार्ढ्याय, सखिभ्यः सखिभावमापन्नेभ्योऽपि । परिमीढः मन्त्रशक्त्या सेचनरूपैः पाशैर्बद्ध इत्यर्थः । शिष्टं स्पष्टम् । एवम्परिमीढोऽपि। पुनर्यदि भ्रम्यात्तदोपायान्तरमाह । दावाग्निमुपस्थाप्य । आगन्तुत्वाच्चतुर्दशाहुत्यन्ते घृताक्तानि कुशेण्ड्वानि कुशकुण्डलानि त्रीणि जुहुयात् "परित्वाह्वलनइतिमन्त्रेण । तस्यार्थः । तत्र परमेष्ठी अनुष्टुप् इन्द्रो होमे० । भोह्वल चञ्चल इन्द्रस्य ईश्वरस्य वीरुधः पाशात् सेवकः स्वामिभक्तः स्यादित्येवंरूपात् परि समन्ततो निर्वृत्त निर्गत्य स्थितः, अथ अतः त्वा त्वां ह्वलनो ज्वलनो ऽयमग्निरिन्द्रपाशेन तेनैव सित्वा बध्वा अन्यं तव मनसि स्थितम् अनर्थकारिभूतविशेषम्मुक्त्वा मोचयित्वा मह्यं मामाश्रयितुम् आनयेत् आनयतु । मदायत्तङ्करोत्वित्यर्थः । यद्वा ह्वलनिर्वायुः । वृत्ता वर्त्तिता रक्षिता इन्द्रवीरुधो वेदा येन सः । स शब्दस्य वाय्वात्मकत्वात् एवम्भूतो वायुश्चेति योज्यम् । तत्पक्षे त्वेति दासविशेषणमुपक्रान्तत्वात् । शेषं समानम् ॥ ॥ ० ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ उतूलपरिमेहः ॥ उतूलस्य दुर्विनीतस्य दासस्य परिसमन्तात् मेहः सेचनं वशीकरणाभिषेक इति यावत्, कर्म्म कथ्यते । तद्यथा ॥ स्वपतो जीवविषाणे स्वम्मूत्रमासिच्यापसलवि त्रिः परिषिञ्चन्परीयात् परि त्वा गिरेरहं परिमातुः परिस्वसुः परिपित्रोश्च भ्रात्रोश्च सखिभ्यो विसृजाम्यहम् । उतूल परिमीढोऽसि परिमीढः क्व गमिष्यसीति ॥ यदा स दासः स्वपिति तदा गवादेः पशोः जीवतो विषाणे शृङ्गे स्वम्मूत्रमासिच्य सिक्त्वा तस्य स्वपतो दासस्य अपसलवि अप्रादक्षिण्येन विषाणस्थं मूत्रम्परि समन्तात्सिञ्चन् उक्षन् त्रिः त्रीन् वारान् परीयात् परिभ्रमेत् परित्वा गिरेरित्यादि क्वगमिष्यसीत्यन्तेन मन्त्रेण॥ स यदि

भ्रम्याद्दावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयात् परित्वा ह्वलनो ह्वलनिर्वृत्तेन्द्रवीरुधः । इन्द्रपाशेन सित्वा मह्यमुक्ताऽथान्यमानयेदिति ॥ स दासो यदि अस्मिन्कर्मणि कृतेऽपि भ्रम्यात् स्वेच्छया विचरेत् तदा तद्वश्यार्थमिदं कर्मान्तरं कुर्यात् । तद्यथा । पञ्चभूसंस्कारपूर्वकं दावाग्निं वनदहनं स्थापयित्वा ब्रह्मोपवेशनादिपर्युक्षणान्ते आघारावाज्यभागौ महाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यस्विष्टकृदन्ताश्चतुर्दशाहुतीर्हुत्वा कुशेण्ड्वानि कुशानामिण्ड्वानि कुण्डलाकाराणि घृताक्तानि त्रीणि परित्वेत्यादि अथान्यमानयेदित्यन्तेन मन्त्रेण सकृदेव जुहुयात् । इदमिन्द्रायेति त्यागः । ततः संस्रवप्राशनादि ब्रह्मणे दक्षिणादानान्तं कर्म कुर्यात् । क्षेम्यो ह्येव भवति ॥ अस्मिन्कर्मणि कृते हि स्फुटं क्षेम्यः वश्य एव दासो भवति सम्पद्यते ॥ इत्युतूलदासवश्यकर्म ॥ ७ ॥ * ॥ ॥ * ॥

मूलम् ॥ शूलगवः ॥ १ ॥ स्वर्ग्यः पशव्यः पुत्र्यो धन्यो यशस्य आयुष्यः ॥ २ ॥ औपासनमरण्यꣳहृत्वा वितानꣳ साधयित्वा रौद्रम्पशुमालभेत ॥ ३ ॥ साण्डम् ॥ ४ ॥ गौर्वा शब्दात् ॥ ५ ॥ वपाꣳश्रपयित्वा स्थालीपाकमवदानानि च रुद्राय वपामन्तरिक्षाय वसाꣳस्थालीपाकमिश्राण्यवदानानि जुहोत्यग्नये रुद्राय शर्वाय पशुपतये उग्रायाशनये भवाय महादेवायेशानायेति च ॥ ६ ॥ वनस्पतिस्विष्टकृदन्ते ॥ ७ ॥ ८ ॥ दिग्व्याघारणम् ॥ ९ ॥ व्याघारणान्ते पत्नीः संयाजयन्तीन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्या अग्निं गृहपतिमिति ॥ १० ॥ लोहितं पालाशेषु कूर्चेषु रुद्रायसेनाभ्यो बलिꣳहरति यास्ते रुद्र पुरस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्र दक्षिणतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्र पश्चात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्रोत्तरतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्रोपरिष्टात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्राधस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नम इति ॥ ११ ॥ ऊवध्यं लोहितलिप्तमग्नौ प्रास्यत्यधो वा निखनति ॥ १२ ॥ अनुवातं पशुमव-

स्थाप्य रुद्रैरुपतिष्ठते प्रथमोत्तमाभ्यां वाऽनुवाकाभ्याम् ॥ १३ ॥ नैतस्य पशोर्ग्राममᳲ हरति ॥ १४ ॥ एतेनैव गोयज्ञो व्याख्यातः ॥ १५ ॥ पायसेनानर्थलुप्तः ॥ १६ ॥ तस्य तुल्यवया गौर्दक्षिणा ॥ ॥ १७ ॥ ८ ॥ * ॥ ॥ * ॥ ॥ * ॥

कर्कः ॥ शूलगवः स्वर्ग्यः पशव्यः पुत्र्यो धन्यो यशस्य आयुष्यः ॥ शूलगवाख्यङ्कर्म स्वर्गादिभिः कामैः पर्यायेण सम्बध्यते, नहि युगपत्सर्वकामानामुत्पत्तिसम्भवः । तत्कर्माभिधानायाह ॥ औपासनमग्निमरण्यᳲ हृत्वा वितानᳲसाधयित्वा रौद्रं पशुमालभेत साण्डम् ॥ औपासनमग्निमरण्यं नीत्वा विहरणं कृत्वा रुद्रदेवत्यं पशुमालभेत साण्डम् ॥ साण्डशब्देनानपुंसक उच्यते तस्य चान्वयाच्छागपरिहरणप्राप्तौ । गौर्वाशब्दादित्याह । गौरेव स्यान्न छागः । कुत एतत् । शूलगव इति शब्दादेव । वपाᳲश्रपयित्वा स्थालीपाकमवदानानि च । विहृतश्रपणपरिप्राप्तौ सत्यां सहश्रपणार्थोऽयमारम्भः । विहृतं श्रपणं कथमिति चेत्प्रोक्षणोदकपरिप्राप्त्याज्यासादनोत्तरकालमन्येषां पशूनां शाखानिखननं हि प्राप्तम् ॥ उत्तराघारान्ते च पशुसमञ्जनादिवपादीनां विहृतमेव श्रपणं प्राप्तम् अतो वचनात्सहश्रपणमुच्यते । रुद्राय वपामन्तरिक्षाय वसां । जुहोतीति शेषः । स्थालीपाकमिश्राण्यवदानानि जुहोत्यग्नये रुद्राय शर्वाय पशुपतय उग्रायाशनये भवाय महादेवायेशानाय । इत्येभिर्मन्त्रैः । ततो वनस्पतिहोमः, स च यथादृष्टः पृषदाज्येन । स्विष्टकृदन्ते दिग्व्याघारणं । कर्तव्यमिति शेषः । तच्च वसया, यथा अग्नीषोमीये दृष्टम् । व्याघारणान्ते पत्नीः संयाजयन्तीन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्या अग्निं गृहपतिं । एत एव मन्त्राः । अपराग्नौ पत्नीसंयाजहोमः । तथैव दृष्टत्वात् । ततो महाव्याहृत्यादि । लोहितं पालाशेषु कूर्चेषु रुद्राय सेनाभ्यो बलिᳲहरति । यास्ते रुद्र पुरस्तात्सेना० । इत्येवमादिभिर्मन्त्रैः । ऊवध्यं लोहितलिप्तमग्नौ प्रास्यत्यधो वा निखनति । अनुवातं पशुमवस्थाप्य रुद्रैरुपतिष्ठते । अनुवातमिति न प्रतिवातम् । प्रथमोत्तमाभ्यां वाऽनुवाकाभ्याम् । उपतिष्ठते । वाशब्दो विकल्पार्थः । नैतस्य पशोर्ग्राममᳲहरन्ति । मांसमिति । एतेनैव गोयज्ञो व्याख्यातः । पायसेन । असौ भवति । अनर्थलुप्तः । पायसमात्रसाधकत्वे पाशुको योऽर्थस्तेनालुप्तो भवति । एतदुक्तम्भवति । पायसेन देवतामात्रेज्येति । तस्य तुल्यवया गौर्दक्षिणा ॥ ८ ॥ * ॥

जयरामः ॥ शूलगव इति कर्मनामधेयम् । स्वर्ग्य इति स्वर्गादिकामैः पर्यायेण सम्बध्यते । न हि युगपत्सर्वकामोत्पत्तिसम्भवः । वक्ष्यत इति सूत्रशेषः । औपासनम् आवसथ्याग्निम् अरण्यन्नीत्वा तत्र वितानं साधयित्वा आवसथ्याग्नेराहवनीयदक्षिणाग्न्योरुद्धरणङ्कृत्वा रुद्रदेवत्यम्पशुं साण्डमनपुंसकमालभेत । तस्य चान्वयाच्छागस्य प्राप्तौ गौर्वा । वा शब्द एवार्थे । गौरेव न छागः । कुतः । शब्दाच्छूलगव इति वचनात् । वपां श्रपयित्वेति विहृतश्रपणे प्राप्ते सहश्रपणार्थो ऽयमारम्भः । विहृतश्रपणङ्कथमिति चेत् । चोदकपरिप्राप्त्या ऽऽज्यासादनोत्तरकालमन्येषाम् पशूनां शाखानिखननम्प्राप्तम् उत्तराघारान्ते च पशुसमञ्जनादि । वपादीनां विहृते शामित्राग्नावदानानाम् वपायाश्चाहवनीय एवश्रपणम्प्राप्तम् । अतोऽत्र वचनात्सहश्रपणमुच्यते । रुद्रायेत्यादौ जुहोतीति शेषः । अवदानानि चरुमिश्राण्यग्न्यादीशानान्तेभ्यो जुहोत्येभिरेव नाममन्त्रैः । ततो वनस्पतिहोमः पृषदाज्येन तेनैव दृष्टत्वात् । ततो वनस्पतिहोमः पृषदाज्येन । ततः स्विष्टकृते हुत्वा दिशां व्याघारणम् कर्तव्यमिति सूत्रशेषः । तच्च वसया भवति । यथाऽग्नीषोमीये । पत्नीसंयाजा अप्येतैर्नाममन्त्रैरपराग्नौ । तत्र दृष्टत्वात् । ततः प्राशनान्ते शुना तुल्यवयस्कं गान्दत्वा लोहितम्पशो रक्तं पालाशेषु पलाशपत्रेषु कूर्चेषु च कुशासनेषु बलित्वेन ददाति यास्तेरुद्रेत्यादिषड्भिर्मन्त्रैः प्रतिमन्त्रम् । तदर्थः सुगमः । ते तुभ्यञ्चेति योज्यम् । तत्र षसाम्परमेष्ठी यजुः रुद्रो बलिहरणे० । ऊवध्यं पुरीषाधानम् पोटीतिप्रसिद्धम् आहवनीये प्रक्षिपति अनुवातं वाताभिमुखम्पशुमवशिष्टम्पशुशरीरम् । रुद्रैः रुद्राध्यायाम्नातमन्त्रैः स्तौति । प्रथमोत्तमौ आद्यन्तौ ताभ्यां वा । पशोरत्र मांसमिति शेषः । एतेनैव विधानेन गोयज्ञकर्मविशेषः । असौ च पायसेन चरुणा अनर्थलुप्तश्च भवति । पायसेन शूलगवदेवतामात्रेज्येत्यर्थः । तस्य शूलगवपशोर्वयसा तुल्यवया गौर्दक्षिणा देया ॥ ॥ ८ ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ शूलगवः ॥ स्वर्ग्यः पशव्यः पुत्र्यो धन्यो यशस्य आयुष्यः ॥ अथ स्वर्गादिकामस्य शूलगवाख्यं कर्म यागविशेषमनुविधास्यन्नाह शूलगव इति । स च स्वर्ग्यः स्वर्गाय हितः पशव्यः पशुभ्यो हितः पुत्र्यः पुत्रेभ्यो हितः धन्यः धनाय हितः यशस्यः यशसे हितः आयुष्यः आयुषे हितः । अयमर्थः । यदा यजमानः स्वर्गपशुपुत्रधनयशआयुषामन्यतमकामो भवति तदाऽनेन शूलगवाख्येन यागेन यजेत । अनेककामानां युगपदुत्पत्त्यसम्भवात् ॥ औपासनमरण्यꣳ हृत्वा

वितानᳬसाधयित्वा रौद्रं पशुमालभेत साण्डम् ॥ औपासनमावसथ्याग्निं अरण्यमटवीन्नीत्वा तत्र वितानं त्रेताग्निविन्यासं साधयित्वा शुल्बोक्तप्रकारेण विरचय्य रौद्रं रुद्रो देवता अस्येतिरौद्रं, तं पशुं छागं आलभेत सञ्ज्ञपयति। कथम्भूतं साण्डम् अण्डाभ्यां सह वर्तत इति साण्डस्तम् अनपुंसकमित्यर्थः ॥ गौर्वा शब्दात् ॥ वाशब्दः पक्षव्यावृत्तौ। नैव छागः पशूरौद्रः अपितु साण्डो गौः, कुतः, शब्दात् शूलगव इत्येतस्माच्छब्दात् ॥ वपाᳬ श्रपयित्वा स्थालीपाकमवदानानि च रुद्राय वपामन्तरिक्षाय वसाᳬ स्थालीपाकमिश्राण्यवदानानि जुहोति ॥ अग्नये रुद्राय शर्वाय पशुपतय उग्रायाशनये भवाय महादेवायेशानायेति ॥ वपां पक्षा स्थालीपाकमवदानानि च हृदयादीनि सहैव श्रपयित्वा। ननु पशुतन्त्रे विहृत्य शामित्रेऽग्नावदानश्रपणं वपाश्रपणं चाहवनीये दृष्टम्। अत्र तन्माभूदिति सहश्रपणमुच्यते स्थालीपाकमवदानानि चेति तत्र रुद्राय वपां जुहोति अन्तरिक्षाय वसां जुहोति, अत्र जुहोतीत्युभयत्राध्याहारः। स्थालीपाकमिश्राण्यवदानानि। अवदानहोमावसरे हृदयादीन्यवदानानि स्थालीपाकेन चरुणा संयुतानि जुहोति नवकृत्वः अग्नये स्वाहेत्येवमादिभिर्नवभिर्मन्त्रैः प्रतिमन्त्रमग्नौ प्रक्षिपति। कथम्। अग्नये स्वाहा १। रुद्राय स्वाहा २। शर्वाय स्वाहा ३। पशुपतये स्वाहा ४। उग्राय स्वाहा ५। अशनये स्वाहा ६। भवाय स्वाहा ७। महादेवाय स्वाहा ८। ईशानाय स्वाहा ॥ ९ ॥ यथामन्त्रं त्यागाः ॥ वनस्पतिस्विष्टकृदन्ते दिग्व्याघारणम् ॥ वनस्पतिश्च स्विष्टकृच्च वनस्पतिस्विष्टकृतौ तयोरन्तः वनस्पतिस्विष्टकृदन्तः तस्मिन् दिशां व्याघारणम् कर्तव्यमिति सूत्रशेषः। तत्तु व्याघारणं वसयैव भवति। तत्र वनस्पतिहोमः स्विष्टकृद्धोमादर्वाक् पृषदाज्येन भवति, पशौ तथादृष्टत्वात्। स्विष्टकृद्धोमश्च सर्वावदानपक्षे त्र्यङ्गेभ्यः असर्वावदानपक्षे तेभ्य एवावशिष्टेभ्यः। अत्र सूत्रे व्याघारणमेव निबद्धम्, तत्र द्रव्यदेवतापेक्षायां सर्वपशुप्रकृतिभूताग्नीषोमीये दर्शनात् वसा द्रव्यं दिशो देवता व्याघारणधर्मतया लभ्यते। व्याघारणान्ते पत्नीः संयाजयन्तीन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्या अग्निं गृहपतिमिति। व्याघारणं दिशामभिघारणं तस्यान्ते अवसाने पत्नीः पञ्च वक्ष्यमाणाः संयाजयन्ति जाघन्या पश्वङ्गेन। कथम्; इन्द्राण्यै रुद्राण्यै इत्यादिपञ्चभिर्मन्त्रैः स्वाहाकारान्तैः प्रतिमन्त्रम्। लोहितं पालाशेषु कूर्चेषु रुद्राय सेनाभ्यो बलिᳬहरति यास्ते रुद्रेत्यादि ॥ ततो महाव्याहृत्यादि लोहितं तस्यैव पशो रुधिरं पालाशेषु पलाशपत्रेषु कूर्चेषु आसनेषु प्राक्संस्थेषु उदक्संस्थेषु वा, रुद्रायसेनाभ्यः रुद्राय देवतायै सेना रुद्राय-

उदकदानाज्ञां प्रार्थयेरन्। उदकङ्करिष्यामह इतिमन्त्रेण। पृष्टप्रतिवचनं कुरुध्वम्मा चैवम्पुनरिति। इतरः शतवर्षप्रभृतिकः तस्मिन्प्रेते कुरुध्वमित्येव प्रतिवचनम्। ज्ञातयः सपिण्डा आसप्तमात्पुरुषात् समानोदकाश्चादशमात्त सर्वएव अपो ऽभ्यवयन्ति जलम्प्रविशन्ति। समानग्रामे एकत्र वासे यावत्सम्बन्धस्स्मर्यते अमुष्मिन् वयं सम्बध्यामह इति तावन्तो ऽपो ऽभ्यवेयुः। अपनः शोशुचदघमित्यघापनोदनमन्त्रः। असावेतत्त इति मन्त्रेण जलाञ्जलिदानम्। असौ स्थाने प्रेतनामादेशः। उदकादुत्तीर्णान् सतः शाद्वलं हरिततृणम् तद्वति प्रदेशे उपविष्टानपरे लोकयात्रिका अपवदेयुः प्रेतगुणानुख्यापनेन तच्छोकमपाकुर्युः। अनवेक्षमाणाः पश्चादनवलोकयन्तः। रीतीभूताः पङ्क्तिव्यवस्थाः कनिष्ठमग्रतः कृत्वा ग्राममागच्छन्ति। निवेशनङ्गृहं तस्य द्वारि पिचुमन्दस्य निम्बस्य पत्राणि विदश्य दन्तैः खण्डयित्वा ऽऽचम्योदकादीन्यालभ्याश्मानमाक्रम्य गृहं प्रविशन्ति। त्रिरात्रं ब्रह्मचारिणो भवन्ति। अधः आस्तृतभूशायिनश्च। नच किञ्चित्कर्म स्वयङ्कुर्वन्ति, नचान्यान्प्रकुर्वन्ति कारयन्तीत्यर्थः। दिवाग्रहणन्निरात्रप्रतिषेधार्थम्। पिण्डदानञ्चावनेजनदानप्रत्यवनेजनेषु नामग्राहन्नाम गृहीत्वेत्यर्थः। भोजनञ्च पिण्डदानसमनन्तरम्। मृन्मये पात्रे तामेकां रात्रिं क्षीरोदके व्यवहिते निधाय तत्पात्रमाकाशे स्थापयेयुः प्रेतात्र स्नाहीत्येतावता मन्त्रेण। त्रिरात्रमित्यादावेकरात्रमपीच्छन्ति एके। दशाहं शावमाशौचं सपिण्डेषु विधीयते। अर्वाक् सञ्चयनादस्थ्नां त्र्यहमेकाहमेव चेति स्मृतेः। एतच्चोपनयनप्रभृति द्रष्टव्यम्। वयोवस्थाविशेषेण हि पूर्वमभिहितम्। व्यवस्थया च विकल्पो ऽयं वृत्तस्वाध्यायापेक्षः। वृत्तनिमित्तानि चाध्ययनतदर्थज्ञानानुष्ठानानि। तत्रैकगुणसंयोगे ऽर्वाक् सञ्चयनाद्दशाहमाशौचम्। गुणद्वययोगे त्र्यहम्। गुणत्रययोगे एकाहमिति। अपरे त्वेकीयशब्दात्मद्यः शौचमिच्छन्ति। यदा गुणत्रययोगो भवति वृत्तिसङ्कोचश्च त्र्याहिक ऐकाहिको वा भवति तदा सद्यः शौचमिति स्मृत्यन्तरम्। येषां यावदाशौचं ते तावत्स्वाध्यायं वेदन्न पठेयुः नच पाठयेयुः। एते चाशौचविकल्पाः प्रातिस्विकाः। नतु सूतकाशौचवत्सर्वेषां सहेति। तत्र हि "जनने ऽप्येवमेव स्यान्मातापित्रोस्तु सूतकम्। सूतकम्मातुरेव स्यादुपस्पृश्य पिता शुचिरित्यनेन दशाहस्यातिदेशो न चतुरहत्र्यहैकाहानाम्। कुत एतत्। सञ्चयनकल्पेन व्यवधानात्। अपिच। सर्वकल्पातिदेशे मातुरप्येकाहेन शुद्धिः प्राप्नोति। तच्च नेष्यते। येन बैजिकादभिसम्बन्धादनुरुन्ध्यादघन्त्र्यहमिति पितुस्त्र्यहेण शुद्धिर्मातुश्चैकाहेनेति विरोधः। कथम्। रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यत इति। तस्मादपि

दशाहस्यैवातिदेशः। शावं वाऽनपेक्ष्यैवमेव स्यादिति व्याख्येयम्। एवञ्च सति जनने ऽप्येवमेव स्यादिति सपिण्डानान्दशाहम्। मातापित्रोश्च सूतकमिति तयोश्च दशाहम्। सूतकम्मातुरेव स्यादिति मातुश्च दशाहम्। अत्र पक्षत्रये ऽपि व्यवस्था युक्तरूपा भवति। तामाह ॥ सपिण्डानान्निर्गुणत्वे दशाहम्। वृत्तवत्त्वे ऽपि पित्रोश्च दशाहम्। पितुरप्यतिवृत्तवत्त्वे मातुरेव दशाहम्भवतीति। अस्मिंश्च पक्षे बैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहमिति पितुस्त्र्यहनियम इति व्यवस्था न्याय्या। शावाशौचेऽपि दशाहादीनां व्यवस्था च न्याय्येति। यत्पुनरुक्तम् उपस्पृश्य पिता शुचिरिति तदग्निहोत्रार्थं नतु व्यवहारार्थम्। तेन सूतकाशौचे पक्षत्रयस्याश्रवणात्तत्र नैवं व्यवस्था युक्तेति। शावे पुनर्वृत्ताद्यपेक्षया प्रातिस्विकैव शुद्धिरिति। नित्यानि स्मार्तानि कर्माणि निवर्त्तेरन्। वैतानान्यग्निहोत्रादीनि वर्जयित्वा। एके आचार्याः शालाग्नौ कर्मनिवृत्तिमिच्छन्ति, एके नेति विकल्पः। यदाचानिवृत्तिस्तदाऽन्य एतानि कुर्युर्न स्वयम्। प्रेतस्पर्शिनः सपिण्डा ग्राममप्रविशेयुर्नक्षत्रदर्शनादर्वाक् दिवामरणे। रात्रौ चेत्प्रेतः स्यात्तदादित्यस्य दर्शनादर्वाक् न प्रविशेयुः। इतरैरसपिण्डैस्तुल्यं प्रवेशनादि भवति। पक्षं द्वौ पक्षौवेति प्रेतस्पर्शिनामाशौचमिति केचित्। तन्न। न हि प्रेतस्पर्शनमात्रेणैवेयन्तङ्कालमाशौचस्य युक्तत्वम्। तस्माद्वर्णान्तरविषयमेवैतत्। पक्षं वैश्यस्य। द्वौ पक्षौ शूद्रस्य। वा शब्दात् द्वादशाहानि क्षत्रियस्य। शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यतीति वचनात्। आचार्ये च प्रेते एवमेवोदकदानादि कर्म भवति। मातामहीमातामहयोश्च चकारादेवमेव। स्त्रीणाञ्चादत्तानामेवमेवेतिकर्तव्यता भवति। प्रत्तानामितरे येभ्यो दत्तास्ते कुर्वीरन्। ता अपि तेषाङ्कुर्वीरन्। अथ यदि प्रोषितः प्रेयान्म्रियेत तदा तच्छ्रवणकालप्रभृति कृतोदकाः सन्त आशौचकालशेषमाशौचविधानेनासीरन्। आशौचकालो ऽतीतश्चेदेकरात्रन्त्रिरात्रम्। वाशब्दात्सद्यःशौचमपि। अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्। संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यतीति वचनात्। एकरात्रन्तु "अयने समतिक्रान्ते त्वेकाहाच्छुद्धिरिष्यत इतिस्मृत्यन्तरात्। ऋत्विगादीनामिच्छयोदकदानम्। प्रत्तानाञ्च स्त्रीणामिच्छयैव। एकादश्यामेकादशे ऽहनि अयुग्मान् त्रिप्रभृतीन् ब्राह्मणान्भोजयेदिति श्राद्धोपलक्षणम्। तच्च श्राद्धम्मांसवत्कार्यम्। मांसञ्च प्रेतोद्देशेनैके आचार्या गां घ्नन्ति आलभन्ते. प्रेतोद्देशवचनात्तदीयम्। शाखापशुरयम्। तमालभ्य तन्मांसेन श्राद्धङ्कुर्वीत। तच्चोपरिष्टाद्वक्ष्यति नद्यन्तरे नावङ्कारयेन्नवेति। एतदेव पिण्डकरणमापतितम्। तत्र च पितॄणां प्रथमः

प्रेतो भवति तत्प्रभृति दानम् । स यदि पुत्रवान्भवति तदा अधिकृतविषयमेतत् । अधिकृतपुत्रेण पुत्रवत्वम् । एतदधिकारश्चाग्निमत्वे सति भवति । तेनाग्निमतः पुत्रस्य पार्वणमेव । तच्च सपिण्डीकरणानन्तरम् । एकोद्दिष्टन्त्वनधिकृतविषयमिति । सपिण्डीकरणे च कृते पितृप्रभृतित्रिभ्यो दानम् चतुर्थस्य तु निवृत्तिः । त्रिषु पिण्डः प्रवर्तत इति स्मृतेः । संवत्सरमेके आचार्याः पृथगेकस्यैव पिण्डदानमिच्छन्ति । कुत एतत् । यतः संवत्सरे सपिण्डीकरणं स्मर्यते, न चासपिण्डीकृतस्येतरैः सपिण्डदानं युज्यत इति । अन्वर्थसञ्ज्ञा ह्येषा यत्सपिण्डीकरणमिति । सहपिण्डक्रिया सपिण्डीकरणम् । तेन संवत्सरं यावत्पितुः प्रेतस्य पृथक् पिण्डदानमिच्छन्त्येके । एवञ्च संवत्सरसपिण्डीकरणस्मृतिरनुगृहीता भवति । एवम्प्राप्त आह न्यायस्तु । तुशब्दः पक्षव्यावृत्तौ । नैतदेवं संवत्सरं यावत्पृथग् दानमिति । येन संवत्सरस्मृत्यनुग्रहन्यायेनैतत्परिकल्प्यते तच्च विरुद्धम् । नच श्रुतिविरोधि न्यायो युक्तः । को ऽसौ विरोधः । न चतुर्थः पिण्डो भवतीति श्रुतेः । पृथक् क्रियमाणे चतुर्णाम्पिण्डनिर्वपणाधिकारो भवति । पृथक् प्रेतस्य । अमावास्यायां चाधिकृतस्य पार्वणमिति श्रुतिविरोधः । तेनाधिकृतस्य पुत्रस्यैकोद्दिष्टन्न भवत्येव । अनधिकृतस्य तु संवत्सरादूर्ध्वमेकोद्दिष्टमिति । अस्मै प्रेतायार्थं ब्राह्मणायान्नमन्वहं दद्यात्संवत्सरम् । कुम्भञ्च दद्यात् । एके आचार्याः पिण्डनिर्वपणमपीच्छन्ति । एतच्चानधिकृतविषयम् । अधिकृतस्य तु पार्वणमेव भवति नैकः पिण्ड इति । यच्च संवत्सरे सपिण्डीकरणस्मरणन्तदूर्द्ध्वं संवत्सरान्नास्त्येवेति परिज्ञापयितुम् प्रागपि भवति । सपिण्डीकरणं प्रकृत्य सूत्रकार आह । यदा वा वृद्धिरापद्यत इति । वृद्धौ ह्याभ्युदयिकङ्कार्यम् । तच्चासपिण्डीकृतस्य न भवति । अतः संवत्सरात्प्रागपि भवत्यनधिकृतस्य । तथाच स्मृत्यन्तरम् । अर्वाक् संवत्सराद्यस्य सपिण्डीकरणम्भवेत् । तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विज इति । एतदेव च तस्य भवति न पिण्डनिर्वपणमिति । त्रिभ्यो दानप्रसङ्गात् । अधिकृतपुत्रस्य तु द्वादशाह एवेत्युक्तमेव । यच्च प्रेतस्य स्मर्यते । मृते ऽहनि तु कर्तव्यम्प्रतिमासन्तु वत्सरम् । प्रतिसंवत्सरञ्चैवमाद्यमेकादशे ऽहनि इति । तदेतत्सपिण्डीकरणात्प्रागेकोद्दिष्टम् । ऊर्ध्वन्तु पार्वणमेव । तथाच मनुः । असपिण्डक्रियाकर्म द्विजातेः संस्थितस्य च । अदैवम्भोजयेच्छ्राद्धम्पिण्डमेकन्तु निर्वपेदिति । यावत्सपिण्डता न क्रियते तावदेव तत्कर्तव्यमिति । तथाचाह । सहपिण्डक्रियायान्तु कृतायामन्यधर्मतः । अनयैवावृता कार्यम्पिण्डनिर्वपणं सुतैरिति । सपिण्डक्रियोत्तरकालमनयैव पिण्डक्रियया पिण्ड-

निर्वपणं सुतैः कार्यम् । केचित्तु अधस्तनश्लोकोपात्तमावृतमनयैवावृतेत्यनेनानुवर्तयन्ति । तत्पुनरनुपपन्नार्थम् । उपरितनश्लोकारम्भसामर्थ्यात् । अनारब्धेऽपि तस्मिन्नेकोद्दिष्टं लभ्यत एव, द्विजातेः संस्थितस्य तु, अदैवमभोजयेच्छ्राद्धमित्यनेन । अधस्तनश्लोके च विशेषणार्थं वाक्यप्रसङ्गः । सहपिण्डक्रियाकर्मेति द्विजातेः संस्थितस्येत्येवमादिनैव पादत्रयेणार्थस्य सिद्धत्वात् । यत्पुनरुच्यते अत ऊर्ध्वं वर्षे वर्षे प्रेतायान्नन्दद्यात् यस्मिन्नहनि प्रेतः स्यादिति, तदेकत्वविशिष्टस्याभिधानादेकत्वविशिष्टस्य भवेति ॥ तन्न । नह्यत्रैकत्वमुपादीयमानं विशेषणम् । येन प्रेतोद्देशेन दानविधानमेव विवक्ष्यते । तस्मादविवक्षैकत्वस्य । यथा स्मृत्यन्तरेऽभिहितन्तथैव देयमिति ॥ ॥ १० ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ **अथोदककर्म** ॥ अथ पुरुषसंस्कारकर्म, क्रमप्राप्तमुदककर्म उदकेन जलेन कर्म क्रिया अञ्जलिदानमित्यर्थः । वक्ष्यत इति सूत्रशेषः । उपलक्षणमेतत् । येनाशौचादियमनियमा अपि वक्ष्यन्ते । **अद्विवर्षे प्रेते मातापित्रोराशौचꣳ शौचमेवेतरेषामेकरात्रन्त्रिरात्रं वा** ॥ द्वे वर्षे वयो यस्य स द्विवर्षः न द्विवर्ष अद्विवर्षस्तस्मिन् प्रेते प्रकर्षेण इतो गतः प्रेतो मृतः तस्मिन्निमित्ते माता च पिता च मातापितरौ तयोर्मातापित्रोराशौचमशुद्धिः वर्णाश्रमविहितकर्मानुष्ठानसङ्कोचावस्थेति यावत् । इतरेषां मातापितृभ्यामन्येषां शौचमेव नाशुद्धिः । पित्रोः कियन्तं कालमाशौचम् एकरात्रम् एकमहोरात्रम् । अथवा त्रिरात्रम् । अयं विकल्पः प्रेतस्याकृतकृतचूडत्वेन व्यवस्थितः । इतरेषां सद्यः शौचमिति गृह्यकारस्यैव मतम् । स्मृत्यन्तरे तु तेषामप्याशौचस्य विहितत्वात् आदन्तजननात्सद्य इत्यादिना । यच्च पुंस उपनयनात्प्राक् स्त्रियाश्च विवाहात्प्राक् वयोवस्थाविशेषेण सद्य एकरात्रत्रिरात्रादिकमाशौचमुक्तम् तत्सर्ववर्णसाधारणम् । विशेषावगमस्याशक्यत्वात् । **शरीरमदग्ध्वा निखनन्ति** । ऊनद्विवर्षस्य प्रेतस्य शरीरं कुणपमदग्ध्वा अग्निदाहमकृत्वा निखनन्ति गर्ते प्रक्षिपन्ति । **अन्तःसूतके चेदोत्थानादाशौचꣳ सूतकवत्** ॥ चेद्यदि अन्तःसूतके सूतकस्य जननिमित्ताशौचस्य अन्तर्मध्ये उत्थानात् उत्थानं सूतकान्तं यावत् आशौचं जननाशौचान्तरमापतति तदा सूतकवत् पूर्वसूतकशेषेणैवोत्तरस्य शुद्धिः । यद्वा अन्तर्मध्ये सूतके सूतकान्तरे जाते उत्थानात् शुद्धिः । आशौचं मरणाशौचं सूतकवत् । मरणाशौचमध्ये मरणाशौचे जाते पूर्वशेषेणोत्तरस्य शुद्धिरित्यर्थः । एतच्च सपिण्डविषयम् । मातापित्रोस्तु विशेषः । मातरि पूर्वमृतायां

यद्याशौचमध्ये पिता म्रियेत तदा पितृमरणनिमित्ताशौचान्ते शुद्धिः । यदा पुनः पितरि मृते माता म्रियेत तदा पितृमरणनिमित्ताशौचान्तात्पक्षिण्यन्ते द्वादशप्रहरान्ते शुद्धिः । किञ्च यदि सूतके रात्रिमात्रावशिष्टे सूतकान्तरमापद्येत शावे वा रात्रिमात्रावशिष्टे शावान्तरमापद्येत तदा द्व्यहमधिकं वर्द्धते। यदि पुनर्याममात्रावशिष्टे सूतके शावे वा सूतकं शावं वा सजातीयमापतति तदा त्र्यहमधिकं वर्द्धते। तथाच स्मृतिः। मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता। न पूर्वशेषाच्छुद्धिः स्यान्मातुः कुर्याच्च पक्षिणीम्॥ रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात् इति। अन्येतु इदं सूत्रमन्यथा व्याचक्षते। अन्तःसूतके चेद्यदि बालस्य मरणमापद्यते तदा आ उत्थानादाशौचमशुद्धिः सूतकवद्भवति नत्वाशौचनिवृत्तिः । बालमरणनिमित्ताशौचस्याल्पकालीनत्वेन बहुकालीनजननिमित्ताशौचशोधनासमर्थत्वात्, यतः समानजातीयस्य समानकालीनस्यैव पूर्वोत्पन्नस्य अन्तरापतितस्य वा शौचकत्वम् ॥ **नास्योदककर्म** ॥ अत्र ऊनद्विवार्षिके प्रेते उदककर्म उदकाञ्जलिदानं न भवति । **द्विवर्षप्रभृति प्रेतमाश्मशानात्सर्वेऽनुगच्छेयुर्यमगाथां गायन्तो यमसूक्तं च जपन्त इत्येके**॥ द्विवर्षः द्विवर्षवयस्कः तत्प्रभृतिस्तदादिर्यः प्रेतः तम् आश्मशानात् श्मशानावधि सर्वे सपिण्डा अनुगच्छेयुः पश्चाद्व्रजेयुः । श्मशानानुगमनविधानात् दाह उपलक्ष्यते। श्मशानशब्देन हि प्रेतदाहभूमिरुच्यते। तस्माद्दाहमपि कुर्युः दाहसन्नियोगशिष्टमुदकं च दद्युः। एके आचार्याः यमगाथां यमदैवत्यायामृचि गीतं साम गायन्तः पठन्तः, तथा यमसूक्तं यमदैवत्यानामृचां समुदायं सूक्तशब्दवाच्यं जपन्तोऽनुगच्छेयुरित्याहुः । **यद्युपेतो भूमिजोषणादिसमानमाहिताग्नेरोदकान्तस्य गमनात्** ॥ यदि उपेतः उपनीतः प्रेतः स्यात् गृह्योक्तसंस्कारेषु तस्याधिकारात् वैतानिकस्य च मन्त्रब्राह्मणकल्पसूत्रेषु पृथक् संस्काराम्नानात् तदा भूमिजोषणादिकर्म समं तुल्यं केन आहिताग्नेः कर्मणा यथा आहिताग्नेः औपासनिकस्य भवति किम्पर्यन्तम् आ उदकान्तस्य उदकसमीपस्य गमनात्, एतदुक्तम्भवति यद्युपनीतः प्रेतो भवति तदाऽस्याहिताग्नेर्भूमिजोषणादि उदकाञ्जलिदानपर्यन्तं कर्म यथाभवति तथैव कुर्यादिति। **शालाग्निना दहन्त्येनमाहितश्चेत्** ॥ चेद्यद्यसौ प्रेत आहितः कृतावसथ्याधानः स्यात् तदैनं प्रेतं शालाग्निना औपासनेन दहन्ति पुत्रादयः । **तूष्णीं ग्रामाग्निनेतरम्** ॥ तूष्णीम्मन्त्रवर्जं ग्रामाग्निना लौकिकेन पावकेन इतरमकृतावसथ्याधानन्दहन्तीत्यनुषङ्गः । **संयुक्तं मैथुनं वोदकं**

याचेरन्नुदकं करिष्यामह इति ॥ संयुक्तं केन चित् यौनेन सम्बन्धेन सम्बद्धम् । मैथुनः मिथुनस्यैकदेशलक्षणया मैथुनशब्दवाच्याया भार्यायाः भ्राता श्याल इत्यर्थः, तं वोदकञ्जलं याचेरन् प्रार्थयेरन् उदकङ्करिष्यामहे इत्यनेन मन्त्रेण । कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते ॥ एवं पृष्टः संयुक्तः श्यालो वा प्रतिब्रूयात् । किं, कुरुध्वम् मा चैवम्पुनरिति । क्व अशतवर्षे प्रेते शतवर्षेभ्योऽर्वाक् मृते सति । कुरुध्वमित्येवेतरस्मिन् ॥ इतरः शतवर्षप्रभृतिः तस्मिन्मृते कुरुध्वमित्येव एतावदेव प्रतिब्रूयात् न मा चैवं पुनरिति । सर्वे ज्ञातयोऽपोभ्यवयन्त्यासप्तमात्पुरुषाद्दशमाद्वा ॥ ज्ञातयः सपिण्डाः समानोदकाश्च सर्व एव अपोऽभ्यवयन्ति स्नानार्थं नद्यादेर्जलं प्रविशन्ति, किं यावत् आसप्तमात्पुरुषात् सप्तमम्पुरुषमभिव्याप्य यावन्तः सपिण्डाः दशमाद्वा दशमम्पुरुषमभिव्याप्य वा यावन्तः समानोदकाश्च तावन्त इत्यर्थः ॥ समानग्रामवासे यावत्सम्बन्धमनुस्मरेयुः ॥ समाने एकस्मिन् ग्रामे वास अवस्थानम् समानग्रामवासः तस्मिन् सति यावत्सम्बन्धम् यदवधिसम्बन्धः सापिण्ड्यम् समानोदकत्वम् सगोत्रत्वम् वा अनुस्मरेयुः अस्मिन्पुरुषे वयं सम्बन्ध्यामहे इति जानीयुः तावन्तः अपोभ्यवयन्ति इति सम्बन्धः ॥ एकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकयाऽपनोद्यापनः शोशुचदघमिति दक्षिणामुखा निमज्जन्ति ॥ कथमित्यपेक्षायामाह । एकम्परिधानीयमेव वस्त्रं येषान्ते एकवस्त्राः । तथा प्राचीनावीतिनः प्राचीनावीतं विद्यते येषान्ते प्राचीनावीतिनः कृतापसव्या इत्यर्थः । तथा भूताः सन्तः सव्यस्य वामस्य पाणेरनामिकया उपकनिष्ठिकया जलमपनोद्य अपनः शोशुचदघमित्येतावता मन्त्रेणापसार्य दक्षिणामुखाः याम्यदिगभिमुखा निमज्जन्ति युगपत्सकृत्स्नान्ति ॥ प्रेतायोदकꣳसकृत्प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्त उदकमिति ॥ प्रेताय मृताय उदकं जलं सकृदेकवारं अञ्जलिना प्रसिञ्चन्ति शुद्धायां भूमौ प्रक्षिपन्ति, कथम् असौ अमुकप्रेत एतत्ते उदकमित्यनेन मन्त्रप्रयोगेण । उत्तीर्णाञ्छुचौ देशे शाद्वलवत्युपविष्टाꣳस्तत्रैतानपवदेयुः ॥ उत्तीर्णान् जलाद्बहिर्निर्गतान् शुचौ देशे मूत्रपुरीषभस्मतुषाङ्गाराद्यशुचिद्रव्यरहिते देशे भूभागे, पुनः कीदृशे शाद्वलवति शाद्वलं हरिततृणं अस्ति यस्मिन्निति शाद्वलवान् तस्मिन् शाद्वलवति उपविष्टानासीनान् तत्र तदा अन्ये लोकयात्रिकाः सुहृदः एतान् प्रेतस्य पुत्रादीन् अपवदेयुः प्रेतगुणानुकथनेनेतिहासपुराणादिविचित्रकथाभिः संसारासारताख्यापनेन तान् शोकरहितान् कुर्युः । अनवेक्षमाणा ग्राममायान्ति रीती-

भूताः कनिष्ठपूर्वाः ॥ अनवेक्षमाणाः पश्चादनवलोकयन्तः रीतीभूताः श्रेणीभूताः पङ्क्तीभूताः कनिष्ठपूर्वाः कनिष्ठो लघीयान् पूर्वं अग्रिमो येषान्ते स्वस्वकनिष्ठानुसारिण इत्यर्थः । ग्राममायान्ति आगच्छन्ति ॥ **निवेशनद्वारे पिचुमन्दपत्राणि विदश्याचम्योदकमग्निं गोमयं गौरसर्षपांस्तैलमालभ्याश्मानमाक्रम्य प्रविशन्ति** ॥ निवेशनस्य प्रेतपतिकस्य गृहस्य द्वारे पिचुमन्दस्य निम्बस्य पत्राणि छदान् विदश्य दन्तैरवखण्ड्य आचम्य स्मार्त्ताचमनं विधाय उदकं जलम् अग्निम् द्वारि घृतम् तथा गोमयमार्द्रम् सर्षपान् गौरान् तैलं तिलसम्भवम् एतानि प्रत्येकमालभ्य स्पृष्ट्वा अश्मानं प्रस्तरमाक्रम्य पादेनालभ्य प्रविशन्ति गृहम् ॥ **त्रिरात्रं ब्रह्मचारिणोऽधःशायिनो न किञ्चन कर्म कुर्युर्न प्रकुर्वीरन्** ॥ त्रीण्यहोरात्राणि यावद्ब्रह्मचारिणः अकृतस्त्रीप्रसङ्गाः अधः खट्वाव्यतिरेकेण शेरत इत्येवंशीला अधःशायिनः किञ्चन किमपि कर्म गृहव्यापारादि लौकिकं स्वयन्न कुर्युः न प्रकुर्वीरन् अन्यैरपि न कारयेयुः । अन्तर्भूतोऽत्र णिच् ज्ञेयः ॥ **क्रीत्वा लब्ध्वा वा दिवैवान्नमश्नीयुरमांꣳसं प्रेताय पिण्डन्दत्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहम्** ॥ क्रीत्वा मूल्येनान्नं गृहीत्वा लब्ध्वा वा अयाचितमन्यतः प्राप्य दिवैव दिवसे एव न रात्रौ अश्नीयुः भुञ्जीरन् । किम्भूतम् अमांसं मांसवर्जितम्, किङ्कृत्वा प्रेताय पिण्डम्, अवयवपूरकन्दत्वा। कथम् नामग्राहं प्रेतस्य नाम गृहीत्वा, कुत्र अवनेजनदानप्रत्यवनेजनेषु अवनेजनं च दानं च प्रत्यवनेजनं च अवनेजनदानप्रत्यवनेजनानि तेषु त्रिरात्रमयन्धर्मः ॥ **मृन्मये ताꣳरात्रीं क्षीरोदके विहायसि निदध्युः प्रेतात्र स्नाहीति** ॥ मृन्मये शरावादौ पात्रे कृत्वा तां यस्मिन्दिने प्रेतोऽभूत् तत्सम्बन्धिनीं रात्रीं क्षीरं च उदकं च क्षीरोदके दुग्धपानीये पात्रैकवचनसामर्थ्यादेकीकृते विहायसि आकाशे निदध्युः स्थापयेयुः । कथम् प्रेतात्र स्नाहीत्यनेन मन्त्रेण। विज्ञानेश्वराचार्यास्तु द्रव्यद्वयनिधानसामर्थ्यात् द्वयोः पात्रयोर्भेदेन निधानं मन्यन्ते, मन्त्रश्चोहति प्रेतात्र स्नाहि पिब चेदमिति ॥ **त्रिरात्रꣳ शावमाशौचन्दशरात्रमित्येके** ॥ एवं प्रेतस्य मरणदिने पुत्रादीनां कृत्यमभिधायाशौचकालनिर्णयार्थमाह । त्रिरात्रम् त्रीण्यहोरात्राणि कालाध्वनोरत्यन्तसंयोगे इत्युपपदविभक्तिर्द्वितीया, तेन सन्ततमाशौचम् अशुचित्वम् । एके आचार्या मन्वादय उपनयनप्रभृति दशाहं दशाहोरात्राणि मन्यन्ते। अत्र प्रकरणे अहःशब्दो रात्रिशब्दश्च अहोरात्रोपलक्षणपरः । एके त्रिरात्रं एके दशरात्रं चेति व्यवस्थितं वृत्तिस्वाध्यायापे-

तथा । यथाह । एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तु निर्गुणो दशभिर्दिनैरिति ॥ एतदपि वृत्तिसङ्कोचे व्यवस्थापकम् । तद्यथा । यदा त्र्यहैकोऽश्वस्तनिको वा स्वाध्यायाग्निसम्पन्नो भवति तदा तस्य वृत्तिसम्पादनाय सद्यः शौचं भवति । यदा तु कुशूलकुम्भीधान्यः केवलस्वाध्यायसम्पन्नश्च तदाऽस्य त्रिरात्रम् । यदा पुनर्दशरात्रकुटुम्बवृत्तिपर्याप्तातिरिक्तधान्यो भवति वृत्तस्वाध्यायवांश्च तदाऽस्य दशरात्रम् वृत्तस्वाध्यायरहितस्य वृत्तिहीनस्यापि सर्वदा दशरात्रमेव, अयं च वृत्तिसङ्कोचात् । वृत्तस्वाध्यायापेक्षया य आशौचकालसङ्कोचः स वृत्तिसम्पादनविषय एव न पुनः कर्मान्तराधिकारसम्पादनपरः, तेन यस्याशौचिनो या आपद्भवति तदपाकरणार्थम् । वृत्तस्वाध्यायसम्पन्नस्य च आशौचसङ्कोचो नेतरेषाम्, जननाशौचेऽप्येवमेव ॥ **न स्वाध्यायमधीयीरन्** ॥ स्वाध्यायं वेदं नाधीयीरन् न पठेयुः न चाध्यापयेयुः येषां यावदाशौचम् ॥ **नित्यानि निवर्तेरन् वैतानवर्जम्** ॥ नित्यान्यावश्यकानि सन्ध्यावन्दनादीनि निवर्तेरन् अनधिकारान्न प्रवर्तन्ते ॥ कथम् वैतानवर्जं वितानो गार्हपत्याहवनीयदक्षिणाग्नीनां विस्तारस्तत्र साध्यं अग्निहोत्रादि कर्म तद्वैतानम् तद्वर्जयित्वाऽन्यन्निवर्तते इत्यर्थः ॥ **शालाग्नौ चैकेऽन्य एतानि कुर्युः** ॥ शालाग्निरावसथ्याग्निः तत्र शालाग्नौ साध्यानि सायम्प्रातर्होमस्थालीपाकादीनि तानि वर्जयित्वा नित्यानि निवर्तेरन्नित्येके आचार्याः मन्यन्ते, तस्मिन्पक्षे न स्वयं कुर्युः किन्त्वन्येन कारयेयुः । गृह्यकारपक्षे "न कुर्युर्न्न च कारयेयुः" यथाह कात्यायनः । सूतके मृतके चैव स्मार्तकर्म निवर्तते । पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ॥ वैतानिकं स्वयं कुर्यात् तत्त्यागो न प्रशस्यते ॥ तथा । स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके । श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादिति स्मरणात् । राहुदर्शने तु राहोरन्यत्र सूतके इति वचनात् यावद्राहुदर्शनन्तावद्राहुदर्शननिमित्तकं स्नानतर्पणदेवतार्चनजपहोमदानादि स्मार्त्तं कर्म कुर्यात् ॥ **प्रेतस्पर्शिनो ग्रामञ्च प्रविशेयुरानक्षत्रदर्शनात्** ॥ प्रेतस्पर्शो विद्यते येषान्ते प्रेतस्पर्शिनः सपिण्डा ग्रामन्न प्रविशेयुर्नगच्छेयुः, कियावत् आनक्षत्रदर्शनात् नक्षत्राणां दर्शनं नक्षत्रदर्शनम् तस्मात् आ अवधेः ॥ **रात्रौ चेदादित्यस्य** ॥ चेद्यदि रात्रौ निशि प्रेतस्पर्शः स्यात्तदा आदित्यस्य सूर्यस्य दर्शनात्प्राक् न प्रविशेयुरित्यनुषङ्गः ॥ **प्रवेशनादि समानमितरैः** ॥ प्रवेशनमादौ यस्य निम्बपत्रादिदशनस्य तत्प्रवेशनादि कर्म इतरैरसपिण्डैः समानं तुल्यं कार्यम् । अयमसपिण्डानान्नियमः ।

यतोऽसपिण्डानामेव "प्रवेशनादिकङ्कर्म प्रेतसंस्पर्शिनामपि । इच्छतान्तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात्" इतियाज्ञवल्क्योक्तेरिच्छतां विकल्पः । संयमः प्राणायामः । एवं ब्राह्मणस्याशौचमभिधायेदानीमितरवर्णानामाशौचकालनिर्णयमाह ॥ पक्षं द्वौ वाऽशौचम् ॥ पक्षम् पञ्चदशाहोरात्राणि वैश्यस्याशौचं भवति, द्वौ पक्षौ त्रिंशदहोरात्राणि शूद्रस्य, वा शब्दात् द्वादशाहोरात्राणि क्षत्रियस्याशौचम् । तथाच स्मृत्यन्तरम् । शुध्येद् विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यतीति ॥ आचार्ये चैवं मातामहयोश्च ॥ आचार्ये उपनयनपूर्वकं वेदाध्यापके चैवमेवोदकदानादि कर्तव्यम्, मातामही च मातामहश्च मातामहौ तयोः, द्विवचनम्मातामह्यपेक्षया, चकारादेवमेवोदकदानादि सर्वङ्कर्तव्यम् ॥ स्त्रीणां चाप्रत्तानाम् ॥ अप्रत्तानामपरिणीतानां स्त्रीणां कन्यानां चकारादेवमेव एषैव निखननदहनोदकदानप्रभृतीतिकर्तव्यता । आशौचेऽपि विशेषो नास्ति गृह्यकारमते । अनभिधानात् । स्मृत्यन्तरे तु पुनर्दृश्यते अहस्त्वदत्तकन्यास्विति । एतच्च चूडाकरणानन्तरं दानात्प्राक्, कुतः, स्त्रीणां चूडास्तथा दानात्संस्कारादप्यधः क्रमात् । सद्यः शौचमथैकाहं त्र्यहं स्यात् पितृबन्धुषु, इतिस्मृतेः । तस्मादपरिणीतानां स्त्रीणां चूडाकरणात्प्राक् सद्यः शौचम्, चूडाकरणादुपरि दानात्प्राक् एकाहम्, तत उपरि विवाहात्प्राक् त्र्यहमिति निर्णयः ॥ प्रत्तानामितरे कुर्युस्ताश्च तेषाम् ॥ प्रत्तानाम्परिणीतानां स्त्रीणामितरे भर्त्रादयो दाहादि कर्म कुर्युः न पित्रादयः । ताश्च प्रत्ताः स्त्रियः तेषां भर्त्रादीनां यथाधिकारमुदकदानादि कर्म कुर्युः । पित्रादीनामत्र विशेषः । दत्ता नारी पितुर्गेहे सूयते म्रियतेऽपि वा । तद्बन्धुवर्गस्त्वेकेन शुध्यते जनकस्त्रिभिरितिवचनात् प्रत्तानामपि पितुर्बन्धूनां चाशौचापत्तिमात्रम् ॥ प्रोषितश्चेत्प्रेयाच्छ्रवणप्रभृति कृतोदकाः कालशेषमासीरन् ॥ प्रोषितः प्रवासंगतश्चेद्यदि प्रेयात् म्रियेत तदा तत्पुत्रादयः तन्मरणश्रवणकालमारभ्य कृतन्दत्तं स्नानपूर्वकमुक्तविधिना उदकं यैस्ते कृतोदकाः सन्तः कालशेषम् आशौचसमयशेषम् आसीरन् . आशौचधर्मेण वर्तेरन्नित्यर्थः ॥ अतीतश्चेदेकरात्रं त्रिरात्रं वा ॥ चेद्यदि आशौचकालोऽतीतः ततः प्रोषितमरणं च श्रुतन्तदा एकरात्रमाशौचन्त्रिरात्रं वा । अत्र यद्यपि सामान्येनोक्तन्तथापि स्मृत्यन्तराद्विशेषोऽवगन्तव्यः । कथम्, मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी भवेत् । अहस्तु नवमादर्वाक् सद्यः शौचमतः परम् ॥ तथा, पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः । श्रुत्वा तद्दिन-

मारभ्य दशाहं सूतकी भवेदिति ॥ **अथ कामोदकान्यृत्विक्श्वशुरसखिसम्बन्धि-मातुलभागिनेयानामप्रत्तानां** ॥ अथ नियमेन कृत्यमभिधायाधुना कामतः कृत्यमाह । कामोदकानि कामेन इच्छया उदकानि उदकदानानि भवन्तीति सूत्रशेषः । केषां ऋत्विजः याजकाः श्वशुरौ भार्यायाः मातापितरौ सखायो मित्राणि सम्बन्धिनो वैवाह्याः मातुला मातृभ्रातरः भागिनेयाः भगिनीपुत्राः एतेषां प्रत्तानां ऊढानां दुहितृभगिन्यादीनां स्त्रीणां चकारादिच्छयोदकदानम् अतोऽदाने प्रत्यवायो नास्ति ॥ **एकादश्यामयुग्मान् ब्राह्मणान् भोजयित्वा मांसवत्प्रेतायोद्दिश्य गामप्येके घ्नन्ति** ॥ एकादश्यामेकादशेऽहनि ब्राह्मणः कर्ता चेत् अयुग्मान् त्रिप्रभृतिविषमसङ्ख्याकान् द्विजोत्तमान् भोजयित्वा भोजनं कारयित्वा एकोद्दिष्टश्राद्धविधिना मांसवत् मांसेन सहितं पायसौदनादि भवति । एके आचार्याः प्रेतमुद्दिश्य गामपि घ्नन्ति इति । शाखापशुविधानेन तन्मांसेन श्राद्धं कुर्वन्ति तच्छ्राद्धमग्रे वक्ष्यति नद्यन्तरे नावं कारयेन्न वेति ॥ **पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात्पुत्रवांश्चेत्** ॥ पिण्डानां करणं पिण्डकरणन्तस्मिन् अमावास्यायां साग्नेः पुत्रस्य पिण्डपितृयज्ञे तत्र पितॄणां प्रथम आद्यः प्रेतः स्यात् तत्प्रभृतिपिण्डदानमित्यर्थः । चेद्यदि स प्रेतः पुत्रवान् अधिकृतेन साग्निना पुत्रेण पुत्रीभवति । अयमर्थः । साग्नेः पुत्रस्य यदि पिता म्रियेत तदा पिण्डपितृयज्ञानुष्ठानानुरोधेन द्वादशेऽहनि सपिण्डीकरणं विधाय अमावास्यायां तत्प्रभृति पिण्डपितृयज्ञे पिण्डदानं पिण्डान्वाहार्यकं च तत्प्रभृतिपार्वणमेव श्राद्धं भवतीति । एकोद्दिष्टन्तु निरग्निविषयम् ॥ **निवर्तेत चतुर्थः** ॥ सपिण्डने कृते पित्रादिभ्यस्त्रिभ्यः पिण्डादिदानं चतुर्थः पिण्डो निवर्तेत पिण्डास्त्रिष्विति श्रुतेः । त्रिषु पिण्डः प्रवर्तेत इति स्मृतेश्च । **संवत्सरं पृथगेके** ॥ एके आचार्याः साग्नेरपि पुत्रस्य संवत्सरं यावत् पृथगेकस्यैव पितुः पिण्डदानमिच्छन्ति । संवत्सरे सपिण्डीकरणमिति वचनात् । न वा असपिण्डीकृतस्येतरैः सह दानं युज्यते, सपिण्डीकरणमितिशब्दः पूर्वजैः सह सपिण्डीकरणस्मेलनमिति व्युत्पत्त्या अन्वर्थः । तेन संवत्सरं यावदसपिण्डीकृतस्य पितुः प्रेतस्य पृथग्दानमिच्छन्त्येके । एवं सति संवत्सरे सपिण्डीकरणमिति स्मृतेरनुग्रहः कृतो भवति, एवं प्राप्ते उच्यते ॥ **न्यायस्तु** ॥ तुशब्देन पूर्वपक्षव्यावृत्तिः, नैतदेवम् यत्स्मृत्यनुग्रहन्यायेनेदं परिकल्प्यते कुतः श्रुतिविरोधात् । काऽसौ श्रुतिः ॥ **न चतुर्थः पिण्डो भवतीति श्रुतिः** ॥ कथं श्रुतिविरोधः, शृणु, अधिकृतस्य पुत्र

स्य साग्नेः पृथक् क्रियमाणे चतुर्णामपि पिण्डनिर्वपणेऽधिकारी भवति अमावास्यायां पृथक् प्रेतस्य पृथक् क्रियमाणे पार्वणं च त्रयाणामिति भवति श्रुतिविरोधः तेनाधिकृतस्य साग्नेः पुत्रस्य सपिण्डीकरणादूर्द्ध्वमेकोद्दिष्टन्नैव कर्तव्यम्भवति सपिण्डीकरणन्तु द्वादशाह एव नियतम् अनधिकृतस्य निरग्नेस्तु संवत्सरादिषु सपिण्डीकरणकालेषु कृतसपिण्डनस्यापि पितुः संवत्सरादूर्द्ध्वमपि प्रतिसंवत्सरमेकोद्दिष्टमेव ॥ **अहरहरन्नमस्मैब्राह्मणायोदकुम्भं च दद्यात्** ॥ अहरहः प्रतिदिनमस्मै प्रेतायोद्दिश्य ब्राह्मणाय सम्प्रदानभूतार्थं अन्नम्भोजनपर्याप्तमुदकुम्भञ्च जलपूर्णघटं संवत्सरं च यावद्दद्यात् प्रयच्छेत् । **पिण्डमप्येके निपृणन्ति** ॥ एके आचार्या अहरहः पिण्डनिर्वपणमपीच्छन्ति तच्चानधिकृतनिरग्निविषयम्, अधिकृतस्य हि साग्नेः पार्वणमेव भवति नैकः पिण्डः न चैतत्प्रतिदिनमन्नोदककुम्भदानं संवत्सरसपिण्डीकरणपक्षएव प्रागपि संवत्सरात् यदि वा वृद्धिरापद्यत इत्यादिस्मृतिविहितकालान्तरे सपिण्डीकरणेऽपि तदूर्द्ध्वं संवत्सरं यावद्भवत्येव । यतः स्मरन्ति । अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं भवेत् । तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे इति, तस्मात् साग्निना निरग्निना च पुत्रेणाहरहरन्नोदकुम्भदानं कर्तव्यम् । पक्षे यत्पिण्डदानन्तन्निरग्नेरेव, इतरस्य तु त्रिभ्यः पिण्डदानं प्रसज्येत एकपिण्डनिर्वपणनिषेधात्, तर्हि त्रिभ्योऽपि ददातु, न, प्रेतस्यहि तत् स्मर्यते । याज्ञवल्क्यः । मृते ऽहनि तु कर्तव्यं प्रतिमासन्तु वत्सरम् । प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ इत्येतदेकोद्दिष्टं साग्नेः सपिण्डीकरणात्प्राक् ऊर्द्ध्वन्तु पार्वणमेव । यथाहमनुः । असपिण्डक्रिया कर्म द्विजातेः संस्थितस्य तु । अदैवं भोजयेच्छ्राद्धं पिण्डमेकन्तु निर्वपेत् ॥ तथा ॥ सहपिण्डक्रियायान्तु कृतायामस्य धर्मतः । अनयैवावृता कार्यम्पिण्डनिर्वपणं सुतैरिति । स्मृत्यन्तरञ्च । यः सपिण्डीकृतं प्रेतं पृथक् पिण्डेन योजयेत् । विधिघ्नस्तेन भवति पितृहा चोपजायते इति ॥ एतच्चौरसक्षेत्रजसाग्निपुत्रविषयम् । यतः स्मरन्ति । औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु । दद्यातामितरे कुर्युरेकोद्दिष्टं सुता दशेति ॥ अत्राशौचप्रसङ्गात् स्मृत्यन्तरोक्त आशौचापवादो लिख्यते । ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यः शौचाः प्रकीर्तिता इति । एतच्च यज्ञादौ आरब्ध एव, कुतः "आरब्धे सूतकन्नास्ति अनारब्धे तु सूतकमिति वचनात् । आरम्भश्चैवम् । आरम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरि-

क्रियेति ॥ इति सूत्रार्थः । अथ पद्धतिः । तत्र ऊनद्विवार्षिकं प्रेतमरण्यन्नीत्वा भूमौ निखनेत् । द्विवर्षप्रभृति उपनयनात्प्राक् प्रेतं श्मशानं नीयमानं सर्वे सपिण्डा यथाज्येष्ठपुरःसरं पंक्तीभूता अनुगच्छन्ति । पर्त यमगाथाङ्गायन्तो यमसूक्तं च जपन्तः । ततस्तत्र तम्प्रेतं भूमिजोषणादिरहितं दग्ध्वा वक्ष्यमाणविधिना स्नात्वा उदकाञ्जलिं च दत्वा गृहमागता यथोक्तमाशौचमाचरेयुः । उपनयनादूर्ध्वं भूमिजोषणाद्युदकान्तगमनपर्यन्तं यथाहिताग्नेः कर्म तथैव यथासम्भवं भवति । अत्र चौपासनिकं पुत्रादिरधिकारी दुर्बलं ज्ञात्वा स्नापयित्वा शुद्धवस्त्रेणाच्छाद्य दक्षिणाशिरसं दर्भवत्यां भूमौ सन्निवेशयेत् । पूर्वपक्षे तु रात्रौ चेन्मृत्युशङ्काऽग्निहोत्रिणः । हुतावशिष्टाः पक्षेऽस्मिन् जुहुयात्सकलाहुतीः । दार्शन्तत्र पिण्डपितृयज्ञं विना आकृष्य कुर्यान्न तु पौर्णमासं शुक्लपक्षे आकृष्य कुर्यात् । दिवा सायमाहुतिं च । तत्कर्मणोरप्रारब्धत्वात् । अथ तत्र वैतरणीं यथाशक्ति यथाश्रद्धं हिरण्यभूम्यादिकं सर्वपापक्षयार्थं दापयित्वा अथ गतासुं ज्ञात्वा घृतेनाभ्यज्य उदकेनाप्लाव्य सवस्त्रमुपवीतिनं चन्दनोक्षितसर्वाङ्गं पुष्पमालाविभूषितं मुखनासिकाचक्षुःश्रोत्ररन्ध्रेषु निक्षिप्तहिरण्यशकलं वस्त्रेणाच्छाद्य पुत्रादयो निर्हरेयुः । एतच्चावसथ्याग्निसन्निधौ गृहमरणपक्षे । यदा तु गङ्गादितीर्थेऽग्निसन्निधौ अर्द्धजले मरणं तदा तत्राप्येवं स्नपनादि हिरण्यशकलनिधानान्तङ्कर्म कुर्यात् । निर्हरणपक्षे तु आमपात्रे सन्तापाग्निमादायाग्निपुरःसरं प्रेतं यमगाथां गायन्तो यमसूक्तं च जपन्तः पुत्रादयः श्मशानं नयन्ति, तत्राधिकारी पुत्रादिराप्लुत्य भूमिजोषणपूर्वकं दक्षिणोत्तरायतं दारुचयं विधाय चितौ कृष्णाजिनं प्राग्ग्रीवमुत्तरलोममास्तीर्य तत्रोत्तानन्दक्षिणाशिरसमेनन्निपात्य दक्षिणनासारन्ध्रे आज्यपूर्णं स्रुवन्निधाय पादयोरधरारणिमुरस्युत्तरारणिं च प्रागग्रां पार्श्वयोः सव्यदक्षिणयोः शूर्पचमसौ मुसलमुलूखलं च न्युब्जमूर्वोरन्तराले तत्रैव चात्रमौविलीं च अरुदन् भयरहितो निदध्यात् अपसव्येन वाग्यतो दक्षिणामुखः सन् अथोपविश्य सव्यं जान्वाच्यौपासनाग्निं गृहीत्वा अस्मात्त्वमधिजातोसीत्यनयर्चा स्वाहान्तया दक्षिणतो मुखे वा शनैरग्निन्दद्यात् । अनावसथिकन्तु एवमेव ग्रामाग्निना सपिण्डाद्यानीतेनामन्त्रकं दहति । ततो दाहान्ते नद्याद्युदकसमीपं गत्वा समीपस्थितं योनिसम्बद्धं श्यालकं वा उदकं करिष्यामहे इत्यनेन मन्त्रेणोदकं याचेरन् सपिण्डादयः । एवं याचिते यदि शतवर्षादर्वाक् प्रेतो भवेत्तदा कुरुध्वम्मा चैवं पुनरित्येवम्प्रतिवचनन्दद्यात्, अथ शतवर्षादूर्द्ध्वम्प्रेतो भवेत्तदा कुरुध्वमित्येतावदेव, ततः सप्तपुरुषसम्बन्धिनः सपि-

स्य साग्नेः पृथक् क्रियमाणे चतुर्णामपि पिण्डनिर्वपणेऽधिकारो भवति अमावास्यायां पृथक् प्रेतस्य पृथक् क्रियमाणे पार्वणं च त्रयाणामिति भवति श्रुतिविरोधः तेनाधिकृतस्य साग्नेः पुत्रस्य सपिण्डीकरणादूर्द्धमेकोद्दिष्टन्नैव कर्तव्यम्भवति सपिण्डीकरणन्तु द्वादशाह एव नियतम् अनधिकृतस्य निरग्नेस्तु संवत्सरादिषु सपिण्डीकरणकालेषु कृतसपिण्डनस्यापि पितुः संवत्सरादूर्द्धमपि प्रतिसंवत्सरमेकोद्दिष्टमेव ॥ **अहरहरन्नमस्मैब्राह्मणायोदकुम्भं च दद्यात्** ॥ अहरहः प्रतिदिनमस्मै प्रेतायोद्दिश्य ब्राह्मणाय सम्प्रदानभूतार्थ अन्नम्भोजनपर्याप्तमुदकुम्भञ्च जलपूर्णघटं संवत्सरं च यावद्दद्यात् प्रयच्छेत् । **पिण्डमप्येके निपृणन्ति** ॥ एके आचार्या अहरहः पिण्डनिर्वपणमपीच्छन्ति तच्चानधिकृतनिरग्निविषयम्, अधिकृतस्य हि साग्नेः पार्वणमेव भवति नैकः पिण्डः न चैतत्प्रतिदिनमन्नोदककुम्भदानं संवत्सरसपिण्डीकरणपक्षएव प्रागपि संवत्सरात् यदि वा वृद्धिरापद्यत इत्यादिस्मृतिविहितकालान्तरे सपिण्डीकरणेऽपि तदूर्द्धं संवत्सरं यावद्वर्तयेत्र । यतः स्मरन्ति । अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं भवेत् । तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे इति, तस्मात् साग्निना निरग्निना च पुत्रेणाहरहरन्नोदकुम्भदानं कर्तव्यम् । पक्षे प्रतिपिण्डदानन्तन्निरग्नेरेव, इतरस्य तु त्रिभ्यः पिण्डदानं प्रसज्येत एकपिण्डनिर्वपणनिषेधात्, तर्हि त्रिभ्योऽपि ददातु, न, प्रेतस्यहि तत् स्मर्यते । याज्ञवल्क्यः । मृते ऽहनि तु कर्तव्यं प्रतिमासन्तु वत्सरम् । प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ इत्येतदेकोद्दिष्टं साग्नेः सपिण्डीकरणात्प्राक् ऊर्द्धन्तु पार्वणमेव । यथाहमनुः । असपिण्डक्रिया कर्म द्विजातेः संस्थितस्य तु । अदैवं भोजयेच्छ्राद्धं पिण्डमेकन्तु निर्वपेत् ॥ तथा ॥ सहपिण्डक्रियायान्तु कृतायामस्य धर्मतः । अनयैवावृता कार्यम्पिण्डनिर्वपणं सुतैरिति । स्मृत्यन्तरञ्च । यः सपिण्डीकृतं प्रेतं पृथक् पिण्डेन योजयेत् । विधिघ्नस्तेन भवति पितृहा चोपजायते इति ॥ एतच्चौरसक्षेत्रजसाग्निपुत्रविषयम् । यतः स्मरन्ति । औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु । दद्यातामितरे कुर्युरेकोद्दिष्टं सुता दशेति ॥ अत्राशौचप्रसङ्गात् स्मृत्यन्तरोक्त आशौचापवादो लिख्यते । ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यः शौचाः प्रकीर्तिता इति । एतच्च यज्ञादौ आरब्ध एव, कुतः "आरब्धे सूतकन्नास्ति अनारब्धे तु सूतकमिति वचनात् । आरम्भश्चैवम् । आरम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरि-

क्रियेति ॥ इति सूत्रार्थः । अथ पद्धतिः । तत्र ऊनद्विवार्षिकं प्रेतमरण्यन्नीत्वा भूमौ निखनेत् । द्विवर्षप्रभृति उपनयनात्प्राक् प्रेतं श्मशानं नीयमानं सर्वे सपिण्डा यथाज्येष्ठपुरःसरं पंक्तीभूता अनुगच्छन्ति । पथि यमगाथाङ्गायन्तो यमसूक्तं च जपन्तः । ततस्तत्र तत्प्रेतं भूमिजोषणादिरहितं दग्ध्वा वक्ष्यमाणविधिना स्नात्वा उदकाञ्जलिं च दत्वा गृहमागता यथोक्तमाशौचमाचरेयुः । उपनयनादूर्ध्वं भूमि-जोषणाद्युदकान्तगमनपर्यन्तं यथाहिताग्नेः कर्म तथैव यथासम्भवं भवति । अत्र चौपासनिकं पुत्रादिरधिकारी दुर्बलं ज्ञात्वा स्नापयित्वा शुद्धवस्त्रेणाच्छाद्य दक्षिणा-शिरसं दर्भवत्यां भूमौ सन्निवेशयेत् । पूर्वपक्षे तु रात्रौ चेन्मृत्युशङ्काऽग्निहोत्रिणः । हुतावशिष्टाः पक्षेऽस्मिन् जुहुयात्सकलाहुतीः । दार्शन्तत्र पिण्डपितृयज्ञं विना आकृष्य कुर्यान्न तु पौर्णमासं शुक्लपक्षे आकृष्य कुर्यात् । दिवा सायमाहुतिं च । तत्कर्मणोरप्रारब्धत्वात् । अथ तत्र वैतरणीं यथाशक्ति यथाश्रद्धं हिरण्यभूम्या-दिकं सर्वपापक्षयार्थं दापयित्वा अथ गतासुं ज्ञात्वा घृतेनाभ्यज्य उदकेनाप्लाव्य सवस्त्रमुपवीतिनं चन्दनोक्षितसर्वाङ्गं पुष्पमालाविभूषितं, मुखनासिकाचक्षुःश्रोत्र-रन्ध्रेषु निक्षिप्तहिरण्यशकलं वस्त्रेणाच्छाद्य पुत्रादयो निर्हरेयुः । एतच्चावसथ्याग्नि-सन्निधौ गृहमरणपक्षे । यदा तु गङ्गादितीर्थेऽग्निसन्निधौ अर्द्धजले मरणं तदा तत्राप्येवं स्नपनादि हिरण्यशकलनिधानान्तङ्कर्म कुर्यात् । निर्हरणपक्षे तु आम-पात्रे सन्तापाग्निमादायाग्निपुरःसरं प्रेतं यमगाथां गायन्तो यमसूक्तं च जपन्तः पुत्रादयः श्मशानं नयन्ति, तत्राधिकारी पुत्रादिराप्लुत्य भूमिजोषणपूर्वकं दक्षिणो-त्तरायतं दारुचयं विधाय चितौ कृष्णाजिनं प्राग्ग्रीवमुत्तरलोममास्तीर्य तत्रो-त्तानन्दक्षिणाशिरसमेनन्निपात्य दक्षिणनासारन्ध्रे आज्यपूर्णं स्रुवन्निधाय, पादयोर-धरारणिमुरस्युत्तरारणिं च प्रागग्रां पार्श्वयोः सव्यदक्षिणयोः शूर्पचमसौ मुसलमु-लूखलं च न्युब्जमूर्वोरन्तराले तत्रैव चात्रमौविलीं च अरुदन् भयरहितो निद-ध्यात् अपसव्येन वाग्यतो दक्षिणामुखः सन् अथोपविश्य सव्यं जान्वाच्यौपास-नाग्निं गृहीत्वा अस्मात्त्वमधिजातोसीत्यनयर्चा स्वाहान्तया दक्षिणतो मुखे वा शनैरग्निन्दद्यात् । अनावसथिकन्तु एवमेव ग्रामाग्निना सपिण्डाद्यानीतेनानन्तकं दहति । ततो दाहान्ते नद्याद्युदकसमीपं गत्वा समीपस्थितं योनिसम्बद्धं श्यालकं वा उदकं करिष्यामहे इत्यनेन मन्त्रेणोदकं याचेरन् सपिण्डादयः । एवं याचिते यदि शतवर्षादर्वाक् प्रेतो भवेत्तदा कुरुध्वम्मा चैवं पुनरित्येवम्प्रतिवचनन्दद्यात्, अथ शतवर्षादूर्द्ध्वम्प्रेतो भवेत्तदा कुरुध्वमित्येतावदेव, ततः सप्तपुरुषसम्बन्धिनः सपि-

एडा दशपुरुषसम्बन्धाः समानोदकाश्चैकग्रामनिवासे यावत्स्मृतं जलम्प्रविशन्ति एकवस्त्राः प्राचीनावीतिनः सन्तः, ततः सव्यहस्तस्यानामिकाङ्गुल्या उदकमपनोद्य अपनः शोशुचदघमित्येतावता मन्त्रेण दक्षिणामुखास्तूष्णीं निमज्जन्ति। ततः प्रेतमुद्दिश्यामुकसगोत्रामुकशर्मन् प्रेत् एतत्त उदकमित्युच्चार्य एकैकमञ्जलिं सकृद्भूमौ प्रक्षिपन्ति। तत उदकादुत्तीर्य शुचौ देशे शाद्वलवत्युपविष्टान् सपिण्डादीनन्ये सुहृद इतिहासपुराणादिविदग्धकथाभिः संसारानित्यतां दर्शयन्तोऽपवदेयुः । तथाहि । कृतोदकान्समुत्तीर्णान्मृदुशाद्वलसंस्थितान् । स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥ मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् । करोति यः स सम्मूढो जलबुद्बुदसन्निभे ॥ पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः । कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ गन्त्री वसुमती नाशमुदधिर्दैवतानि च । फेनप्रख्यः कथन्नाशं मर्त्यलोको न यास्यति ॥ श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः । विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ मा शोकं कुरुतानित्ये सर्वस्मिन्प्राणधारिणि । धर्मङ्कुरुत यत्नेन यो वः सङ्गतिमेष्यति ॥ तथाच विष्णुः ॥ यदुदगयनन्तदहर्देवानान्दक्षिणायनं रात्रिः संवत्सरो ह्यहोरात्रं तत्त्रिंशता मासो द्वादशवर्षं द्वादशवर्षशतानि दिव्यानि कलियुगम्, द्विगुणानि द्वापरम्, त्रिगुणानि त्रेतायुगम्, चतुर्गुणानि कृतयुगम्, एवं द्वादशसहस्राणि दिव्यानि चतुर्युगम्, तत्सहस्रन्तु कल्पः, स च पितामहस्याहस्तावती चास्य रात्रिः। एवं विधेनाहोरात्रेण मासवर्षगणनया सर्वश्रेष्ठस्यैव ब्रह्मणो वर्षशतमायुः, एवं ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसस्तस्यान्ते महाकल्पः तावत्येव चास्य निशा, पौरुषाणामहोरात्राणामतीतानां सङ्ख्यैव नास्ति न च भविष्याणाम् अनाद्यन्तत्वात्कालस्य। एवमस्मिन्निरालम्बे काले सन्ततयायिनि । न तद्रूपं प्रपश्यामि स्थितिर्यस्य भवेद् ध्रुवा ॥ गङ्गायाः सिकता धारास्तथा वर्षति वासवे । शक्या गणयितुं लोके न व्यतीताः पितामहाः ॥ चतुर्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः । सर्वलोकप्रधानाश्च मनवश्च चतुर्दश ॥ बहूनीन्द्रसहस्राणि दैत्येन्द्रनियुतानि च । विनष्टानीह कालेन मनुष्याणान्तु का कथा ॥ राजर्षयश्च बहवः सर्वे समुदिता गुणैः । देवर्षयश्च कालेन सर्वे ते निधनं गताः ॥ ये समर्था जगत्यस्मिन् सृष्टिसंहारकारिणः । तेऽपि कालेन नीयन्ते कालो हि बलवत्तरः ॥ आक्रम्य सर्वः कालेन परलोकाय नीयते । कर्मपथ्योदनो जन्तुस्तत्र का परिदेवना ॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । अर्थे दुःप-

रिहार्थेऽस्मिन् नास्ति शोकसहायता ॥ शोचन्तो नोपकुर्वन्ति मृतस्येह जना यतः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ सुकृतं दुष्कृतं चोभे सहायौ यस्य गच्छतः । बान्धवैस्तस्य किङ्कार्यं शोचद्भिरथवा तथा ॥ बान्धवैर्नाम शोचद्भिः स्थितिं प्रेतो न विन्दति । अस्वस्थपतितानेष पिण्डतोयप्रदानतः ॥ अर्वाक् सपिण्डीकरणात् प्रेतो भवति वै मृतः । 'प्रेतलोकङ्गतस्यान्नं सोदकुम्भं प्रयच्छति ॥ देवतायतनस्थाने तिर्यग्योनौ तथैव च । मनुष्येषु तथा प्रेति श्राद्धं दत्तं स्वबान्धवैः ॥ प्रेतस्य श्राद्धकर्तुश्च पृथक् श्राद्धे कृते शुभम् । तस्माच्छ्राद्धं सदा कार्यं शोकन्त्यक्त्वा निरर्थकम् ॥ एतावदेव कर्तव्यं सदा प्रेतस्य बन्धुभिः । नोपकुर्यान्नरः शोचन् प्रेतस्यात्मन एव च ॥ दृष्ट्वा लोकमनानन्दं म्रियमाणांश्च बान्धवान् । धर्ममेकं सहायार्थं चरयध्वं सदा नराः ॥ मृतोऽपि बान्धवः शक्तो नानुगन्तुं मृतं नरम् ॥ जायावर्जं हि सर्वस्य याम्यः पन्था विभिद्यते ॥ धर्म एकोऽनुयात्येनं यत्र क्वचन गामिनम् । ततोऽसारे त्रिलोकेऽस्मिन्धर्मङ्कुरुत मा चिरम् ॥ श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वाऽकृतम् ॥ क्षेत्रापणगृहासक्तमन्यत्र गतमानसम् । वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ न कालस्य प्रियः कश्चिदप्रियो वा ऽपि विद्यते । आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् ॥ नाप्राप्तकालो म्रियते विद्धः शरशतैरपि । कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः । त्रायन्ते मृत्युनोपेतं जरया वाऽपि मानवम् ॥ यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतङ्कर्म कर्तारमनुविन्दति ॥ आगामिनमनर्थं हि प्रतिष्ठानशतैरपि । न निवारयितुं शक्तस्तत्र का परिदेवना ॥ भारते ॥ यथा काष्ठं च काष्ठं च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद् भूतसमागमः ॥ रामायणे च ॥ शोचमानास्तु सस्नेहा बान्धवाः सुहृदस्तथा । पातयन्ति जनं स्वर्गादश्रुपातेन राघव ॥ श्रूयते हि नरव्याघ्र पुरा परमधार्मिकः । भूरिद्युम्नो गतः स्वर्गं राजा पुण्येन कर्मणा ॥ स पुनर्बन्धुवर्गस्य शोकव्याजेन राघव । कृत्स्ने च क्षयिते धर्मे पुनः स्वर्गान्निपातितः ॥ अतः शोकाग्निना दग्धः पिता ते स्वर्गतः प्रभो । शपेत्त्वां मन्युनाऽऽविष्टः तस्मादुत्तिष्ठ मा शुचः ॥ ततः पश्चादनवलोकयन्तः कनिष्ठानग्रतः कृत्वा पङ्क्तीभूता ग्राममायान्ति आगम्य च गृहद्वारे स्थित्वा निम्बपत्राणि दन्तैरवखण्ड्याचम्योदकमग्निं गोमयं गौरसर्षपांस्तैलं चेति क्रमेणालभ्य पादेनाश्मानमाक्रम्य गृहं प्रविशन्ति । ततः प्रभृति त्रिरात्रं यावत् ज्ञातीनां यमनियमा उच्यन्ते ।

ब्रह्मचर्यमधःशयनं लौकिककर्माकरणमन्येषां कुर्वित्यप्रेरणं क्रीत्वा लब्ध्वा वा दिवैव भोजनं मांसवर्जम्, एते च नियमा ज्ञातीनां पुत्रादीनां यावदाशौचम्। अथ यस्तेषां मध्ये प्रेतक्रियाधिकारी पुत्रादिः स दशरात्रं यावत्प्रत्यहमेकैकमवयवपूरकं पिण्डम्प्रेताय दद्यात्। आशौचदिनहानौ वृद्धौ वा दशैव पिण्डान् दिनानि विभज्य दद्यात्। कथममुकसगोत्रामुकशर्मन् प्रेत अवनेनिक्ष्व, ततो दर्भानास्तीर्य अमुकसगोत्रामुकशर्मन् प्रेत एष ते शिरःपूरकः पिण्डो मया दीयत इति पिण्डन्दत्वा पूर्ववत्पुनरवनेजनन्दत्वा ततोऽनुलेपनं ततो पुष्पधूपदीपर्णातलतोयोर्णातन्तुदानं पिण्डे स्मृत्यन्तरोक्तमपि कुर्यात्। अथ यस्मिन्नहोरात्रे स मृतो भवति तस्यां रात्रौ मृन्मये पात्रे क्षीरोदके कृत्वा यष्ट्यादिकमवलम्ब्याकाशे धारयेत् प्रेतात्र स्नाहि पिब चेदमिति मन्त्रेण। ततो द्वितीयादिषु प्रत्यहमनेनैव विधिना एकैकं पिण्डमवयवपूरकं दद्याद् ब्राह्मणः। क्षत्रियश्चेन्नवमेऽहनि नवमं पिण्डं दत्वा द्वादशेऽहनि दशमम्पिण्डन्दद्यात्। वैश्यश्चेत्पञ्चदशेऽहनि शूद्रश्चेत्त्रिंशत्तमे इति विशेषः। तथैव एकैकमञ्जुलिमेकैकं जलपात्रम्। वृद्धिपक्षेत्वञ्जलीनां पात्राणाञ्च दिनसङ्ख्यया एकैकं वर्द्धयेत्। तत्र वाक्यम्। अमुकसगोत्रामुकशर्मन् प्रेतैष ते तिलतोयाञ्जलिर्मया दत्तस्तवोपतिष्ठताम्। अमुकसगोत्र प्रेत एतत्ते तिलतोयपात्रं मया दत्तन्तवोपतिष्ठताम्। सद्यः शौचपक्षे त्वेकस्मिन्दिन एव क्रमेण दशावयवपूरकान् पिण्डान् तथा पञ्चपञ्चाशत्तोयाञ्जलीन् पञ्चपञ्चाशत्तोयपात्राणि च दद्यात्। त्र्यहाशौचपक्षे तु प्रथमदिने त्रीन् पिण्डान् षडञ्जलीन् षट् पात्राणि च दद्यात्। द्वितीयदिने चतुरः पिण्डान् द्वाविंशत्यञ्जलीन् द्वाविंशति पात्राणि तृतीयदिने पुनस्त्रीन् पिण्डान् सप्तविंशत्यञ्जलीन् सप्तविंशतिपात्राणि च दद्यात्। यतः स्मरन्ति। प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः। द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा ॥ त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्तत इति ॥ केचित्तु प्रथमेऽह्नि एकं पिण्डमेकमञ्जुलिमेकं पात्रम् द्वितीयदिने चतुरः पिण्डान् चतुर्दशाञ्जलीन् चतुर्द्दशपात्राणि तृतीयदिने पञ्चपिण्डान् चत्वारिंशदञ्जलीन् चत्वारिंशत्पात्राणीति मन्यन्ते। एतत्प्रेतकृत्यकरणानन्तरन्न पुनः स्नायात् स्मरणाभावात्। पिण्डैरवयवपूरणम् ॥ यथा ॥ शिरः प्रथमेन, कर्णाक्षिनासिका द्वितीयेन, गलांसभुजवक्षांसि तृतीयेन, नाभिलिङ्गगुदानि चतुर्थेन, जानुजङ्घापादाः पञ्चमेन, सर्वमर्माणि षष्ठेन, नाडिकाः सप्तमेन, लोमान्यष्टमेन, वीर्यन्नवमेन, शरीरपूर्णत्वन्दशमेनेति। एतत् प्रेतनिर्हरणादिकं यतिव्यतिरिक्तानां त्रयाणामाश्रमिणां कुर्यात्। यतेस्तु न किञ्चित्। तथाच स्मृतिः ॥ त्रया-

णामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः । यतेः किञ्चिन्न कर्तव्यं न चान्येषां करोति स इति ॥ तथा एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् ॥ न कुर्यात्पार्वणादन्यद् ब्रह्मीभूताय भिक्षवे ॥ अहन्येकादशे प्राप्ते पार्वणन्तु विधीयत इति ॥ ब्रह्मचारी तु आचार्योपाध्यायपितृव्यतिरिक्तानां प्रेतानां निर्हरणादिकन्न कुर्यात् । यथाह मनुः । आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् । समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेदिति । तथा आचार्यपितृपाध्यायान्निर्हृत्यापि व्रती व्रती शकटान्नं न चाश्नीयान्नैव तैः सह संविशेदिति । यदि मोहात्करोति तदा ब्रह्मचर्यव्रताच्च्यवते पुनरुपनयनेन शुध्यति । तथास्थिसञ्चयनं ब्राह्मणस्य चतुर्थेऽहनि, क्षत्रियस्य पञ्चमे, वैश्यस्य षष्ठे, शूद्रस्यैकादशेऽहनि कुर्यात् । त्र्यहाशौचे द्वितीयेऽहनि सर्वेषाम्, सद्यःशौचे पुनर्दाहानन्तरमेव । तत्रास्थिसञ्चयननिमित्तमेकोद्दिष्टश्राद्धं विधाय पुष्पधूपदीपनैवेद्यानि सम्भृत्य ॐ क्रव्यादमुखेभ्यो देवेभ्यो नम इति मन्त्रेणार्घादिना पूजाङ्कुर्यात्, श्मशाने ततो नमः क्रव्यादमुखेभ्यो देवेभ्य इति वलिदानम् । तत्र मन्त्रः । देवा येऽस्मिन् श्मशाने स्युर्भगवन्तः सनातनाः । तेऽस्मत्सकाशाद् गृह्णन्तु बलिमष्टाङ्गमक्षयम् ॥ प्रेतस्यास्य शुभाँल्लोकान्प्रयच्छन्त्वपि शाश्वतान् । अस्माकं चायुरारोग्यं सुखं च ददताक्षयमिति ॥ एवं बलिन्दत्वा विसर्ज्जयेत् । ततोऽपसव्यं कृत्वा पलाशवृन्तेनास्थीनि परिवृत्याङ्गुष्ठकनिष्ठाभ्यामादाय पलाशपुटे धारयति । तत्र शमीशैवालं कर्दमं च धारयति । ततो घृतेनाक्तसर्वौषधीमिश्राण्यस्थीनि दक्षिणपूर्वायतान् यवाकारान् कर्षून् खात्वा तत्र कुशानास्तीर्य हरिद्रया पीतवस्त्रखण्डमावृत्य तत्र वक्ष्यमाणमन्त्रेण निक्षिपेत्, ॐ वाचा मनसा आर्तेन ब्रह्मणा त्रय्या विद्यया पृथिव्या मक्षिकायामपाꣳरसेन निवपाम्यसाविति मन्त्रेण, असौ स्थाने प्रेतनामादेशः । ततः कुम्भे तूष्णीन्निधाय तं कुम्भमरण्ये वृक्षमूले वा भूमौ खात्वा धारयेत् । चितास्थितं भस्म तोये सर्वमेव प्रक्षिपेत्, चिताभूमिं च गोमयेन विलिप्य तत्र तेनैव पूर्वोक्तबलिमन्त्रेण बलिन्दद्यात् । तं च बलिं क्षीरेणाभ्यज्य देवता विसर्जयेत् । चिताभूमिच्छादनार्थं तत्र वृक्षं पट्टकं वा कारयेत् । सभाविश्रामार्थं काष्ठपाषाणविन्यासविशेषः । पट्टकः पट्टहर इति कान्यकुब्जे प्रसिद्धः लोकाचारादेव कुड्यं वा । ततः, कदाचिदस्थिकुम्भमुत्थाप्यादाय तीर्थं गच्छेत् । अस्थीनि मातापितृवंशजानां नयन्ति गङ्गामपि ये कदाचित् । सद्बान्धवोऽस्यापि दयाभिभूतास्तेषां च तीर्थानि फलप्रदानि ॥ ततश्च गङ्गां गत्वा स्नात्वा पञ्चगव्येनास्थीनि सिक्त्वा हिरण्यमध्वाज्यतिलैश्च संयोज्य

ततो मृत्पिण्डपुटे निधाय दक्षिणां दिशं पश्यन् नमोस्तु धर्मायेति वदन् जलं प्रविश्य स मे प्रीतोऽस्तु इत्यभिधाय गङ्गाम्भसि प्रक्षिप्य जलादुत्तीर्य सूर्यमवेक्ष्य विप्रमुख्याय यथाशक्ति दक्षिणां दद्यात् । एवं कृते प्रेतक्रियाकर्त्तोः स्वर्गः स्यात् । तथा चोक्तम् । विगाह्य गङ्गां समियाय तोयमिहास्थिराशिं सकलैश्च गव्यैः । हिरण्यमध्वाज्यतिलैस्तु युक्तं ततस्तु मृत्पिण्डपुटे निधाय ॥ यस्यान्दिशि प्रेतगणोपगूढो विलोकयंस्तां सलिले क्षिपेत्तम् । उत्तीर्य दृष्ट्वा रविमात्मशक्त्या सुदक्षिणां मुख्यद्विजाय दद्यात् ॥ एवं कृते प्रेतपुरःस्थितस्य स्वर्गे गतिः स्याच्च महेन्द्रतुल्या ॥ क्षीणेषु पुण्येष्वपतन्दिविष्ठा नैवं व्युदस्य च्यवनं द्युलोकात् ॥ यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति । तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ॥ तथा यमः ॥ गङ्गातोयेषु यस्यास्थि प्लवते शुभकर्मणः । न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥ गङ्गातोयेषु यस्यास्थि नीत्वा सङ्क्षिप्यते नरैः । युगानान्तु सहस्राणि तस्य स्वर्गगतिर्भवेत् ॥ मातुः कुलं पितृकुलं वर्जयित्वा नराधमः । अस्थीन्यन्यकुलोत्थस्य नीत्वा चान्द्रायणाच्छुचिः ॥ एतच्च द्रव्यादिलोभेन नयतो न श्रेयोर्थिनः ॥ अथ साग्नेः पत्नी यदि जीवद्भर्तृका म्रियेत तदा केचिद्देशाचारात्क्षौरन्नाहुः । अन्यो विधिः सर्वोप्युक्तो भवति भर्तरि मृते यदि म्रियेत तदा अरण्यन्तरं सम्पाद्य ततो निर्मन्थ्येनाग्निना पात्रैर्विना तां दहेत् । तदलाभे लौकिकाग्निना । एवं पश्चान्मृतस्य पुंसो भवति । अन्वारोहणे तु पृथगाहुतिस्तन्मुखे इति विशेषः । पात्रासादनन्तु यजमानदेह एव, अथ यदि साग्नेः शवस्य दाहे क्रियमाणे वृष्ट्याद्युपघातेनाग्निनाशेऽर्द्धदग्धदेहशेषं वृष्टौ शान्तायामर्द्धदग्धारणी निर्मथ्य तदलाभेऽर्द्धदग्धकाष्ठं निर्मथ्य तदलाभे अश्वत्थादिपवित्रकाष्ठमथनोत्थेनाग्निना पुनर्दहेत् । अथ प्रोषिते तु मृतेऽग्निहोत्रिणि तदस्थीन्यानीयोक्तविधिना त्रेतया पुनर्दहेत् । अस्थ्नामप्यलाभे षष्ठ्यधिकत्रिशतमितपलाशवृन्तान्युच्छित्य कृष्णसारचर्मणि पुरुषाकारेण प्रसारिते तदुपरि पुरुषाकारं प्रसार्य तत्र पलाशवृन्तानां चत्वारिंशता शिरः दशभिर्ग्रीवा त्रिंशता उरः विंशत्योदरम् शतेन भुजद्वयम् दशभिर्हस्ताङ्गुलीः षड्भिर्वृषणौ चतुर्भिः शिश्नम् शतेनोरुद्वयम् त्रिंशता जानुनी जङ्घे च दशभिः पादाङ्गुलीः परिकल्प्योर्णासूत्रेण सम्यग्बध्वा तेनैव मृगचर्मणा संवेष्ट्य ऊर्णासूत्रेणैव वध्वा यवपिष्टजलेन सम्प्रलिप्य मन्त्रपूर्वकं पूर्ववत्पात्रैर्दहेत् । एवं पर्णशरे दग्धे त्रिरात्रमशुचिर्भवेत् । द्वितीयेऽहनि तु तदस्थ्नां वृन्तरूपाणां दग्धानां सञ्चयनम् । एवं मृतबुद्ध्या पर्णशरे दग्धे तस्य दैवात्पुनरागमने पुनराधानं कृत्वा आयुष्यार्थामिष्टिं

कुर्यात् । पर्णशरदाहानन्तरन्तु तदस्थ्नां लाभेऽर्द्धदग्धकाष्ठानामलाभे त्वस्थ्नां गङ्गाजले प्रक्षेपः । बुद्धिपूर्वमात्मघातिनां तु व्यामोक्तनारायणबल्यनन्तरं संस्कारः । एवं साग्नेर्दहनदिनाग्निरग्नेर्मरणदिनाद्गणना । अथवा प्रेतदेहानां रजस्वलादिस्पर्शे मृन्मये कुम्भे पूर्णजले पञ्चगव्यं प्रक्षिप्य कृतस्नानं शवं तेनोदकेनाभिषिञ्चेत् । आपोहिष्ठेत्यादिभिरब्लिङ्गैर्मन्त्रैर्वामदेव्यादिभिर्ऋग्भिस्तिसृभिरभिषिञ्चेत् । एवं सूतिकां रजस्वलां चापि एकादशे चतुर्थे वाहनि प्रायश्चित्तं कृत्वा पञ्चगव्येन प्रक्षाल्य वाससा संवेष्ट्य उक्तविधिना देहेदिति ॥ एवन्तावत्प्रेतायोद्दिश्य गामप्येके घ्नन्तीति सूत्रकृता एकादशेऽहनि प्रेतमुद्दिश्य गोपशवालम्भोऽभिहितस्तत्प्रसङ्गादन्येऽपि यावन्तोऽर्घ्यपशवस्तत्कर्माभिधातुमिदमारभ्यते ॥ ॥ १० ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ पशुश्चेदाप्लाव्यागामग्रेणाग्नीन्परीत्य पलाशशाखान्निहन्ति ॥ १ ॥ परिव्ययणोपाकरणनियोजनप्रोक्षणान्यावृता कुर्याद्यच्चान्यत् ॥ २ ॥ परिपशव्ये हुत्वा तूष्णीमपराः पञ्च ॥ ३ ॥ वपोद्धरणं चाभिघारयेद्देवताञ्चादिशेत् ॥ ४ ॥ उपाकरणनियोजनप्रोक्षणेषु स्थालीपाके चैवम् ॥ ५ ॥ वपाᳬहुत्वाऽवदानान्यवद्यति ॥ ६ ॥ सर्वाणि त्रीणि पञ्च वा ॥ ७ ॥ स्थालीपाकमिश्राण्यवदानानि जुहोति ॥ ८ ॥ पश्ववद्गन्दक्षिणा ॥ ९ ॥ यद्देवते तद्दैवतं यजेत्तस्मै च भागं कुर्यात्तं च ब्रूयादिममनुप्रापयेति ॥ १० ॥ नद्यन्तरे नावं कारयेन्नवा ॥ ११ ॥ ॥ ११ ॥

कर्कः ॥ पशुश्चेदाप्लाव्यागां, पशुश्चेत् क्रियेत गोपशुवर्जमाप्लाव्य स्नापयित्वा नियुज्यते । अग्रेणाग्नीन्परीत्य पलाशशाखान्निहन्ति । निखनन्ति । असौ यूपकार्ये निखन्यते । अतश्चाज्यासादनोत्तरकालन्निखननम् । परिव्ययणोपाकरणनियोजनप्रोक्षणान्यावृता कुर्याद्यच्चान्यत् । किमन्यदिति पशुसंस्कारकं नियोजनप्रोक्षणपशुसमञ्जनपर्यग्निकरणादिकन्तच्च कर्त्तव्यम् । आवृच्छब्दः क्रियामात्रवाची अतश्च तन्मन्त्रो निवर्तते । परिपशव्ये हुत्वा तूष्णीमपराः पञ्च जुहोतीति सूत्रशेषः । वपोद्धरणं चाभिघारयेत् । उद्धृत्य वपां देवतां चातिदिशेदुपाकरणनियोजनप्रोक्षणेषूपाकरणादिषु । स्थालीपाके चैवम् । देवतामादिशेत् । वपाᳬ हुत्वाऽवदानान्यवद्यति । सर्वाणि त्रीणि पञ्च वा । वपां हुत्वा

अवदानग्रहणे उच्यमाने पशुपुरोडाशो निरस्तो भवति । अत आह । वपां हुत्वाऽवदानान्यवद्यति । असर्वपक्षे तत एव स्विष्टकृत् । ततोऽभ्यङ्गश्च देयः । स्थालीपाकमिश्राण्यवदानानि जुहोति । तस्य चाज्येनैव सहश्रपणम् । पशुवङ्गन्दक्षिणा । पूर्णपात्रं वरोवेति निवर्तते । यद्देवते तद्दैवतं यजेत् । यद्देवत्य ऋत्विग्विशेषस्तद्देवत्य एव पशुरालभ्यते ऽर्घपशुषु । तस्मै च भागं कुर्यात्तं च ब्रूयादिममनुप्रापयेति । तस्मै ऋत्विग्विशेषाय भागं कुर्यात् । नद्यन्तरे नावं कारयेन्न वा । यदुक्तं प्रेतायोद्दिश्य गामप्येके घ्नन्तीति तस्यैव तत्प्रदेशविधानम् । नवश्राद्धं नावमुच्यते । नद्यन्तरे नावं कारयेदित्यनेन नवश्राद्धार्थः पशुरुपक्रान्तः । नवश्राद्धशब्देन प्रथमैकादशाहिकं श्राद्धमुच्यते । तेन प्रसङ्गेन नैमित्तिकं पश्वन्तरमभिधातुमिदमाह ॥ ११ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ प्रेतायोद्दिश्य गामप्येके घ्नन्तीति शाखापश्वभिधानम् । तत्प्रसङ्गेन यावन्तो ऽर्घपशवस्तत्कर्मव्याचिख्यासयेदमभिधीयते । स्मार्तः पशुश्चेत्क्रियते तदा ऽगाम् गोपशुवर्जमाप्लाव्य स्नापयित्वा नियुज्यते । कुत्रेत्यपेक्षायामाह । परीत्य प्रादक्षिण्येन गत्वा अग्रेणाग्नीन् अग्निपूर्वभागे निहन्ति निखनन्ति । सा च यूपार्थे । अतश्चाज्यासादनोत्तरकालन्निखननम् । परिव्ययणं त्रिगुणरशनया शाखावेष्टनम् । उपाकरणान्तरेण पशोर्नियोजनन्द्विगुणरशनया शृङ्गयोर्बद्धस्य पशोः शाखायाम्बन्धनम् ॥ आवृता पशुप्रकरणोक्तेतिकर्तव्यतया विनामन्त्रम् । आवृद्ग्रहणाद्यच्च पशुसंस्कारकं पशुसमञ्जनपर्यग्निकरणादि तदप्यावृता कार्यम् । परिपशव्ये सञ्ज्ञपनस्याद्यन्तयोराहुती द्वे स्वाहा देवेभ्यः देवेभ्यः स्वाहेति हुत्वा ऽपराः पञ्च जुहोतीति शेषः । उद्धृत्य वपाभिघारणम् । स्थालीपाकेष्वेवन्देवतादेशः । वपां हुत्वाऽवदानग्रहणे उच्यमाने पशुपुरोडाशो निरस्तो भवति अत आह । वपां हुत्वेति । असर्वपक्षे तत एव स्विष्टकृत् । ततोऽभ्यङ्गश्च देयः, स्थालीपाकमिश्राणीति ग्रहणात्तस्याज्येन सह श्रपणम् । पश्वङ्गन्दक्षिणेत्यत्र पूर्णपात्रो वरो वेति वर्तते । यद्देवत्य ऋत्विग्विशेषस्तद्देवत्यः पशुरालभ्यते ऽर्घपशुषु । तस्यार्घस्य देवतैव देवता यस्य यागस्य स तद्देवत्यस्तस्मिन् । तद्दैवतन्तामेव देवतां यजेदित्यर्थः । तस्मै ऋत्विग्विशेषाय । नद्यन्तर इति यदुक्तम्प्रेतायोद्दिश्य गामप्येके घ्नन्तीति तस्यैतत्प्रदेशविधानम् । नवश्राद्धार्थन्नावमुच्यते नद्यन्तरे नावङ्कारयेदित्यनेन नवश्राद्धार्थः पशुरुपक्रान्तः । नवश्राद्धशब्देन प्रथमैकादशाहिकश्राद्धमुच्यते ॥ ॥ ११ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ पशुश्चेदाप्लाव्याग्रेणाग्नीन्परीत्य पलाशशाखान्निहन्ति । चेद्यदि स्मार्तः पशुः क्रियते तदा तं पशुं गोपशुवर्जमाप्लाव्य स्नापयित्वा नियुञ्ज्यात् गोपशौ आप्लाव्याभावः पशुनियोजनं च यूपे श्रूयते, अस्य तु कुत्रेत्यपेक्षायामाह अस्य अग्रेण पुरस्तात् अग्नीन् वितानपक्षे गार्हपत्यादीन् आवसथ्यपक्षे एकमग्निं परीत्य प्रादक्षिण्येन गत्वा पलाशस्य वृक्षावृक्षस्य शाखां निहन्ति निखनन्ति । आसादनानन्तरं यूपकार्यत्वाच्छाखायाः । परिव्ययणोपाकरणनियोजनप्रोक्षणान्यावृता कुर्याद्यच्चान्यत् ॥ परिव्ययणन्त्रिगुणरशनया शाखायाः, उपाकरणं तृणेन पशोः स्पर्शनं, नियोजनं द्विगुणरशनया अन्तराशृङ्गबद्धस्य पशोः पलाशशाखायां बन्धनम्, प्रोक्षणम् प्रोक्षणीभिरद्भिः पशोरासेचनम् एतानि परिव्ययणोपाकरणनियोजनप्रोक्षणानि आवृता पशुप्रकरणविहितेतिकर्तव्यतया मन्त्रवर्जितया क्रियया कुर्यात् विदधीत, न केवलमेतान्येव अन्यदपि यत्पशुसंस्कारकम्पशुसमञ्जनम् पर्यग्निकरणादिकं तदपि तथैव कुर्यात् ॥ परिपशव्ये हुत्वा तूष्णीमपराः पञ्च ॥ पशुसञ्ज्ञपनं परि उभयतः हूयेते ये द्वे आज्याहुती स्वाहादेवेभ्यः देवेभ्यः स्वाहेति ते परिपशव्ये ते हुत्वा तूष्णीम्मन्त्रवर्जम् अपरा अन्याः पञ्च आज्याहुतीर्जुहुयात् । वपोद्धरणं चाभिघारयेत् ॥ पशोर्वपाया उद्धरणं यथोक्तं कृत्वा तां वपां अभिघारयेत् उद्धृत्यैव ॥ देवताञ्चादिशेदुपाकरणनियोजनप्रोक्षणेषु ॥ उपाकरणं च नियोजनं च प्रोक्षणं च उपाकरणनियोजनप्रोक्षणानि तेषु देवतां यद्दैवत्यः पशुर्भवति तां देवतामादिशेत्, अमुष्मै त्वा उपाकरोमि अमुष्मै त्वां नियुनज्मि अमुष्मै त्वा जुष्टं प्रोक्षामीति । स्थालीपाके चैवम् । स्थालीपाके चरौ च एवन्देवतामादिशेत् । चरोरुपाकरणनियोजनाभावात्तण्डुलप्रोक्षणे अमुष्मै त्वा जुष्टं प्रोक्षामीति देवतोद्देशः ॥ वपां हुत्वाऽवदानान्यवद्यति सर्वाणि त्रीणि पञ्च वा ॥ वपां यथोक्तेन विधिना हुत्वा अवदानानि पशोः हृदयादीनि अवद्यति छिनत्ति, कति सर्वाणि हृदयम् जिह्वाम् क्रोडम् सव्यबाहुम् पार्श्वद्वयम् यकृत् वृक्कौ गुदमध्यम् दक्षिणां श्रोणिमित्येकादश प्रधानार्थानि, दक्षिणबाहुं गुदतृतीयानिष्टम् सव्यां श्रोणिमिति त्रीणि स्विष्टकृतानि । यद्वा त्रीणि हृदयम् जिह्वां क्रोडम् इति, अथवा पञ्च हृदयजिह्वाक्रोडसव्यबाहुदक्षिणपार्श्वानि, अत्र पञ्चावदानपक्षे त्र्यवदानपक्षे वा तेभ्य एव स्विष्टकृद्यागः । वपां हुत्वावदानान्यवद्यतीति वदता सूत्रकृता पशुपुरोडाशो निरस्तः ॥ स्थालीपाकमिश्राण्यवदानानि जुहोति ॥ स्थालीपाकेन चरुणा मिश्राणि संयुक्तान्यवदानानि हृदयादीनि जुहोति स्थाली-

पाकस्य च मिश्रणं वचनात्सहैव पाकः । पश्वङ्गन्दक्षिणा । पशोः अङ्गम्पश्वङ्गम् अस्य पशुबन्धस्य दक्षिणा । यद्दैवते तद्दैवतं यजेत्तस्मै च भागं कुर्यात्तं च ब्रूयादिममनुप्रापयेति । एतदर्घ्यपशून्प्रकृत्य कर्माभिहितं, तत्र यस्यार्घ्यस्य आचार्यादेर्या देवता तद्दैवतः स पशुयागस्तस्मिंस्तद्दैवते यागे तद्दैवतम् अर्घ्यदैवतं बृहस्पत्यादिकं च यजेत् । तत्रार्घ्यदेवता, आचार्यस्य बृहस्पतिः, ब्रह्मणश्चन्द्रमाः, उद्गातुः पर्जन्यः, अग्निर्होतुः, अश्विनावध्वर्योः, विवाह्यस्य प्रजापतिः, राज्ञ इन्द्रः, प्रियस्य मित्रः, स्नातस्य विश्वेदेवा इन्द्राग्नी वेति । तस्मै चार्घ्यायाचार्यादये भागं पशोः किञ्चिदङ्गङ्कुर्यात् विभजेत् । तं चार्घ्यमाचार्यादिकम् इममनुप्रापयेति ब्रूयात् । नद्यन्तरे नावङ्कारयेन्नवा ॥ इदानीं प्रेतोद्देशेन गामप्येके घ्नन्तीति यदुक्तन्तत्प्रदेशविधानार्थमाह । नद्यन्तरे नद्या अन्तरे द्वीपे नावन्नवम् एकादशाहश्राद्धन्तदर्थमिमन्नावं गोपशुं कारयेत् अनुतिष्ठेत् । कोऽर्थः प्रेतोद्देशेन गोपशुमेकादशेऽह्नि नद्यन्तरे आलभेत न वा आलभेत इतिसूत्रार्थः । एवन्तावन्नद्यन्तरे नावं कारयेदित्यनेन नवश्राद्धप्रयोजनपशुरुक्तस्तत्प्रसङ्गान्नैमित्तिकं पश्वन्तरं व्याख्यातुमाह ॥

मूलम् ॥ अथातोऽवकीर्णिप्रायश्चित्तम् ॥ १ ॥ अमावास्याया-ञ्चतुष्पथे गर्दभम्पशुमालभते ॥ २ ॥ निर्ऋतिम्पाकयज्ञेन यजेत ॥ ३ ॥ अप्स्ववदानहोमः ॥ ४ ॥ भूमौ पशुपुरोडाशश्रपणम् ॥ ५ ॥ तां त्वचिम्परिदधीत ॥ ६ ॥ ऊर्द्ध्वबालामित्येके ॥ ७ ॥ संवत्सरं भिक्षाचर्यं चरेत्स्वकर्म परिकीर्तयन् ॥ ८ ॥ अथापरमाज्याहुती जुहोति ॥ कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा । कामाभिद्रु*ग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहेति ॥ ९ ॥ अथोपतिष्ठते, सम्मा सिञ्चन्तु मरुतः समिन्द्रः सम्बृहस्पतिः । संमायमग्निः सिञ्चतु प्रजया च धनेन चेति ॥ १० ॥ एतदेव प्रायश्चित्तम् ॥ ११ ॥ ॥ १२ ॥

कर्कः ॥ अथातोऽवकीर्णिप्रायश्चित्तम् । व्याख्यास्यत इति सूत्रशेषः । अवकीर्णी ब्रह्मचारी यः स्त्रियमुपैति सोऽनेनाधिक्रियते । अमावास्यायां चतुष्पथे

* दुग्धोऽस्म्यभिदुग्धोस्मीत्यपि पाठः ॥

**गर्दभम्पशुमालभते निर्ऋतिम्पाकयज्ञेन यजेत** ॥ अन्योऽपि हविर्यज्ञरूपोऽवकीर्णी पशुरस्ति अतः पाकयज्ञेनेत्युक्तम् । **अप्स्ववदानहोमः** । अग्न्यपवादोऽयमवदानमात्रस्य । आघारादि त्वग्नावेव । **भूमौ पशुपुरोडाशश्रपणम्** । शाखापशौ पुरोडाशाभावादिति विधानम् । तस्य चाज्येन सह संस्कारानुष्ठानम् । **तां छविम्परिदधीतोर्द्ध्ववालामित्येके** । तामेव गर्दभच्छविं परिधत्ते । ऊर्द्ध्ववालामित्येके । बालशब्देन पुच्छमभिधीयते । ऊर्द्ध्ववालां तिर्यक्वालां वेति विकल्पः । **संवत्सरं भिक्षाचर्यं चरेत्स्वकर्म परिकीर्तयन्** ॥ निरुक्तं वा एनः कनीयो भवतीति श्रुतेः । **अथापरम्** । प्रायश्चित्तान्तरं व्याख्यास्यत इति सूत्रशेषः । **आज्याहुती जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मिकामकामाय स्वाहा । कामाभिदुग्धोऽस्म्यभिदुग्धोऽस्मिकामकामाय स्वाहा** । इत्यागन्तुत्वादाहुतिद्वयं चतुर्दशाहुतिकान्ते भवति । **अथोपतिष्ठते सम्मासिञ्चन्तु मरुतः समिन्द्रः सम्बृहस्पतिः । सम्मायमग्निः सिञ्चतु प्रजया च धनेन च** । इत्यनेन ॥ १२ ॥

**जयरामः** ॥ एतत्पशुप्रसङ्गेन पश्वन्तरन्नैमित्तिकमभिधातुमाह अथेत्यादि । वक्ष्यत इति सूत्रशेषः । अवकीर्णी ब्रह्मचारी सन् यः स्त्रियमुपैति सो ऽनेनाधिक्रियते । पाकयज्ञेन यजेतेत्यनेनान्योपि हविर्यज्ञरूपो ऽवकीर्णः पशुरस्तीत्युक्तम् । अप्स्वित्ययमग्न्यपवादो ऽवदानमात्रस्य । आघारादि त्वग्नावेव । भूमौ पश्विति शाखापशौ पुरोडाशाभावाद्विधानम् । तस्य चाज्येन सह संस्कारानुष्ठानम् । तामेव गर्दभस्य छविं त्वचम्परिदधीत । ऊर्ध्ववालान्तिर्यग्वालां वेति विकल्पः । बालशब्देन पुच्छमभिधीयते । स्वकर्म अवकीर्णित्वम् । निरुक्तं वा एनः कनीयो भवतीति श्रुतेः । अथापरम्प्रायश्चित्तान्तरं वक्ष्यत इति सूत्रशेषः । आज्याहुती द्वे जुहोति । कामावकीर्णोऽस्मि कामाभिद्रुग्धोस्मीत्येताभ्याम्मन्त्राभ्याम् । एते आहुती आगन्तुत्वाच्चतुर्दशाहुत्यन्ते भवतः । अथ मन्त्रार्थः । तत्र द्वयोः प्रजापतिरनुष्टुप् काम आज्यहोमे० । हे काम क्षोभक अहङ्कामेन त्वत्कृतक्षोभेण अवकीर्णः अभिभूतो ऽस्मि, अतो ऽवकीर्णः क्षतव्रतो ऽस्मि । अतः कामाय शोधकत्वेन हविः कामयमानाय तुभ्यं स्वाहा सुहुतमस्तु । एवमभिद्रुग्धो हिंसितः, शिष्टं समानम् । अथोपस्थानमन्त्रार्थः । तत्र प्रजापतिरनुष्टुप् लिङ्गोक्ता उपस्थाने० । मरुतो देवा मा मां सम्यक् सिञ्चन्तु अभीष्टप्रदानेन समर्द्धयन्तु प्रजया च पुत्रादिरूपया तथा धनेन धर्मानुकूलसमृद्ध्या च, सकारात्सिञ्चन्तु । तथेन्द्रः सम्यक् सिञ्चत्वित्युत्तरत्रापि योज्यम् । एतदेव प्रायश्चित्तम् । प्रायो नाम तपः प्रोक्तञ्चित्तन्निश्चय उच्यते । तपोनिश्चययुग्वृत्तम्प्रायश्चित्तमितीरितम् ॥ १२ ॥

हरिहरः ॥ **अथातोऽवकीर्णिप्रायश्चित्तम्** ॥ अथेदानीं यतः पशुरभिहितः अतस्तत्प्रसङ्गात् अवकीर्णिनः स्खलितब्रह्मचर्यस्य ब्रह्मचारिणः प्रायश्चित्तं शुद्धिसम्पादकं कर्म वक्ष्यत इति सूत्रशेषः ॥ **अमावास्यायां चतुष्पथे गर्दभम्पशुमालभते** ॥ यो ब्रह्मचारी सन् स्त्रीगमनादवकीर्णी भवति स पुनः प्रायश्चित्तं चिकीर्षुरमावास्यायां कस्याञ्चित् कृष्णपञ्चदश्यां चतुष्पथे चत्वारः पन्थानो यत्र भूभागे स चतुष्पथः तस्मिन् देशे गर्दभं रासभं पशुमालभते सञ्ज्ञपयति । **निर्ऋतिं पाकयज्ञेन यजेत** ॥ निर्ऋतिन्देवतां पाकयज्ञेन पाकयज्ञविधानेन पशुना यजेत । अत्रावकीर्णिनो हविर्यज्ञरूपोऽन्योपि पशुरस्ति तेन हेतुना पाकयज्ञेन यजेतेत्युक्तम् ॥ **अप्स्ववदानहोमः** ॥ अप्सु जले अवदानानामेव होमः देवतोद्देशेन प्रक्षेपो भवति नत्वग्नौ अवदानग्रहणात्, आघारादीनां लौकिकाग्नावेव होमः ॥ **भूमौ पशुपुरोडाशश्रपणम्** ॥ भूमावेव न कपालेषु पुरोडाशस्य श्रपणम् पाको भवति, शाखापशौ पुरोडाशाभावात् इहापूर्वः पुरोडाशोऽर्थाद्विधीयते तस्य च संस्कार आज्येन सह क्रियते । **तां छविम्परिदधीतोर्द्धबालामित्येके संवत्सरं भिक्षाचर्यं चरेत्स्वकर्म परिकीर्तयन्** ॥ ताम् आलब्धस्य गर्दभस्य छविं कृत्तिम्परिदधीत प्रोर्णुवीत आच्छादयीतेति यावत्, एके आचार्याः ताम् ऊर्द्धबालाम् उपरिपुच्छाम् परिदधीतेति वर्णयन्ति, अपरे तिर्यग्बालाम् । ततश्च विकल्पः । गर्दभपश्वालम्भानन्तरं तच्छविम्परिदधानः संवत्सरं यावद्भिक्षाचर्यं चरेत्, किङ्कुर्वन् स्वकर्म स्वीयमवकीर्णित्वं परिकीर्तयन् सर्वतः प्रकथयन् अहमवकीर्णी भवति भिक्षां देहीत्येवमादिना । स्वकर्मपरिख्यापनङ्कुत इति चेत् निरुक्तं वा एनः कनीयो भवतीति श्रुतेः । **अथापरम्** । अथेदानीम् अपरमन्यत् प्रायश्चित्तान्तरमवकीर्णिनोऽभिधीयते तदाह ॥ **आज्याहुती जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा । कामाभिदुग्धोऽस्म्यभिदुग्धोऽस्मि कामकामाय स्वाहेति** ॥ कामावकीर्णोऽस्मि कामाभिदुग्धोऽस्मीत्येताभ्यां मन्त्राभ्यां प्रतिमन्त्रमेकैकाम् एवमाज्याहुती द्वे जुहोति । इदङ्कामायेति उभयत्र त्यागः । ते च द्वे आगन्तुत्वाच्चतुर्दशाहुत्यन्ते, आगन्तूनामन्ते निवेश इति न्यायात् । **अथोपतिष्ठते सम्मासिञ्चन्तु मरुतः समिन्द्रः सम्बृहस्पतिः । सम्मा ऽयमग्निः सिञ्चतु प्रजया च धनेन चेत्येतदेव प्रायश्चित्तम्** ॥ अथ होमानन्तरमुपतिष्ठते ऊर्द्धीभूय सम्मासिञ्चन्त्वित्यादिना मन्त्रेण लिङ्गोक्ता देवताः प्रार्थयते, संवत्सरमित्यत्राप्यनुवर्तते अतः

प्रतिदिनं पञ्चभूसंस्कारपूर्वकं लौकिकाग्निं स्थापयित्वा आघारादिस्विष्टकृदन्ताश्चतुर्दशाज्याहुतीर्हुत्वा कामावकीर्णोऽस्मि कामाभिद्रुग्धोस्मीत्येताभ्यां मन्त्राभ्यां प्रतिमन्त्रमाज्याहुतिद्वयं हुत्वा सम्मासिञ्चन्त्विति मन्त्रेणोपतिष्ठते संवत्सरं यावत्. एतदेव यदुक्तं गर्दभपश्वालम्भनरूपम् आज्याहुतिहोमात्मकं च तदवकीर्णिनः प्रायश्चित्तद्वयं विज्ञेयमिति सूत्रार्थः ॥ १२ ॥ * ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ अथातः सभाप्रवेशनम् ॥ १ ॥ सभामभ्येति सभाङ्गिरसि नादिर्नामासि त्विषिर्नामासि तस्यै ते नम इति ॥ २ ॥ अथ प्रविशति सभा च मा समितिश्चोभे प्रजापतेर्दुहितरौ सचेतसौ । यो मानविद्यादुपमासतिष्ठेत्सचेतनो भवतु शꣳसथे जन इति ॥ ३ ॥ पर्षदमेत्य जपेदभिभूरहमागमविराडप्रतिवाश्याः । अस्याः पर्षद ईशानः सहसा सुदुष्टरो जन इति ॥ ४ ॥ स यदि मन्येत क्रुद्धोऽयमिति तमभिमन्त्रयते, यात एषा रराट्या तनूर्मे*न्योः क्रोधस्य नाशनी । तान्देवा ब्रह्मचारिणो विनयन्तु सुमेधसः ॥ द्यौरहं पृथिवी चाहं तौ ते क्रोधन्नयामसि गर्भमश्वतर्यसहासाविति' ॥ ५ ॥ अथ यदि मन्येत द्रुग्धोऽयमिति तमभिमन्त्रयते तान्ते वाचमास्य आदत्ते हृदय आदधे यत्र यत्र निहिता वाक्तां ततस्तत आददे यदहं ब्रवीमि तत्सत्यमधरोमत्तांद्यस्वेति ॥ ६ ॥ एतदेव वशीकरणम् ॥ ॥ ७ ॥ ॥ १३ ॥ ॥ * ॥ ॥ * ॥

कर्कः ॥ अथातः सभाप्रवेशनमित्येवमादि यत्तत्सर्वन्निगदव्याख्यातमेव ।

इति श्री कर्कोपाध्यायकृतौ गृह्यभाष्ये तृतीयकाण्ड समाप्तम् ॥ * ॥

जयरामः ॥ सभाप्रवेशनम् । वक्ष्यतइतिसूत्रशेषः । तत्र सभाम्प्रति अभ्येति अभिमुखङ्गच्छति सभाङ्गिरसीत्यनेन मन्त्रेण । तस्यार्थः । तत्राङ्गिरा गायत्री सभा तत्प्रवेशने० । सह धर्मेण सद्भिर्वा भातीति सभा । तथा नादिर्नदनशीला नाम नाम्नासि । हे आङ्गिरसि आङ्गिरोदेवते बृहस्पत्यधिष्ठिते या त्विषिर्दीप्ता नाम प्रसिद्धम् असि । धर्मनिरूपणात् । तस्यै उक्तगुणवत्यै ते तुभ्यन्नमो ऽस्तु । अथ प्रवे-

* मन्यो, इत्यपि क्वचित्पाठः ॥

शनमन्त्रार्थः । तत्र प्रजापतिस्त्रिष्टुप् सभा समितिश्च प्रवेशने० । सभा च संसत् समितिश्च सङ्गरः ते उभे प्रजापतेर्ब्रह्मणो दुहितरौ पुत्र्यौ मा माम् अवतामिति शेषः । यत एते सचेतसौ शोभनज्ञानदात्र्यौ । अथ सभावचनं सभासदःप्रति । यः पुमान् मान्न विद्यात् मद्व्यवहारन्न जानीयात् स पुमान् मा माम् उपतिष्ठेत् उपासीत । ततो ऽसौ शंसथे सम्भाषणाय सचेतनः सुबुद्धिः वादकुशलइत्यर्थः । भवतु मत्प्रभावादित्याशंसा । पर्षदं सभामेत्यागत्य जपेदभिभूरहमिति मन्त्रम् । अस्यार्थः । तत्र प्रजापतिरनुष्टुप् पर्षत्सभोपस्थाने० । अभिभूः परेषामभिभवनशीलो ऽहम् आगम् आगतो ऽस्मि । किम्भूतः । अविराट् । विरुद्धतया राजते स विराट् रुद्धवीर्यः न विराट् अविराट् तथा अप्रतिवाशी प्रतिवादिशून्यः आःइत्यव्ययं सम्बुद्ध्यर्थम् । यद्वा अप्रतिवाश्या इति पर्षदो विशेषणम् अप्रतिक्षेपाया अस्याः पर्षदः सभाया ईशानः स्वामी स्वासु प्रजासु दुष्टरोऽपि स मयि सुजनः अस्त्विति शेषः । दुष्टरश्चोग्रः । समाधको यदि सभेशं क्रुद्धं जानीयात्तदा तमभिमन्त्रयते क्रोधापनोदाय यात एषेति मन्त्रेण । अस्यार्थः ॥ तत्र प्रजापतिरनुष्टुप् लिङ्गोक्ता क्रोधापनयने० । हे असौ अमुकनामन् सभेश ते तव रराटं ललाटं तत्र भवा रराट्या या क्रोधस्य तनूः शरीरम् तान्देवा इन्द्राद्याः ब्रह्मचारिणश्च सनकाद्या विनयन्तु अपनयन्तु कथम्भूतस्य क्रोधस्य*मन्योर्दीप्तस्य । किम्भूता देवाः । सुमेधसः स्वबुद्ध्या क्रोधमपाकर्तुं शक्ताः । किम्भूता तनूः नाशनी चतुर्वर्गस्येत्यर्थात् । एषा ललाटत्रिवलिरूपा । मन्त्राभ्यासेनात्मनोप्युत्कर्षमाह । द्यौराकाशरूपो ऽहमिति क्रोधावरकत्वमुक्तम् । पृथिवी च क्षितिरूपश्चाहमिति क्रोधाधारत्वेन स्वातन्त्र्यञ्चोक्तम् । अतस्तौ तत्स्वरूपो भूत्वा ते तव क्रोधन्नयामसि मन्त्रबलेनापनयामि । कथम् । यथा अश्वतरी गर्भपुष्टिमसहमाना अमार्गेण मुञ्चन्ती तथेति व्याख्येयम् । अथ साधको यदि मन्येतायं सभेशो द्रुग्धो द्रोहकामीति तदा तमभिमन्त्रयते तान्त इति मन्त्रेण । अस्यार्थः । तत्र प्रजापतिरनुष्टुप् ईशो वशीकरणे० । हे सभेश भवान् मद्द्रोहकारिणीं वाचम् आस्ये मुखे वर्तमानाम् आदत्ते उपक्रामति । तामहं ते तव हृदय एवादधे स्थापयामि । किञ्च । यत्र यत्र स्थाने वाक् वायुवशान्निहिता तान्ततस्ततः स्थानात् आददे मद्वश्याङ्करोमि । किञ्च । यदहम्ब्रवीमि तत्सत्यमस्तु । त्वञ्च मत् मत्तः अधरो नीचः । द्य अद्य इदानीं स्व भव ॥ अद्येत्यत्र वर्णलोपः । अधरउ इति छेदः । तत्र उ इति दार्ढ्यार्थम् । अतिशयेन

* हमन्यौ क्रोधयुक्त इत्यपि क्वचित्पाठः ॥

स्व भूयाः । यद्वा । तां मद्द्रोहकारिणीं वाचम् तव हृदय एव अतिशयेन दस्व अवखण्डय । शिष्टं समानम् ॥ ॥ १३ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ अथातः सभाप्रवेशनम् ॥ अथावसथ्याग्निसाध्यकर्मविधानानन्तरं साधारणानि कर्माणि अनुविधेयानि यतः, अतो हेतोः सभाप्रवेशनङ्कर्म वक्ष्यत इति सूत्रशेषः ॥ सभामभ्येति सभाङ्गिरसि नादिर्नामासि त्विषिर्नामासि तस्यै ते नम इति ॥ यदा द्विजः सभाङ्गच्छति तदा सभाम् अभि आभिमुख्येन एति गच्छति। केन मन्त्रेण सभाङ्गिरसीत्यादिना मन्त्रेण ॥ अथ प्रविशति सभा च मा समितिश्चोभे प्रजापतेर्दुहितरौ सचेतसौ । यो मा न विद्यादुप मा स तिष्ठेत्सचेतनो भवतु शᳫँसथे जन इति ॥ अथाभिमुखमेत्य सभा च मासमित्यादिना मन्त्रेण सभां प्रविशति। परिषदमेत्य जपेत्। "अभिभूरहमागमविराडप्रतिवाश्याः । अस्याः पर्षद ईशानः सहसा सुदुष्टरो जनइति। परिषदं सभां एत्य प्रविश्य अभिभूरहमिति मन्त्रञ्जपेत् । स यदि मन्येत क्रुद्धोऽयमिति तमभिमन्त्रयते यात एषा रराट्या तनूर्मन्योः क्रोधस्य नाशनी ॥ तान्देवा ब्रह्मचारिणो विनयन्तु सुमेधसः ॥ द्यौरहं पृथिवी चाहं तौ ते क्रोधं नयामसि गर्भमश्वतर्यसहामाविति ॥ स सभाम्प्रविष्टः यदि चेन्मन्येत जानीयात् अयं सभापतिः क्रुद्ध इति तं क्रुद्धमभिलक्षीकृत्य क्रोधापनयनाय मन्त्रयते यात एषेत्यादिना मन्त्रेण । असाविति क्रुद्धस्य नाम ॥ अथ यदि मन्येत द्रुग्धोऽयमिति तमभिमन्त्रयते तान्ते वाचमास्य आदत्ते हृदय आदधे यत्र यत्र निहिता वाक् तां ततस्तत आददे यदहं ब्रवीमि तत्सत्यमधरो मत्तां दस्येति॥ अथ यदि द्रुग्धो द्रोहकर्ताऽयमिति मन्येत तर्हि तमभिमन्त्रयते तान्तेवाचमित्यादिमन्त्रेण। एतदेव अवशस्य वशीकरणम् । इति सूत्रार्थः ॥ ॥ १३ ॥ ॥ * ॥

मूलम् ॥ अथातो रथारोहणम् ॥ १ ॥ युङ्क्तिरथं सम्प्रेष्य युक्त इति प्रोक्ते साविराडित्येत्य चक्रे अभिमृशति ॥ २ ॥ रथन्तरमसीति दक्षिणम् ॥ ३ ॥ बृहदसीत्युत्तरम् ॥ ४ ॥ वामदेव्यमसीति कूबरीम् ॥ ५ ॥ हस्तेनोपस्थमभिमृशति अङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसञ्चरन्तम्। दूरेहेतिरिन्द्रियवान्पतत्रि ते नोऽग्नयः पप्रयः पारयन्त्विति ॥ ६ ॥ नमो माणिचरायेति दक्षिणन्धुर्यम्प्राजति ॥ ७ ॥ अप्राप्य देवताः प्रत्यवरोहेत्स-

म्प्रति ब्राह्मणान्मध्ये गा अभिक्रम्य पितॄन् ॥ ८ ॥ न स्त्रीब्र-
ह्मचारिणौ सारथी स्याताम् ॥ ९ ॥ मूहूर्तमतीयाय जपेदि-
हरतिरिहरमध्वम् ॥ १० ॥ एके मास्त्विहरतिरिति च ॥ ११ ॥
स यदि दुर्बलो रथः स्यात्तमास्थाय जपेदयं वामश्विना
रथो मा दुर्गे मास्तरोरिषदिति ॥ १२ ॥ स यदि भ्रम्यात्स्त-
म्भमुपस्पृश्य भूमिं वा जपेदेष वामश्विना रथो मा दुर्गे
मास्तरोरिषदिति ॥ १३ ॥ तस्य न कांचनार्त्तिर्न्न रिष्टिर्भ-
वति ॥ १४ ॥ या त्वाऽध्वानं विमुच्य रथं यवसोदके दापये-
देष उहवाहनस्यपन्हव इति श्रुतेः ॥ ॥ १५ ॥ १४ ॥ ॥ * ॥

जयरामः ॥ अथातो रथारोहणम् । वक्ष्यत इति सूत्रशेषः । ततः स्वामी रथं युङ्क्तिप्रैषेण सारथिम्प्रेषयित्वा प्रेषितेन तेनैव युक्त इति निवेदिते साविराड्इत्येतावता मन्त्रेण रथमेत्यागत्य चक्रे रथाङ्गे हस्तेनाभिमृशति । तत्र रथन्तरमसीत्येतावता मन्त्रेण दक्षिणं चक्रम् । बृहदसीत्येतावता वामम् । अथ मन्त्रार्थः । तत्र त्रयाणाम्परमेष्ठी यजूंषि अङ्गान्यभिमर्शने० । यो ऽयं रथः सा विराट् अन्नदात्री देवता । रथन्तरादीनि सामानि । कूबरीम् युगन्धरम् । उपस्थन्नीडम् । हस्तेनेति सर्वत्र सम्बध्यते । तत्र मन्त्रः । अङ्कौन्यङ्काविति । तस्यार्थः । तत्र प्रजापतिस्त्रिष्टुप् अङ्कन्तदभिमर्शने० । अङ्कौ द्वौ अङ्काख्यगणपावग्निविशेषौ । एवं न्यङ्कावपि । एवम्भूतौ यावग्नी अभितो रथं रथस्य सर्वतो रक्षकत्वेन ध्वान्तन्दुर्गमप्राप्य वातस्याग्रम्मुखम् अनु अनुसृत्य सञ्चरन्तौ सम्यगगच्छन्तौ वर्त्तेते ये चापरे दूरेहेतिः बृहज्ज्वालः तथा इन्द्रियानुग्राहकः । इन्द्रियस्त्रात्रेन्द्ररथः । तथा पतत्रि पक्षिकुलानुग्राहकमग्निवृन्दम् । एते ऽग्नयः नो ऽस्मान्पारयन्तु निर्विघ्नेनाभीष्टन्देशम्प्रापयन्तु । किम्भूताः । पप्रयः अस्मन्मनोरथपूरणशीलाः । ततो दक्षिणन्धुर्यन्धुरि युक्तं वाहं प्राजति प्रकर्षेणाजयति गमनाय प्रेरयति । अज गताविति धातुः । नमो माणिचरायेति मन्त्रेण । तस्यार्थः । तत्र प्रजापतिरुष्णिक् माणिचरः प्रेरणे० । माणिचरो रथाधिष्ठात्री देवता । तूष्णीं वामप्राजनम् । देवता अप्राप्य तद्दर्शनात्प्राक् यावच्छक्ति प्रत्यवरोहेत् रथादवतरेत् । पदातिर्भूत्वा गच्छेदित्यर्थः । सम्प्रति दृष्ट्वा ब्राह्मणान्प्रत्यवरोहेदित्यनुषङ्गः सर्वत्र । गाः प्राप्य तन्मध्यङ्गत्वा । पितॄनभ्याशाच्छतः पित्रादिमान्यान् अभिक्रम्य प्रह्वत्वेनाभिपत्य उत्तीर्य च मुहूर्त्तं

अतीगाय अतिवाह्य जपेदिहरतिरित्यमुम्मन्त्रम् । तस्यार्थः । तत्र प्रजापतिर्यजुरग्निः रमणे० । हे अग्नयः यूयम् एके मुख्या इह रथे रमध्वं क्रीडध्वम्, यतो मम इह रथे रतिरस्ति अतो मा माम्प्राप्य भवतामपि इह मद्रथे सुशोभना रतिरस्तु । स साधको यदि दुर्बलरथः दुर्बलो रथो यस्य स तथा स्यात्तदा तं रथमास्थाय जपेदयं वामिति मन्त्रम् । तस्यार्थः । तत्र द्वयोः प्रजापतिरनुष्टुप् अश्विनौ जपे० । हे अश्विना अश्विनौ अयं वां युवयो रथः दुर्गे विषमस्थाने स्तरः हिंसकाद्धेतोर्मा मां मारिषत् मार्हिंसिष्ट । स्तृञ्रिषौ हिंसार्थौ । एतेनोत्तरोऽपि व्याख्यातः । स रथो यद्येवमभिमन्त्रितोऽपि भ्रम्यात् कुटिलङ्गच्छेत्तदा तद्ध्वजस्तम्भम्भूमिञ्चोपस्पृश्य जपेदेष वामित्यमुम्मन्त्रम् । अर्तिः पीडा । रिष्टिर्विघ्नः । उ निश्चये । एष घासोदकदानरूपो ऽपह्नवः अपराधमार्जनम् ॥ ॥ १४ ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ **अथातो रथारोहणम्** ॥ अथेदानीं कार्यार्थं जिगमिषोर्द्विजस्य यतो यानमपेक्षितमतो हेतो रथारोहणाख्यं कर्म वक्ष्यत इति सूत्रशेषः ॥ **युङ्क्ष्वेति रथं सम्प्रेष्य युक्त इत्युक्ते साविराडित्येत्य चक्रे अभिमृशति रथन्तरमसीति दक्षिणम्बृहदसीत्युत्तरम्** ॥ तत्र युङ्क्ष्वेति सारथिं सम्प्रेष्याज्ञाप्य ततः प्रेषितेन सारथिना युक्तो रथ इति प्रोक्ते सति साविराडित्येतेन मन्त्रेण एत्य रथसमीपमागत्य चक्रे रथाङ्गे अभिमृशति, कथं रथन्तरमसीत्यनेन मन्त्रेण दक्षिणम् बृहदसीत्यनेनोत्तरञ्चक्रम् बृहद्रथन्तरे सामनी ॥ **वामदेव्यमसीति कूबरीम्** ॥ वामदेव्यमसीत्यनेन मन्त्रेण कूबरीं ईषादण्डाग्रम् अभिमृशतीत्यनुवर्तते ॥ **हस्तेनोपस्थमभिमृशति** ॥ उपस्थं रथमध्यं उपवेशनस्थानमितियावत् । अभिमृशति आलभते हस्तेनेति सर्वत्र सम्बध्यते । अत्र मन्त्रः ॥ **अङ्कौन्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसञ्चरन्तौ । दूरेहेतिरिन्द्रियवान्पतत्रि ते नोऽग्नयः पप्रयः पारयन्त्विति ॥ नमो माणिचरायेति दक्षिणन्धुर्यम्प्राजति । गवां मध्ये स्थापयति** ॥ नमो माणिचरायेत्यनेन दक्षिणं धुर्यम् दक्षिणधुरायां युक्तम् अश्वं वृषभं वा प्राजति प्रतोदेन प्रेरयति तूष्णीम् वामम् । एवं गवां मध्ये रथं स्थापयति ॥ **अप्राप्य देवताः प्रत्यवरोहेत्सम्प्रति ब्राह्मणान्मध्ये गा अभिक्रम्य पितॄन्** ॥ अप्राप्य अनासाद्य दूरत एव देवता हरिहरब्रह्मादिकाः प्रत्यवरोहेत्, रथादवतरेत् । सम्प्रति ब्राह्मणान् विप्रान् सम्प्राप्ति निकटे प्रत्यवरोहेत् मध्ये गाः सुरभीः प्राप्य मध्ये प्रत्यवरोहेत् । अभिक्रम्य पितॄन् पित्रादीन् मान्यान् अभिक्रम्य अभिमुखमेत्य

प्रत्यवरोहेत् । न स्त्रीब्रह्मचारिणौ सारथी स्याताम् ॥ स्त्री नारी ब्रह्मचारी उपकुर्वाणको नैष्ठिकश्च स्त्रीब्रह्मचारिणौ सारथी न स्याताम् न भवेताम् ॥ मुहूर्तमतीयाय जपेदिहरतिरिहरमध्वमेके मास्त्विहरतिरिति च ॥ मुहूर्तं त्तणम् अतीयाय अत्येत्य जपेत् इहरतिरित्यादिकम्मन्त्रम् । स यदि दुर्बलरथः स्यात्तमास्थाय जपेत् ॥ स रथी यदि चेदध्वानङ्गच्छन् दुर्बलः क्षीणो रथोऽस्येति दुर्बलरथः स्याद्भवेत् तदा तं रथमास्थायारुह्य वक्ष्यमाणमन्त्रं जपेत् । अयं वामश्विना रथो मा दुर्गे मास्तरोरिषदिति ॥ स यदि भ्रम्यात्स्तम्भमुपस्पृश्य भूमिं वा जपेदेष वामश्विना रथो मा दुर्गे मास्तरोरिषदिति ॥ स रथो यदि पुनर्भ्रम्यात् चलने कुटिलो भवेत्तदा स्तम्भम् रथध्वजदण्डं भूमिं वा उपस्पृश्य जपेत् एष वामश्विना रथ इति मन्त्रम् । तस्य न काचनार्तिर्न रिष्टिर्भवति । तस्य रथिनः न काचन अर्तिः पीडा नच रिष्टिरुपसर्गो भवति य एवं दुर्बलरथ उद्भ्रान्तरथो वा जपति ॥ यात्वाऽध्वानं विमुच्य रथं यवसोदके दापयेदेष उ वाहनस्यापह्नव इति श्रुतेः ॥ यात्वा गत्वा अध्वानम्मार्गं विमुच्य मुक्त्वा किं, रथं रथयुक्तं वाहम् यवसं च उदकं च यवसोदके घासपानीये ते दापयेत् अश्वेभ्यो यवसोदके दीयेतामिति भृत्यान् प्रेषयेत् । कुतः एष उ वाहनस्य अश्वादेरपह्नवः त्तमापनं इति श्रुतेः श्रवणात्, एष कः तस्माद्येन वाहनेन धावयेत्तद्विमुच्य ब्रूयात् पाययतैनं सुहितं कुरुतेति सूत्रार्थः ॥ ॥ १४ ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ अथातो हस्त्यारोहणम् ॥ १ ॥ एत्य हस्तिनमभिमृशति हस्तियशसमसि हस्तिवर्चसमसीति ॥ २ ॥ अथारोहतीन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा सम्पारयेति ॥ ३ ॥ एतेनैवाश्वारोहणं व्याख्यातम् ॥ ४ ॥ उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि त्वष्टृदैवत्यः स्वस्ति मा सम्पारयेति ॥ ५ ॥ रासभमारोक्ष्यन्नभिमन्त्रयते शूद्रोऽसि शूद्रजन्माग्नेयो वै द्विरेताः स्वस्ति मा सम्पारयेति ॥ ६ ॥ चतुष्पथमभिमन्त्रयते नमो रुद्राय पथिषदे स्वस्ति मा सम्पारयेति ॥ ७ ॥ नदीमुत्तरिष्यन्नभिमन्त्रयते नमो रुद्रायाप्सुषदे स्वस्ति मा सम्पारयेति ॥ ८ ॥ नावमारोक्ष्यन्नभिमन्त्रयते सुनावमिति ॥ ९ ॥

उत्तरिष्यन्नभिमन्त्रयते सुत्रामाणमिति ॥ १० ॥ वनमभिमन्त्रयते नमो रुद्राय वनसदे स्वस्ति मा सम्पारयेति ॥ ११ ॥ गिरिमभिमन्त्रयते नमो रुद्राय गिरिषदे स्वस्ति मा सम्पारयेति ॥ १२ ॥ श्मशानमभिमन्त्रयते नमो रुद्राय पितृषदे स्वस्ति मा सम्पारयेति ॥ १३ ॥ गोष्ठमभिमन्त्रयते नमो रुद्राय शकृत्पिण्डसदे स्वस्ति मा सम्पारयेति ॥ १४ ॥ यत्र चान्यत्रापि नमो रुद्रायेत्येव ब्रूयाद्रुद्रो ह्येवेदꣳ सर्वमिति श्रुतेः ॥ १५ ॥ सिचाऽवधूतोऽभिमन्त्रयते सिगसि न वज्रोऽसि नमस्तेऽअस्तु मा माहिꣳसीरिति ॥ १६ ॥ स्तनयित्नुमभिमन्त्रयते शिवा नो वर्षाः सन्तु शिवा नः सन्तु हेतयः । शिवा नस्ताः सन्तु यास्त्वꣳ सृजसि वृत्रहन्निति ॥ १७ ॥ शिवां वाश्यमानामभिमन्त्रयते शिवो नामेति ॥ १८ ॥ शकुनिं वाश्यमानमभिमन्त्रयते हिरण्यपर्ण शकुने देवानां प्रहितंगम । यमदूत नमस्तेऽस्तु किन्त्वाकार्क्षारिणो अब्रवीदिति ॥ १९ ॥ लक्षण्यं वृक्षमभिमन्त्रयते मा त्वाऽशनिर्मा परशुर्मा वातो मा राजप्रेषितो दण्डः । अङ्कुरास्ते प्ररोहन्तु निवाते त्वाऽभिवर्षतु । अग्निष्टे मूलम्मांहिꣳसीत्स्वस्ति तेऽस्तु वनस्पते स्वस्तिमेऽस्तु वनस्पत इति ॥ २० ॥ स यदि किञ्चिल्लभेत तत्प्रतिगृह्णाति द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति साऽस्य न ददतः क्षीयते भूयसी च प्रतिगृहीता भवति । अथ यद्योदनं लभेत तत्प्रतिगृह्य द्यौस्त्वेति तस्य द्विः प्राश्नाति ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नात्विति ॥ २१ ॥ अथ यदि मन्थं लभेत तत्प्रतिगृह्य द्यौस्त्वेति तस्य त्रिः प्राश्नाति ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नातु ब्रह्मा त्वा पिबत्विति ॥ २२ ॥ अथातोऽधीत्याधीत्यानिराकरणम् प्रतीकर्म्मं विचक्षणं जिह्वा मे मधु यद्वचः । कर्णाभ्यां भूरिशुश्रुवे मा त्वꣳहार्षीः श्रुतम्मयि ॥ ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्म-

कोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशं मे विश । वाचा त्वा पिदधामि वाचा त्वा पिदधामीति [ तिष्ठ प्रतिष्ठ ] स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवतु आप्यायन्तु मेऽङ्गानि वाक् प्राणश्चक्षुः श्रोत्रं यशो बलम् ॥ यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॥ २३ ॥ १५ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ अथातो हस्त्यारोहणं वक्ष्यत इतिशेषः । हस्तिनमेत्य तं स्पृशति हस्तियशसमसीत्यनेन मन्त्रेण । तस्यार्थः । तत्र द्वयोर्ब्रह्मायजुषी हस्तीन्द्रौ देवते स्पर्शनारोहणयोः । हस्तिनामैरावतत्वेनप्रसिद्धं यश एव हस्तियशसन्तद्रूपोऽसि । तथा तेषां वर्चो दीप्तिरेव हस्तिवर्चसन्तद्रूपश्चासीति । अथ तमारोहति इन्द्रस्य त्वेति मन्त्रेण । तस्यार्थः । इन्द्रस्य वज्रेणायुधेन सहाहमिन्द्रो भूत्वा त्वा त्वामधितिष्ठामि सर्वशत्रुजयार्थमारोहामि, त्वञ्च मा मां स्वस्ति कल्याणं यथा तथा पारयेत्युक्तार्थम् । एवमेवाश्वारोहणङ्कर्तव्यम् । तत्र मन्त्रोहः । ऊहश्च हस्तिस्थाने अश्वाभिधानम् । उष्ट्रमारोक्ष्यन् आरोढुमिच्छन् तन्दृष्ट्वाऽभिमन्त्रयते त्वाष्ट्रोऽसि इति मन्त्रेण । एतदाद्यर्थः सुगमः । तत्र परमेष्ठी यजुरुष्ट्रस्तदारोहणे० । रासभं चाश्वतरम्मन्त्रलिङ्गात् । तदर्थः । तत्र विश्वामित्रः पङ्क्तिः रासभस्तदारोहणे० । हे रासभ त्वं शूद्रः हीनः असि । यतः शूद्रं शोकावहं जन्म यस्य स आग्नेयः अग्निदेवत्यः अश्वाद्गर्दभ्यामुद्भूतत्वाद् द्विरेताः । चतुष्पथङ्गच्छंस्तमभिमन्त्रयते नमो रुद्रायेति मन्त्रेण । तत्र परमेष्ठी अनुष्टुप् रुद्रो रक्षणे० । पथिषु सीदति तिष्ठतीति पथिषत्तस्मै । एवमुत्तरत्रापि । सुनावमिति मन्त्रेण नावमारुह्यावतर्तुमिच्छन् सुत्रामाणमिति मन्त्रेणावतरेत् । पितृषदे पितृवनवासिने । यत्रेत्यनुक्तप्रसङ्गेष्वपि नमोरुद्रायेत्येव ब्रूयात् । कुतः । हि यत इदं सर्वं रुद्रमेवेति श्रुतेः । एवङ्कृते निर्विघ्नताविध्यनुष्ठानफलञ्च स्यात् । सिच्छब्देन वस्त्रप्रान्तैकदेशो दशेति प्रसिद्धः तदुत्थो वायुरमङ्गलः । तथाचापस्तम्बसूत्रम् । यदा वा ऽपहतं सिचा वा शुना वा अन्नमभोज्यं स्यादिति । तथा सिचा ऽवधूतो वीजितस्तदा तामभिमन्त्रयते सिगसीति मन्त्रेण । तत्र त्रयाणाम्प्रजापतिरनुष्टुप् लिङ्गोक्ता अभिमन्त्रणे० । स्तनयित्नुम्मेघगर्जितं श्रुत्वा ऽभिमन्त्रयते शिवान इति मन्त्रेण । अस्यार्थः । हे इन्द्र शिवाः कल्याणकारिण्यो नो ऽस्माकं वर्षा वृष्टयः सन्तु । तथा हेतयः ऐन्द्राण्यायुधानि शिवा नो ऽस्माकं

मन्तु । हे वृत्रहन् याश्च हेतीस्त्वं शत्रुषु सृजसि क्षिपसि ता अपि नः शिवाः सन्तु । शिवां शृगालीं वाश्यमानां शब्दं कुर्वाणामभिमन्त्रयते शिवो नामेति मन्त्रेण । यद्यप्ययं मन्त्रः क्षुरादाने विनियुक्तस्तथापि नानाशक्तित्वादत्रापि विनियुज्यते । शकुनिं कृष्णकाकम् । अथ मन्त्रार्थः । प्रागुक्तमृष्यादि । हे हिरण्यपर्ण शीघ्रग हे शकुने देवानाम्प्रहितं प्रेषितं स्थानं गच्छतीति देवादिष्टं शुभाशुभङ्गमयतीति वा भो यमस्य दूत ते तुभ्यन्नमो ऽस्तु । त्वा त्वां कार्कारिण इति द्वितीयार्थे षष्ठी । कार्कारङ्काकजात्यनुरूपं शब्दङ्कुर्वन्तं प्रति यमः किमब्रवीत् । यद्वा । कार्कारिणस्तव स्वामी यमस्त्वा किमब्रवीत् माब्रवीत्वित्यर्थः । लक्षण्यम्प्रसिद्धं यत्प्रसिद्ध्या ग्रामस्यापि प्रसिद्धिर्भवति तं वृक्षन्दृष्ट्वाऽभिमन्त्रयते मा त्वेति मन्त्रेण । अस्यार्थः । तत्र प्रजापतिरनुष्टुप् वनस्पतिस्तद्रक्षणे० । हे वृक्ष त्वा त्वां अशनिर्वज्रो माहिंसीत् मानाशयतु । एवमुत्तरत्रापि योज्यम् । परशुः कुठारः राजप्रेषितो दण्डो राजोपद्रवः अग्निश्च ते तव मूलं माहिंसीत् । ते तवाङ्कुराश्च प्ररोहन्तु पल्लवा उद्गच्छन्तु । निवाते निर्वाते अल्पवायौ त्वा त्वाम्प्राप्य देवेन्द्रो ऽभिवर्षतु । ते तव स्वस्ति कल्याणमस्तु । हे वनस्पते तथा हे वनस्पते मे ममापि स्वस्त्यस्तु । स स्नातको यदि किञ्चिद् गवादिकं लभेत तत्प्रतिगृह्णाति द्यौस्त्वेति मन्त्रेण, प्रतिग्रहः स्वीकारः । अस्यार्थः । तत्र प्रजापतिरुष्णिक् दक्षिणा स्वीकारे० । हे दक्षिणे द्यौराकाशाभिमानिनी देवता त्वा त्वान्ददातु यजमानो देवरूपो भूत्वा ददात्वित्यर्थः । पृथिवी सर्वंसहा त्वा त्वाम्प्रतिगृह्णातु पृथिवीरूपो मानुषो भूत्वा प्रतिगृह्णात्वित्यर्थः । त्वत्पदावृत्तिर्दक्षिणायाः कर्मसाद्गुण्यकर्तृत्वख्यापनार्था । एवं संस्कृता दक्षिणा दातृप्रतिग्राहिणोः सिद्धिकरी भवति । तत्र दातुः सिद्धिरपूर्वोत्पादकत्वेन । प्रतिग्राहिणोऽपि कर्मानुष्ठानयोग्यत्वात् । प्रतिग्रहधना विप्रा इत्यादिवचनात् । सा एवं संस्कृता सती अस्य ददतो न क्षीयते वर्द्धत इत्यर्थः । एवम्प्रतिगृहीता सती प्रतिग्रहीतुर्भूयसी प्रचुरतरा भवति, अयञ्च सर्वप्रतिग्रहे मन्त्रः । स्नातकस्य ओदनम्मन्थम् तस्य लब्धस्य । अवयवलक्षणा षष्ठीयम् । द्विः द्विवारम्प्राश्नाति ब्रह्मात्वेति मन्त्रभेदाभ्याम् । प्रशब्देन मन्त्रभेदः । दधिदुग्धजलानामन्यतममिश्राः सक्तवो मन्थशब्देनाभिधीयन्ते । तं लभेत तदा द्यौस्त्वेति मन्त्रेण प्रतिगृह्य तस्य त्रिःप्राशनम् ब्रह्मात्वेति प्रतिमन्त्रम् । अस्यार्थः सुगमः । एवम्प्रतिग्रहेण दोषाभावोऽपि भवति । दोषश्च, प्रतिग्रहेण विप्राणां ब्राह्मन्तेजो विनश्यतीति । यो न धर्मं विधिं वेदेत्यादिवचनाद्यो दाता प्रतिग्राही वा न विधिज्ञः स स्तेनः तद्दण्डेन दण्ड्य इत्यर्थः ।

अथातो ऽधीत्याधीत्य आवृत्यावृत्य अनिराकरणम् अविस्मरणं कर्म कर्तव्यम् प्रतीकम्मे विचक्षणमिति मन्त्रेणाङ्गालम्भनम् । तस्यार्थः । तत्र परमेष्ठी गायत्री अङ्गानि तदालम्भने० । प्रतीकम्मुखम् मे मम विचक्षणं विशिष्टवर्णोच्चारणसमर्थम् । अस्त्वितिशेषः । मधु मधुरं यद्वचस्तद्वदत्विति शेषः । भूरि बहु बहुकालं वा शुश्रुवे शृणवानि । भो ब्रह्मन् वेदपुरुष मयि विषये यच्छ्रुतं शास्त्रन्तज्ज्ञानञ्च त्वम् माहार्षीः माहर । तदर्थं स्तौति । ब्रह्मणो वेदस्य प्रवचनमध्ययनन्त्वमसि । ब्रह्मणः अधीतस्य वेदस्य प्रतिष्ठानं स्थितिराधार इति यावत् । ब्रह्मणस्तस्य कोशो गोपनगृहम् । सनिः सम्भजनीयम् । शान्तिरनिष्टनिवृत्तिः । अनिराकरणमप्रमादः अविस्मरणमिति यावत् । किञ्च । मे मम ब्रह्मकोशं वेदाशयं विश प्रविश । सर्वेषां वेदानाᳫं हृदयमेकायनमिति श्रुतेः । अहञ्च वाचा सत्यवाण्या त्वा त्वाम् पिदधामि गोपाये छादयामीति वा । यथा मत्तो नापैषि । आवृत्तिर्दार्ढ्यार्था । स्वरा उदात्तादयः, करणानि संवृतादीनि, कण्ठ्याः कण्ठे भवा अकुहविसर्जनीयाः, औरसाः महकारा वर्गपञ्चमान्तस्थाः, दन्त्याः लृतुलसाः, ओष्ठ्याः उपूपध्मानीयाः, तेषां ग्रहणमुपादानम्, धारणं स्थिरीकरणम्, उच्चारणम्प्रयोगः, तेषु शक्तिर्मय्यस्तु । अङ्गानि गात्राणि आप्यायन्तु । तान्याह ॥ वाक् गीः, प्राणो वायुः प्रधानभूतः, चक्षुर्नेत्रबलम्, श्रोत्रन्तत्पाटवम्, यशः कीर्तिः, बलं शारीरम्, एतान्यङ्गानि आप्यायन्त्विति सम्बन्धः । परस्मैपदञ्छान्दसम् । यन्मे मयि श्रुतं मीमांसादि अधीतम् ऋगादि । यद्वा ॥ श्रुतं गुरुमुखात् अधीतम् अभ्यस्तम् अधिगतं वा तत्सर्वम्मे मम मनसि हृदये तिष्ठतु स्थिरमस्तु मापयात्वित्यर्थः । वीप्सा-ग्रन्थसमाप्त्यवद्योतनार्था ॥ ॥ १५ ॥ ॥ * ॥

क्षन्तव्यं तच्च विद्वद्भिर्यन्मया चापलं कृतम् । गृह्यभाष्यमलेखीदं दृष्ट्वा कर्कादिकौशलम् ॥ १ ॥ शोधनीयमिदं सद्भिर्मम त्वापत्यचापलम् । बाल्यप्रोत्साहितस्यात्र यदत्र स्खलितम्मम ॥ २ ॥ श्रीमन्माल्लिकमाधवश्रुतिसुधासिन्धोर्विगाहाप्तद्वैयस्तत्कृपयाऽभवद् द्विजवरः श्रीकेशवस्तादृशः । तस्याङ्घ्रिद्वयकस्पृशा कृतमिदं कातीयसूत्रस्य सद्भाष्यं सज्जनवल्लभं सुविदुषां प्रेष्ठं शिवप्रीतये ॥ ३ ॥ आचार्यापरनामधेय इति यो दामोदरोऽभूद् द्विजो भारद्वाजसुगोत्र आत्मरतिरप्यस्यात्मजस्तादृशः । नाम्ना श्रीबलभद्र आप्तसुयशास्तत्सूनुनैतत्कृतं भाष्यं सज्जनवल्लभं जययुजा रामेण मत्यै शुभम् ॥ ४ ॥ कर्कादिद्विजवर्य्याणां दृष्ट्वा भाष्याणि भूरिशः । उपचेतुं तदुच्छिष्टं जयरामोऽलिखत्स्फुटम् ॥ ॥ ५ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

इति श्रीमत्कातीयगृह्यसूत्रभाष्ये सज्जनवल्लभाख्ये जयरामकृतौ तृतीयकाण्डविवरणं समाप्तम् ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ अथातो हस्त्यारोहणम् ॥ अथ रथारोहणानन्तरं यतो ऽधिकृतस्य हस्त्यारोहणमप्यपेक्षितं भवति अतो हेतोः हस्त्यारोहणं वक्ष्यत इति सूत्रशेषः । एत्य हस्तिनमभिमृशति हस्तियशसमसि हस्तिवर्चसमसीति ॥ एत्य हस्तिसमीपमागत्य हस्तिनं गजम् अभिमृशति आलभते हस्तियशसमसीति मन्त्रेण ॥ अथारोहतीन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा सम्पारयेति ॥ अथाभिमर्शनानन्तरम् आरोहति हस्तिनं इन्द्रस्यत्वेति मन्त्रेण । एतेनैवाश्वारोहणं व्याख्यातम् । एतेनैव हस्त्यारोहणेनैव अश्वारोहणं व्याख्यातम् कथितम् अतश्चाश्वसमीपं गत्वा ऽश्वमभिमृशति अश्वयशसमस्यश्ववर्चसमसीति मन्त्रेण । ततोऽश्वमारोहति, इन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा सम्पारयेत्यनेन मन्त्रेण ॥ उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि त्वष्टृदेवत्यः स्वस्ति मा सम्पारयेति ॥ उष्ट्रं क्रमेलकम् आरोढुमिच्छन्नभिमन्त्रयते त्वाष्ट्रोसीत्यादिना मन्त्रेण । रासभमारोक्ष्यन्नभिमन्त्रयते शूद्रोऽसि शूद्रजन्माग्नेयो वै द्विरेताः स्वस्ति मा सम्पारयेति ॥ रासभं गर्दभमारोढुमिच्छन् शूद्रोऽसीत्यादिना मन्त्रेणाभिमन्त्रयते अभिमुखः सन् मन्त्रम्पठति । रासभोऽत्राश्वतरः प्रतीयते मन्त्रलिङ्गात् ॥ चतुष्पथमभिमन्त्रयते ॥ नमो रुद्राय पथिषदे स्वस्ति मा सम्पारयेति ॥ चतुष्पथम् चत्वारः पन्थानो यस्मिंन्स चतुष्पथः चतुर्मार्गाभिसरणप्रदेशस्तमभिमन्त्रयते नमो रुद्राय पथिषदे इत्यादिमन्त्रेण । नदीमुत्तरिष्यन्नभिमन्त्रयते। नमो रुद्रायाप्सुषदे स्वस्ति मा सम्पारयेति । नदीं स्रवन्तीमुत्तरिष्यन् पारं जिगमिषन् नमो रुद्रायाप्सुषद इति मन्त्रेणाभिमन्त्रयते । नावमारोक्ष्यन्नभिमन्त्रयते सुनावमिति । नावं तरीम् आरोढुमिच्छन् सुनावमारोहेत्यनयर्चाऽभिमन्त्रयते । उत्तरिष्यन्नभिमन्त्रयते सुत्रामाणमिति । उत्तरिष्यन्नुत्तर्तुम्प्रत्यवरोढुमिच्छन् तामेवाभिमन्त्रयते सुत्रामाणमित्यनयर्चा । वनमभिमन्त्रयते । नमो रुद्राय वनसदे स्वस्ति मा सम्पारयेति । वनं काननम्प्रवेष्टुमिच्छन् नमो रुद्राय वनसद इत्यादिनाऽभिमन्त्रयते । गिरिमभिन्त्रयते । नमो रुद्राय गिरिषदे स्वस्ति मा सम्पारयेति । गिरिम्पर्वतमारोढुकामोऽभिमन्त्रयते नमो रुद्राय गिरिषद इति मन्त्रेण ॥ श्मशानमभिमन्त्रयते ॥ नमो रुद्राय पितृषदे स्वस्ति मा सम्पारयेति । श्मशानं प्रेतदहनभूमिं कार्यवशात्प्राप्य नमो रुद्राय पितृषदे इति मन्त्रेणाभिमन्त्रयते । गोष्ठमभि-

मन्त्रयते नमो रुद्राय शकृत्पिण्डसदे स्वस्ति मा सम्पारयेति ॥ गोष्ठम् गोवाटं कार्यवशात्प्राप्य नमो रुद्राय शकृत्पिण्डसद इत्यादिमन्त्रेणाभिमन्त्रयते ॥ यत्रचान्यत्रापि नमोरुद्रायेत्येव ब्रूयाद्रुद्रो ह्येवेदꣳसर्वमितिश्रुतेः ॥ यत्र च येषु अन्यत्रापि अन्येष्वपि अनुक्तकार्येषु पूर्वन्नमो रुद्रायेत्येव ब्रूयात् पश्चात्तानि कर्माणि कुर्यात् । कुतः, हि यतः इदं विश्वम् रुद्र एवेति श्रुतेर्वेदवचनात् ॥ सिचाऽवधूतोऽभिमन्त्रयते सिगसि न वज्रोऽसि नमस्ते अस्तु मा माहिꣳसीरिति ॥ सिचा वस्त्रप्रान्तेनावधूतः तद्वाताहतस्तदा तां सिचमभिमन्त्रयते सिगसीत्यादिमन्त्रेण । शिवानो वर्षाः सन्तु शिवानः सन्तु हेतयः । शिवा नस्ताःसन्तु यास्त्वꣳ सृजसि वृत्रहन्निति ॥ स्तनयित्नुं मेघं गर्जन्तम् शिवानो वर्षा इत्यादिमन्त्रेणाभिमन्त्रयते ॥ शिवां वाश्यमानामभिमन्त्रयते शिवो नामेति ॥ शिवां शृगालींवाश्यमानां शब्दं कुर्वाणां शिवोनामेत्यादिमामाहिꣳसीरित्यन्तेन मन्त्रेणाभिमन्त्रयते ॥ शकुनिं वाश्यमानमभिमन्त्रयते हिरण्यपर्ण शकुने देवाना प्रहितंगम । यमदूत नमस्तेऽस्तु किन्त्वा कार्कारिणोऽब्रवीदिति ॥ शकुनिं पक्षिणं कृष्णकाकमिति यावत् । वाश्यमानं कूजन्तं हिरण्यपर्णेत्यादिमन्त्रेणाभिमन्त्रयते ॥ लक्षण्यं वृक्षमभिमन्त्रयते मात्वाशनिर्मा परशुर्मा वातो माराजप्रेषितो दण्डः । अङ्कुरास्ते प्ररोहन्तु निवाते त्वाभिवर्षतु ॥ अग्निष्टे मूलं माहिꣳसीत् स्वस्तितेऽस्तु वनस्पते स्वस्ति मेऽस्तु वनस्पत इति ॥ लक्षण्यं वृक्षं मङ्गल्यं तरुं आम्रादिकमभिमन्त्रयते मात्वाशनिरित्यादिमन्त्रेण ॥ स यदि किंचिल्लभेत तत्प्रतिगृह्णाति द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति ॥ स द्विजः यदि चेत् किंचित् गोभूहिरण्यादिकं लभेत प्राप्नुयात् तदा द्यौस्त्वेति मन्त्रेण तत्प्रतिगृह्णाति स्वीकुरुते ॥ साऽस्य न ददतः क्षीयते भूयसी च प्रतिगृहीता भवति । सा दक्षिणा एवंविधाय दीयमाना अस्य ददतः दातुः उपयुज्यमानाऽपि न क्षीयते न ह्रसति प्रत्युत एवं प्रगृहीता सती भूयसी च उत्तरोत्तरमभिवर्धमाना भवति ॥ अथ यद्योदनं लभेत तत्प्रतिगृह्य द्यौस्त्वेति ॥ तस्य द्विः प्राश्नात्विति ॥ ब्रह्मा त्वा ऽश्नातु ब्रह्मा त्वा प्राश्नात्विति ॥ अथ कदाचित् ओदनं भक्तं यदि लभेत प्राप्नुयात्तदा तत्प्रतिगृह्य आदाय द्यौस्त्वा ददात्विति मन्त्रं पठेत् मन्त्रपाठ-

स्तु आदानानन्तरं सर्वत्र स्वसत्तापत्तये। तस्य लब्धस्यौदनस्य द्विः द्विवारं प्राश्नाति भक्षयति। कथं ब्रह्मा त्वा ऽश्नात्विति प्रथमम् ब्रह्मा त्वा प्राश्नात्विति द्वितीयम् ॥ स यदि मन्थं लभेत तम्प्रतिगृह्य द्यौस्त्वेति तस्य त्रिः प्राश्नाति ब्रह्मा त्वा ऽश्नातु ब्रह्मा त्वा प्राश्नातु ब्रह्मा त्वा पिबत्विति ॥ स द्विजः यदि मन्थं दधिमन्थं लभेत प्राप्नुयात्तदा तम्प्रतिगृह्यादाय द्यौस्त्वा ददात्विति मन्त्रेण स्वीकृत्य तस्य दधिमन्थस्य त्रिस्त्रिवारं प्राश्नाति, कथम् ब्रह्मा त्वा ऽश्नातु इति प्रथमम् ब्रह्मा त्वा प्राश्नात्विति द्वितीयम् ब्रह्मा त्वा पिबत्विति तृतीयमिति त्रिभिर्मन्त्रैः ॥ अथातोऽधीत्याधीत्यानिराकरणम् ॥ अथेदानीम् यतो द्विजानां प्रतिदिनमध्ययनं विहितम् अतः कारणात् अधीत्याधीत्य पठित्वा पठित्वा अनिराकरणम् अपरित्यागः कर्तव्यः वक्ष्यमाणनिगदेन। तद्यथा। प्रतीकम्मे विचक्षणं जिह्वा मे मधु यद्वचः। कर्णाभ्यां भूरिशुश्रुवे मा त्वꣳ हार्षीः श्रुतं मयि ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशं मे विश वाचा त्वाऽपिदधामि वाचा त्वा पिदधामि [ तिष्ठ प्रतिष्ठ ] स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवन्त्वाप्यायन्तु मेऽङ्गानि वाक् प्राणश्चक्षुः श्रोत्रं यशो बलम्। यन्मे श्रुतमधीतन्तन्मे मनसि तिष्ठतु तिष्ठतु। अस्यार्थः। प्रतीकम् मुखम् मे मम विचक्षणं साधुशब्दोच्चारणसमर्थमस्त्विति सूत्रशेषः। मे मम जिह्वा यद्वचो वचनं मधु मधुरं रसवत् तद्वदत्विति शेषः। एवमभीप्सितः शेषः सर्वत्र पूरणीयः। कर्णाभ्यां भूरि बहु शुश्रुवे शृणुयाम्। मयि विषये यत् श्रुतमधीतम् पठितं वर्तते तत्त्वं मा हार्षीः मापनय। मयि विषये ब्रह्मणो वेदस्य प्रवचनं पाठनं व्याख्यानं वा असि भवेत्यर्थः। तथा ब्रह्मणो वेदस्य प्रतिष्ठानं प्रतिष्ठा स्थितिरित्यर्थः असि। मयीत्यनुवर्तते। ब्रह्मकोशोऽसि ब्रह्मणः शब्दरूपस्य कोशः गोपनगृहम् गुप्तिस्थानम् मयि असि। तथा सनिः मम जीवनमसि। तथा शान्तिः अनिष्टस्य अनिष्टहेतोश्च शमनमसि। तथा निराकरणम्परित्यागः न निराकरणम् अनिराकरणम् असि। मे मम ब्रह्मकोशं हृदयं विश। सर्वेषां वेदानाꣳ हृदयमेकायनमितिश्रुतेः॥ वाचा गिरा त्वा त्वां अपिदधामि छादयामि। आवृत्तिरादरार्था। स्वरा उदात्तानुदात्तस्वरिताः करणानि शब्दस्य उत्पत्तेरभिव्यक्तेर्वा साधनानि उरःकण्ठशिरोजिह्वामूलदन्तनासिकोष्ठतालूनीत्यष्टौ।

कण्ठे भवाः कण्ठ्याः, अवर्णकेवलहकारकवर्गविसर्गाः । उरसि भवा औरसाः सहकारवर्गपञ्चमान्तस्थाः, दन्तेषु भवाः दन्त्याः लृवर्णतवर्गसकाराः, ओष्ठे भवा ओष्ठ्याः उवर्णपवर्गोपध्मानीयाः । स्वराश्च करणानि च कण्ठ्याश्च औरसाश्च दन्त्याश्च ओष्ठ्याश्च स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्याः एतेषां ग्रहणम् उपादानम् धारणं स्थिरीकरणम् उच्चारणम् प्रयोगः ग्रहणं च धारणं च उच्चारणं च ग्रहणधारणोच्चारणानि तेषु शक्तिः स्वरादीनां धारणादिसामर्थ्यम्मय्यस्तु । मे मम अङ्गानि गात्राणि आप्यायन्तु वर्द्धन्ताम् । न केवलमङ्गानि किन्तु वाक् गीः प्राणः प्राणवायुः सूत्रात्मेति यावत् चक्षुर्नयनेन्द्रियम् श्रोत्रं श्रवणेन्द्रियम् यशः कीर्त्तिः बलं शारीरमोजः । एतान्यपि वागादीनि आप्यायन्त्वित्यनुषङ्गः । यन्मे मया श्रुतं मीमांसादि अधीतं ऋगादि तत्सर्वं मे मनसि तिष्ठतु सुस्थिरमस्तु । वीप्सात्रार्थभूयस्त्वप्रतिपादनपरा ग्रन्थसमाप्तिज्ञापनार्था वा ॥ इति सूत्रार्थः ॥

अथ परिशिष्टोक्तं पृष्टोदिविविधानं लिख्यते ॥ केशान्तादूर्ध्वमपत्नीक उत्पन्नाग्निरनग्निको वा प्रवासी ब्रह्मचारी वा मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अन्वग्निरित्यनयर्चाऽग्निमाहृत्य पञ्चभूसंस्कारान्कृत्वा पृष्टोदिविपृष्टो अग्निः पृथिव्यामित्यनयर्चाऽग्नेः स्थापनम् । तत्सवितुः ताᳬ सवितुः विश्वानि देवसवितरित्येताभिस्तिसृभिः सावित्रीभिः प्रज्वालनमग्नेः । अथ तस्मिन्नग्नौ सायम्प्रातर्होमपञ्चमहायज्ञपिण्डपितृयज्ञपक्षाद्याग्रयणादि कुर्यात् ॥ मणिकावधानादिसर्वमावसथ्याधानादिवत् । अनुदिते च होमः । एवं कृते न वृथा पाको भवति । न वृथा पाकं पचेन्न वृथा पाकमश्नीयान्न वृथा पाकमश्नीयादिति ॥ १५ ॥ इत्यग्निहोत्रिश्रीहरिहरविरचितायां पारस्करगृह्यसूत्रव्याख्यानपूर्विकप्रयोगपद्धतौ तृतीयः काण्डः समाप्तः ॥ शुभम्भवतु ॥ ॥०॥ ॥०॥ ॥०॥



मूलम् ॥ अथातो वापीकूपतडागारामदेवतायतनानाम् प्रतिष्ठापनं व्याख्यास्यामः तत्रोदगयन आपूर्यमाणपक्षे पुण्याहे तिथिवारनक्षत्रकरणे च गुणान्विते तत्र वारुणं यवमयं चरुꣳश्रपयित्वाज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति त्वन्नो अग्न इमम्मे वरुण तत्वायामि येते शतमयाश्चाग्नउदुत्तममुरुꣳ हि राजा वरुणस्योत्तम्भनमग्नेरनीकमिति दशर्चꣳ हुत्वा स्थालीपाकस्य जुहोत्यग्नये स्वाहा सोमाय स्वाहा वरुणाय स्वाहा यज्ञाय स्वाहोग्राय स्वाहा भीमाय स्वाहा शतक्रतवे स्वाहा व्युष्ट्यै स्वाहा स्वर्गाय स्वाहेति यथोक्तꣳ स्विष्टकृत् प्राशनान्ते जलचराणि क्षिप्त्वाऽलङ्कृत्य गान्तारयित्वा पुरुषसूक्तञ्जपन्नाचार्याय वरन्दत्वा कर्णवेष्टकौ वासाꣳसि धेनुर्दक्षिणा ततो ब्राह्मणभोजनम् ॥ ॥ * ॥ ॥ * ॥

दीक्षितकामदेवकृतङ्कात्यपरिशिष्टकण्डिकाभाष्यम्प्रयोगपद्धतिसहितम् ।

श्रीः ॥ अथातो वापीकूपतडागारामदेवतायतनानाम्प्रतिष्ठापनं व्याख्यास्यामः ॥ अथशब्दो मङ्गलार्थः आनन्तर्यस्य पाठादेव सिद्धेः । अतशब्दो हेत्वर्थः यतोऽप्रतिष्ठितं वाप्यादिकमश्रेयस्करं अतः प्रतिष्ठापनं व्याख्यास्याम इति प्रतिज्ञा शिष्यबुद्धिसमाधानार्था ॥ तत्रोदगयन आपूर्यमाणपक्ष पुण्याहे तिथिवारनक्षत्रकरणे च गुणान्विते वारुणं यवमयञ्चरुꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति त्वन्नो अग्ने सत्वन्नो अग्ने इमम्मे वरुण तत्वायामि येतेशतमयाश्चाग्न उदुत्तममुरुꣳहिराजा वरुणस्योत्तम्भनमग्नेरनीकमिति ॥ तत्रेति तस्मिन् प्रतिष्ठापने उदगयनादिकाले यथोक्तञ्चरुं कुशकण्डिकोक्तप्रकारेण श्रपयित्वा आघारावाज्यभागौ हुत्वोक्तैर्दशभिर्मन्त्रैर्दशाज्याहुतीर्जुहोति । उदगयनमुत्तरायणम् आपूर्यमाणपक्षः शुक्लपक्षः पुण्याह इति शास्त्रान्तरोक्तकाले । तिथिवारनक्षत्रकरणानां गुणान्वितत्वं शास्त्रान्तरविहितत्वम् । तच्च किञ्चित्संक्षेपेण प्रदर्श्यते । यथा मदनरत्नोदाहृतवह्निपुराणे । वापीकूपतडागानान्तस्मिन्काले विधिः स्मृतः । सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता । १ । कर्कटे पुत्रलाभश्च सौख्यन्तु मकरे भवेत् । मीने यशोऽर्थलाभश्च कुम्भे वैसुवृहृदकम् । २ ।

वृषे च मिथुने वृद्धिर्वृश्चिकेऽल्पजलं भवेत् । पितृतृप्तिस्तु कन्यायान्तुलायां शाश्वती गतिः । सिंहो मेषो धनुर्नाशं लक्ष्म्याश्च द्विज यच्छतीति । तत्रैव भविष्योत्तरेऽपि । तस्मिन् सलिलसम्पूर्णे कार्त्तिके च विशेषतः । तडागस्य विधिः कार्यः स्थिरनक्षत्रयोगतः । १ । मुनयः केचिदिच्छन्ति व्यतीतेऽप्युत्तरायणे । न कालनियमस्तत्र सलिलन्तत्र कारणमिति । एवमादिग्रन्थान्तरादवगन्तव्यं विस्तरभयान्न लिख्यते । चकारात् योगेऽपि गुणान्विते वैधृतिव्यतीपातादिवर्जिते इत्यर्थः ॥ एवमयज्ञरूं श्रपयित्वेत्येतावतैव सिद्धे यद्वारुणग्रहणान्तद्वरुणस्य प्राधान्यज्ञापनार्थम् । ततश्च तदन्तराये पुनः स्थालीपाकस्योत्पत्तिः । कृतोऽपि देवतान्तरहोमः पुनरावर्त्तनीयः । तदुक्तं छन्दोगपरिशिष्टे कात्यायनाचार्यैः । प्रधानस्य क्रिया यत्र साङ्गन्तत्क्रियते पुनः ॥ तदङ्गस्याक्रियायान्तु नावृत्तिर्नैव तत्क्रियेति । देवतान्तरान्तराये तु प्राक्समाप्तेरनादिष्टप्रायश्चित्तपूर्वकं स्थालीपाकात्तस्य होमः । तदलाभे त्वाज्येनैव । उर्द्धं समाप्तेस्तु विष्णुस्मरणमेवेति प्रयोजनम् । श्रीमदनन्तदेवस्वामिचरणैस्तु प्रयोजनान्तरमुक्तम् । वारुणमिति तद्धितेन वरुणस्यैव चरुदेवतात्वावगमे वक्ष्यमाणाहुतिषु यथालिङ्गमग्न्यादिशब्दैर्वरुणं ध्यात्वेदमग्नये इत्येव त्यागो बोध्यः । आग्नेया इति तु स्थितिरिति नैरुक्तविधिवशेन प्रयाजेषु समिदादिशब्दैरग्निध्यानपूर्वकमिदं समिद्भ्य इत्यादि त्यागवदिति ॥ दशर्चꣳ हुत्वा स्थालीपाकस्य जुहोत्यग्नये स्वाहा सोमाय स्वाहा वरुणाय स्वाहा यज्ञाय स्वाहा भीमाय स्वाहोग्राय स्वाहा शतक्रतवे स्वाहा व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ॥ दशर्चꣳहुत्वेत्ययमनुवाद आहुतीनामपि मन्त्रसमसङ्ख्यत्वप्राप्त्यर्थः । ततश्च समं स्यादश्रुतत्वादिति न्यायेन एकैकेन मन्त्रेणैकैकाहुतिः । यद्वा वरुणस्योत्तम्भनमित्यत्र पञ्चानामपि वाक्यानां मन्त्रैकत्वज्ञापनार्थम् । तदित्थम् । ऋचो यजूꣳषि सामानि निगदा मन्त्रा इति भगवता कात्यायनाचार्येण ऋगादीनाञ्चतुर्णाम्पृथक् मन्त्रत्वमुक्तम् । ततश्च सामान्यत ऋका ऋक् एको मन्त्रः । एकं यजुरेकः । एकं सामैकः । एको निगदश्चैकः । तत्र तेषां वाक्यं निराकाङ्क्षं मिथः सम्बद्धमिति, तेन भगवता जैमिनिना च अर्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेद्विभागेस्यादिति वाक्यलक्षणमप्युक्तम् । अत्र च पञ्चस्वप्याख्यातभेदेन लक्षणस्य विद्यमानत्वात्पञ्चवाक्यान्येतानि । ततश्च पञ्चैते मन्त्राः । अत एवानुक्रमणिकाकारेण वरुणस्य पञ्च वारुणानीति पञ्चसङ्ख्याविशिष्टो यजुर्भेद उक्तः । एवञ्च सति न्यायतः करणमन्त्राणां समुच्चयाभावाद्वाचनिकोऽयं समुच्चयः चतुर्भिरादत्त इतिवत् । ततश्च प्रकृते नवऋचो

नवमन्त्राः । पञ्चभिर्मिलितैर्यजुर्भिश्चैकः । एवं दशैते मन्त्राः । किञ्च स्मार्त्ते कर्मणि सर्वत्रोत्सर्गतः कण्डिकान्तो मन्त्र इत्याचारोऽप्यनुगृहीत एव । तथाच गृह्यकारिकाकारः । गृह्यकर्मसु ये मन्त्रा ज्ञेयाः स्वाध्यायपाठतः । किञ्च मध्यमवृत्त्या ते न द्रुता न विलम्बिता इति । ऋक्पदन्तु कण्डिकापरम् । यथा गौतमादीन् ऋषीन् सप्त कृत्वा दर्भमयान् पुनः । पूजयित्वा विधानेन तर्प्पयेदृचमुद्धरन्, इत्यत्र बौधायनीयवाक्ये ऋक्पदमृग्यजूभयसाधारण्येन कण्डिकापरमित्यङ्गीकृतमुत्सर्गकारिकाकारेण । मन्त्रैर्द्वाभ्याञ्च मुर्द्धेति माछन्दस्त्रितयेन च । एवः षोडशभिर्मन्त्रैः सप्तर्षय इत्येकया इत्यादिना । एवमत्रापि ज्ञेयमित्यलं विस्तरेण । स्थालीपाकस्येत्यवयवलक्षणा षष्ठी, स्थालीपाकस्यावयवं जुहोतीत्येवम् । यद्वा कर्मणि षष्ठी ॥ **यथोक्तंस्विष्टकृत्** ॥ स्विष्टकृदादि गृह्योक्तप्रकारेण कर्तव्यमित्यर्थः ॥ **प्राशनान्ते जलचराणि क्षिप्त्वाऽलङ्कृत्य गान्तारयित्वा पुरुषसूक्तञ्जपन्** ॥ स्विष्टकृद्धोमानन्तरं भूरादिप्राजापत्यान्ता नवाहुतीर्हुत्वा संस्रवप्राशनञ्च कृत्वा पूर्णपात्रवरयोरन्यतरद्ब्रह्मणे दत्वा जलचराणि मत्स्यादीनि प्रत्यक्षाणि प्रतिमारूपाणि वा जलमध्ये प्रक्षिप्य सौवर्णशृङ्गाद्यलङ्कृतां गां सहस्रशीर्षेतिषोडशर्चं पुरुषसूक्तं त्रैस्वर्य्येण पठन् ऐशानाभिमुखीं जलेऽवगाह्य ब्राह्मणाय प्रतिपादयेत् । अत्र मदनरत्ने मत्स्यपुराणोक्तो विशेषः ॥ जलाशयञ्च त्रिवृता सूत्रेण परिवेष्टयेत् । पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् ॥ ततो निक्षिप्य मकरं मत्स्यादींस्तांश्च सर्वतः ॥ धृताञ्चतुर्भिर्विप्रैस्तु वेदवेदाङ्गपारगैः ॥ महानदीजलोपेतां दध्यक्षतविभूषिताम् । उत्तराभिमुखो न्युब्जां जलमध्ये तु कारयेत् । आथर्वणेन साम्नातु पुनर्मामेत्यृचेति च । अपोहिष्ठेति मन्त्रेण क्षिप्त्वाऽऽगत्य च मण्डपमिति । आथर्वणं साम शन्नोदेवीरित्यस्यामृचि गीतमिति व्याख्यातञ्च ॥ भविष्योत्तरेऽपि । सामान्यं सर्वभूतेभ्यो मया दत्तमिदञ्जलम् ॥ रमन्तु सर्वभूतानि स्नानपानावगाहनैः ॥ एवञ्जलञ्जले क्षिप्त्वा पूजयेज्जलमातरः । तोष्याः कर्मकराः सर्व कुद्दालानि च पूजयेत् इति । बह्वृचगृह्यपरिशिष्टे तु जलावतारितगोदानान्ते, तत उत्सर्गङ्कुर्यात् । देवपितृमनुष्याः प्रीयन्तामिति यश्चोत्सृजत इत्याह शौनक इत्युत्सर्ग उक्तः ॥ मत्स्यादीनां विशेषोऽपि मदनरत्न एव । सौवर्णौ कूर्ममकरौ राजतौ मत्स्यदुन्दुभौ । ताम्रौ कुलीरमण्डूकावायस्कः शिशुमारकः ॥ दुन्दुभो राजिलः । एते स्वर्णपात्र्यां स्थाप्या इति ॥ **वासोयुग्मन्धेनुर्दक्षिणा च** ॥ चकारो द्रव्यसमुच्चयार्थः । वासोयुग्मं धेनुश्च दक्षिणेति यावत् । इयञ्च दक्षिणा आचार्यस्यैव । तत-

श्च तस्यापि वरणम् । ब्रह्मणस्तु पूर्णपात्रादिकैव । तथाच पाठान्तरम् । गान्ता-रयित्वाऽऽचार्याय वरन्दत्वा कर्णवेष्टकौ वासाꣳसि धेनुर्दक्षिणा चेति । यद्वा स्मार्त्ते कर्मणि यजमानस्यैव कर्तृत्वमिति भाष्यकारीयसिद्धान्तत्वात् उपदिष्टेनातिदिष्टं बाध्यत इतिन्यायात् पूर्णपात्रादिकां बाधित्वैव प्रवर्त्तते धुर्यौ दक्षिणेतिवत् । अतएव प्राशनान्ते जलचराणि क्षिप्त्वेत्यत्र प्राशनान्तग्रहणम् प्राकृतकालविशिष्टदक्षिणाबाधार्थम् । जलचरप्रक्षेपादेरपूर्वत्वेन न्यायात् प्राशनान्त एव प्राप्तत्वात् पश्चादग्नेर्भद्रपीठ इत्यादिवत् । पाठान्तरपक्षेतु वैवाहिकवरदानवदुपद्रष्टृविषया स्वकीयाचार्यविषया वा इयमधिका अन्यैव ॥ ततो ब्राह्मणभोजनम् ॥ कर्त्तव्यमिति सूत्रशेषः । दशैकादश वाऽवश्यम्भोजनीयाः । गर्भाधानादिभिर्यज्ञैर्ब्राह्मणान् भोजयेद्दशेति परिशिष्टकारोक्तेः । ततः सहस्रं विप्राणामथवाऽष्टशतं तथा । भोजयेच्च यथाशक्त्या पञ्चाशद्वाऽथ विंशतिमिति मत्स्यपुराणोक्तवचनं तु समर्थविषयम् ॥ - ॥ * ॥ इतिश्री दीक्षितकामदेवकृतं गृह्यपरिशिष्टकण्डिकाया भाष्यं समाप्तम् ॥ * ॥ अथ प्रयोगः ॥ तत्र कालविशेषो मदनरत्ने । अनधिकालुप्तसंवत्सरे असिंहमकरस्थगुरौ अगुर्वादित्ये अमलमासक्षयमासे अलुप्तदिनद्वये पक्षे अनवमदिनादौ भूकम्पाशन्युल्काद्यद्भुतदोषरहिते काले उत्तरायणे माघफाल्गुनचैत्रवैशाखज्येष्ठाषाढान्यतममासे रविशुद्धावयनद्वयविषुवद्द्वयकन्यामीनधनुरन्यतमसङ्क्रान्तौ शुक्लपक्षे द्वितीयातृतीयापञ्चमीसप्तमीदशमीत्रयोदशीपौर्णमासीनामन्यतमतिथौ शनिमङ्गलान्यवारेषु भरणीकृत्तिकाऽऽर्द्रापुनर्वस्वश्लेषामघापूर्वाफाल्गुनीविशाखाव्यतिरिक्तनक्षत्रेषु विष्कम्भातिगण्डव्याघातवज्रव्यतीपातपरिघवैधृतिव्यतिरिक्तकरणेषु यजमानस्य चन्द्रताराविशुद्धौ बुधशुक्रगुरुचन्द्रनिरीक्षिते लग्ने जलाशयोत्सर्गङ्कुर्यादिति । एवमुक्तकाले जलाशयस्योदगैशान्यप्राक्पश्चिमान्यतमदिशि समीपे एव प्रागुदक्प्रवणे सुसमे भूभागे पूर्वन्दशहस्तादिमण्डपं विधायालङ्कृत्य तत्र स्वासने प्राङ्मुख उपविश्य पवित्रपाणिः स्वाचान्तः प्राणानायम्य श्रीविष्णुस्मरणपूर्वकं देशकालादिसङ्कीर्तनान्ते श्रीपरमेश्वरप्रीत्यर्थं तडागप्रतिष्ठापनमहङ्करिष्ये । एवमारामादिष्वप्यूहेन सङ्कल्पङ्कृत्वा तदङ्गत्वेन गणपतिपूजानान्दीश्राद्धनवग्रहयज्ञांश्च करिष्ये इति पुनः सङ्कल्पक्रमेणैतानि कुर्यात् ऋत्विग्वरणानन्तरं वा पुण्याहवाचनम् । ततो ग्रहमखानन्तरं प्रधानाङ्गत्वेन पुनराचार्यस्य ब्रह्मणश्च वरणङ्कुर्यात् । तत्र वाक्यम् । कर्तव्यामुकजलाशयप्रतिष्ठापनेऽमुकगोत्रामुकशर्मन् त्वमाचार्यो भवेति । भवामीति प्रतिवचनम् । एवं ब्रह्मा भवेति । ततो यथा-

शक्ति तयोः पूजनं क्रमेण प्रार्थनञ्च । आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ 'यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः । तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तमेति ॥ सदस्यवरणं कृताकृतम् । पक्षे आचार्यवरणस्याप्यभावः । ततो वृतश्चेदाचार्यः अथवा यजमानः स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं स्थापयित्वा वारुणं यवमयञ्चरुं यथाविधि श्रपयित्वा आज्यभागान्ते आज्येनैव त्वन्नो अग्न इत्यादिभिर्दशभिर्मन्त्रैः प्रतिमन्त्रं दशाहुतीर्जुहुयात् । तद्यथा । ॐ प्रजापतये स्वाहा इदं प्रजापतये० । १ । ॐ इन्द्राय स्वाहा इदमिन्द्राय० २ । ॐ अग्नये स्वाहा इदमग्नये० ३ । ॐ सोमाय स्वाहा इदं सोमाय० ४ । त्वन्नो अग्न इति वामदेवऋषिः अग्नीवरुणौ देवते त्रिष्टुप्छन्दः आज्याहुतिहोमे वि० । ॐ त्वन्नो अग्ने० प्रमुमुग्ध्यस्मत्स्वाहा । इदमग्नीवरुणाभ्यान्नमम । सत्वन्न इति वामदेवऋषिः अग्नीवरुणौ देवते त्रिष्टुप्छन्दः आज्याहु० । ॐ सत्वन्नो० एधिस्वाहा इदमग्नीवरुणाभ्यां० २ । इमम्म इति शुनःशेप० वरुणोदे० गायत्री० आज्या० । ॐ इमम्मे० चके स्वाहा इदं वरुणाय० ३ । तत्वायामीति शुनःशेप० वरुणो दे० त्रिष्टुप्० आज्या० । ॐ तत्वायामि० प्रमोषीःस्वाहा इदं वरुणाय० ४ । येते शतमिति वामदेव० त्रिष्टुप्० वरुणः सविताविष्णुर्विश्वेदेवामरुतःस्वर्कादेवताः आज्या० । ॐ येते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्न्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा । इदंवरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्क्केभ्यश्च नमम ५ । अयाश्चाग्ने इतिवामदेव० त्रिष्टुप्० अग्निर्देवता आज्या० ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमया असि । अयानो यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा इदमग्नये० ६ अयसे इत्यधिकमिति केचित् । उदुत्तममिति शुनःशेप० वरुणोदे० त्रिष्टुप्० आज्या० । ॐ उदुत्तमं० स्याम स्वाहा । इदं वरुणाय नमम ७ । उरुꣳहिराजेति शुनःशेप० त्रिष्टुप्० वरुणो दे० आज्या० । ॐ उरुꣳ हि राजा० श्चित्स्वाहा इदं वरुणाय नमम ८ । वरुणस्योत्तम्भनमिति पञ्चयजुषां प्रजापति० वरुणो० यजूꣳषि आज्या० । ॐ वरुणस्योत्तम्भन० मासीद स्वाहा० इदं वरुणाय० ९ । अग्नेरनीकमिति प्रजापति० अग्निर्दे० त्रिष्टुप्० आज्या० । ॐ अग्नेरनीक० रण्यत्स्वाहा इदमग्नये० १० । अभिघार्य स्थालीपाकञ्जुहुयात् । तत्र मन्त्राः । ॐ अग्नये स्वाहा इदमग्नये० १ । ॐ सोमाय स्वाहा इदं सोमाय० २ । ॐ वरुणाय स्वाहा इदं वरुणाय० ३ । ॐ यज्ञाय स्वाहा इदं यज्ञाय० ४ । ॐ भीमाय स्वाहा इदं भीमाय० ५ ।

ॐ उग्रायस्वाहा इदमुग्राय० ६ । ॐ शतक्रतवे स्वाहा इदं शतक्रतवे० ७ । ॐ व्युष्ट्यै स्वाहा इदं व्युष्ट्यै० ८ । ॐ स्वर्गाय स्वाहा इदं स्वर्गाय० ९ । अथ ब्रह्मणाऽन्वारब्ध ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते० १० । तत आज्येन भूरादिप्राजापत्यान्ता नवाहुतीर्जुहुयात् । तद्यथा ॐ भूः स्वाहा इदमग्नये० १ । ॐ भुवः स्वाहा इदं वायवे० २ । ॐ स्वः स्वाहा इदं सूर्याय० ३ । ॐ त्वन्नो अग्ने ४ । ॐ सत्वन्नो अग्ने ५ । ॐ अयाश्चाग्ने ६ । ॐ येतेशतं ७ । ॐ उदुत्तमं ८ । ॐ प्रजापतये स्वाहा इदं प्रजापतये० ९ । ततः संस्रवप्राशनम् १ । पवित्राभ्यां मार्जनम् २ पवित्रप्रतिपत्तिः ३ प्रणीताविमोकः ४ ब्रह्मणे पूर्णपात्रदानम् । कृतैतदुत्सर्गहोमसाङ्गतासिद्ध्यर्थमिदं पूर्णपात्रं ब्रह्मन् तुभ्यमहं सम्प्रददे । तेन श्रीकर्माङ्गदेवता प्रीयताम् ॥ अथ शास्त्रान्तराज्जलाशयं त्रिवृता सूत्रेण ईशानादिप्रादक्षिण्येन परिवेष्ट्य तत्र जलचराणि प्रक्षिपेत् । तत्र प्रकारविशेषो यथा मदनरत्ने मत्स्यपुराणोक्तः । पञ्चरत्नसमन्वितां संस्थापितमकरादिकां सौवर्णीं पात्रीं समादाय जलाशयसमीपे प्राङ्मुखस्तिष्ठन् दक्षहस्तेनैव पूर्वम्मकरं प्रक्षिप्य ततः सर्वतो मत्स्यादीन् प्रक्षिपेत् । तेऽपि सौवर्णौ कूर्ममकरौ राजतौ मत्स्यदुन्दुभी । ताम्रौ कुलीरमण्डूकावायसः शिशुमारकः, इति द्रव्यविशेषतो ज्ञेयाः । ततस्तां पात्रीं गङ्गादिमहानदीजलोपेतां दध्यक्षतविभूषिताङ्कृत्वा उत्तराभिमुखस्तिष्ठन् आपोहिष्ठेति तिसृभिर्ऋग्भिर्जलमध्ये न्युब्जां कुर्यात् । आपोहिष्ठेति तिसृणां सिन्धुद्वीपऋषिः आपो देवता गायत्रीछन्दः पात्रीन्युब्जीकरणे विनियोगः । ॐ आपोहिष्ठा० चनः इति तां न्युब्जीकुर्यात् । ततः सुवर्णशृङ्गादियथाशक्त्यलङ्कृतां गां पुरुषसूक्तञ्जपन् तारयेत् । विशेषः पाराशरस्मृतौ । अरोगां वत्ससंयुक्तां सुरूपां भूषणान्विताम् । गोवत्सौ वस्त्रबद्धौ तावाग्नेय्यां दिशि संस्थितौ । वायव्याभिमुखौ तत्र तारयेद्वारिमध्यत इति । पुरुषसूक्तस्य नारायणः पुरुषऋषिः जगद्बीजम्पुरुषो देवता पञ्चदशानामनुष्टुप्छन्दः षोडश्यास्त्रिष्टुप्छन्दः जले गोरवतारणे विनियोगः । ॐ सहस्रशीर्षा० देवाः । ततो यजमानो नित्यतर्पणवद्देवर्षिपितृतर्पणं गोपुच्छाग्रे कुर्यात् । प्राङ्मुखः स्वयं उदकस्थितायाः पुच्छाग्रे नित्यतर्पणं कृत्वा ततो "ब्रह्माद्यादेवताः सर्वे ऋषयो मुनयस्तथा । असुरा यातुधानाश्च मातरश्चण्डिकास्तथा । दिक्पाला लोकपालाश्च ग्रहदेवाधिदेवताः । ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पिताः । विश्वेदेवास्तथादित्याः साध्याश्चैव मरुद्गणाः । क्षेत्रपीठोपपीठानि नद्यश्च सागराः । ते स० । पातालनागकन्याश्च नागाश्चैव सपर्वताः । पिशाचा गुह्यकाः प्रेता गन्धर्वा गणराक्षसाः । ते० । पृथिव्या-

पश्च तेजश्च वायुराकाशमेव च । दिवि भुव्यन्तरिक्षे च येच पातालवासिनः । ते० । शिवः शिवास्तथा विष्णुः सिद्धिर्लक्ष्मी सरस्वती । तपोवनानि भगवानव्यक्तः परमेश्वरः । तेस० । क्षेत्रौषधिलता वृक्षा वनस्पत्यधिदेवताः । कपिलः शेषनागश्च तक्षकोऽनन्त एव च । ते० । अन्ये जलचरा जीवा असंख्यातास्त्वनेकशः । चतुर्दश यमाश्चैव येचान्ये यमकिङ्कराः । ते० । सर्वेऽपि यक्षराजानः पक्षिणः पशवश्च ये । स्वेदजोद्भिज्जजा जीवा अण्डजाश्च जरायुजाः । ते० । अन्येऽपि वनजीवा ये दिवा निशि विहारिणः । अजागोमहिषीरूपं ये चान्ये पशवस्तथा । शान्तिदाः शुभदास्ते स्युर्गोपुच्छोदकतर्पिताः । आब्रह्मस्तम्बपर्यन्तं येचान्ये गोत्रिणो मृताः । ते० । सर्पव्याघ्रहता ये च शस्त्रघातमृताश्च ये । संस्काररहिता ये च रौरवादिषु गामिनः । ते० । वृक्षत्वञ्च गताः केचित् तृणगुल्मलताश्च ये । यातनासु च घोरासु जातीषु विविधासु च । ते० । नरकेषु च घोरेषु पतिताः स्वेन कर्मणा । देवत्वं मानुषत्वं वा तिर्यक्प्रेतपिशाचताम् । कृमिकीटपतङ्गत्वं याता ये च स्वकर्मभिः । ते० । पितृवंशे० जाता २ कुले मम । ते पिबन्तु मया दत्तं गोपुच्छस्य तिलोदकम् । ये बान्धवा २ वा येऽन्यजन्मनि बान्धवाः । ते० गोपुच्छस्य तिलोदकैः । आब्रह्मस्तं० इदमस्तु तिलोदकम् ॥ गोप्रार्थना । पञ्चगावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नन्दा तस्यै देव्यै नमो नमः । १ । चन्दनपुष्पैः पूजयेत् । यथा । पृष्ठे ब्रह्मणे नमः १ गले विष्णवे नमः २ मुखे रुद्राय नमः ३ मध्ये देवगणेभ्यो नमः ४ रोमकूपे महर्षिभ्यो नमः ५ पुच्छे नागेभ्यो नमः ६ खुराग्रे कुलपर्वतेभ्यो नमः ७ मूत्रे गङ्गादिनदीभ्यो नमः ८ नेत्रयोः शशिभास्कराभ्यां नमः ९ यते यस्याः स्तनौ देवाः सा धेनुर्वरदाऽस्तु मे । २ । अथ दानम् । केचिदीशानकोणमार्गेण तां निष्काश्य ब्राह्मणाय दद्यादित्याहुः, तत्र वचनमन्वेषणीयम् ॥ आज्यपात्रङ्करे कृत्वा कनकेन समन्वितम् । निक्षिप्य पुच्छन्तस्मिंस्तु घृतदिग्धं प्रगृह्यच । सतिलं विप्रपाणौ तु प्रागग्रं तन्निधाय च । सतिलं सकुशञ्चापि गृहीत्वा दानमाचरेत् ॥ ततो गोपुच्छं हस्ते गृहीत्वा कुशयवजलान्यादाय अद्येत्यादि दशपूर्वदशपरात्मीयपुरुषसहितात्मनः सम्भावितनरकोद्धरणपूर्वकं ऐहिकमकलसमृद्धिप्राप्तिपूर्वकमवत्सगोरोमसममङ्ख्यवर्षस्वर्गप्राप्तिकामः इमां गां रुद्रदैवतां सुवर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठीं कांस्यदोहां मुक्तादामघण्टाचामरविभूषितां रत्नपुच्छीं सुवस्त्राच्छादितां कृतैतदुत्सर्गसाङ्गतासिद्ध्यर्थं अमुकगोत्रायामुकशाखाध्यायिनेऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे नमम इति प्रागग्रं पुच्छं विप्रहस्ते दद्यात् । ॐ स्वस्ति इति विप्रः । ततः

कामस्तुतिं पठेत् कोदादिति मन्त्रः । गोदानसाङ्गतासिद्ध्यर्थं दक्षिणान्दद्यात् । कूपवाप्योस्तूपरि गोस्त्रिभिर्भ्रामणमिति निबन्धकाराः । अथात्र सूत्रानुक्तमपि पौराणिकमुत्सर्गादिकं फलाधिक्यात्कर्त्तव्यम् । तद्यथा । यजमानः कुशाक्षतजलान्यादाय प्राङ्मुखः सन् पठेत् । सामान्यं सर्वभूतेभ्यो मया दत्तमिदञ्जलम् । रमन्तु सर्वभूतानि स्नानपानावगाहनैः । १ । इति जलमध्ये जलप्रक्षेपेणोत्सर्गङ्कुर्यात् । यद्वा देवपितृमनुष्याः प्रीयन्तामित्युत्सर्गमन्त्रः । ततो जलाशये गङ्गोदकादितीर्थोदकानि जलाशयं स्पृष्ट्वा पञ्चमन्त्रान् पठेत् । कुरुक्षेत्रं गया गङ्गा प्रभासः पुष्कराणि च । एतानि पञ्चतीर्थानि तडागे निवसन्तु मे । १ । वितस्ता कौशिकी सिन्धुः सरयूश्च सरस्वती । एतानि पञ्च० । २ । दशार्णा मुरला सिन्धुरयावर्त्तदृषद्वती । एतानि पञ्च तीर्थानि० । ३ । यमुना नर्मदा रेवा चन्द्रभागा च वेदिका । एतानि पञ्च० । ४ । गोमती वाग्मती शोणो गण्डकी सागरस्तथा । एतानि पञ्च० । ५ । कूपोत्सर्गपक्षे निपाने निवसन्तु मे इत्यूहः । प्रवाप्यां निवसन्त्विति च वाप्यामूहः । ततो जलमातृपूजा चन्दनपुष्पादिना । ता यथा । ॐ ह्रियै नमः १ ॐ श्रियै नमः २ । ॐ शच्यै नमः ३ ॐ मेधायै नमः ४ ॐ विश्वायै नमः ५ ॐ लक्ष्म्यै नमः ६ इत्येतैर्मन्त्रैर्जलमातृभ्यो नम इत्यनेन वा जलमातृपूजनं कृत्वा, तोष्याः कर्मकराः सर्वे कुद्दालानि च पूजयेत् इति । ततो मण्डपमागत्य वस्त्रयुग्मं धेनुञ्च दक्षिणामाचार्याय दद्यात् । अत्र पाराशरस्मृतौ विशेषः । अर्द्धं शतं शतं वाऽपि विंशमष्टोत्तरं शतम् । गोसहस्रं शतं वाऽपि शतार्द्धं वा प्रदीयते । अलाभे चैव गान्दद्यादेकामपि पयस्विनीम् । अरोगां वत्ससंयुक्तां सुरूपां भूषणान्वितामिति । पाठक्रमादर्थक्रमो बलीयान् तथासत्येवं ११०० वा १५० वा १०८ वा १०० वा ५० वा २० वा १, कृतस्यामुकजलाशयस्य प्रतिष्ठाकर्मणः साङ्गतासिद्ध्यर्थं इदं बार्हस्पत्यं वासोयुग्मं रुद्रदैवतां धेनुञ्च दक्षिणामाचार्याय तुभ्यमहं सम्प्रददे नमम तेन श्री कर्माङ्गदेवताः प्रीयन्तामिति । ततः शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेषधारि त्वं यस्माद्वासः शांतिं प्रयच्छ मे । १ । धेनो त्वं पृथिवी सर्वा यस्मात्केशवसन्निभा । सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे । २ । इति दानमन्त्रौ पठेत् । ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु इत्याचार्यस्य प्रतिग्रहमन्त्रः । पाराशरीये । वस्त्रयुग्मानि विप्रेभ्यश्छत्रिका मुद्रिकाः शुभाः । दद्याद्विप्रेभ्यः सन्तोष्य छत्रोपानहमेव च । सुहेमपुरुषयुक्तां शय्यां दद्याच्च शक्तितः ॥ सुहेमपुरुषो लक्ष्मीनारायणप्रतिमा । आसनानि च शस्तानि भाजनानि निवेदयेत् । प्रसादयेद् द्विजान्भक्त्या इच्छन् पूर्त्तफलं नरः ।

राक्षोघ्नीः पितृमन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि तृप्तान् ज्ञात्वाऽन्नम्प्रकीर्य सकृत्सकृदपो दत्वा पूर्ववद्गायत्रीञ्जपित्वा मधुमतीर्मधुमध्विति च तृप्ताः स्थेति पृच्छति तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवनेज्य दद्यादाचान्तेष्वित्येक आचान्तेषूदकम्पुष्पाण्यक्षतानक्षय्योदकञ्च दद्यादघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रन्नो वर्धतां वर्धतामित्युक्ते दातारो नोऽभिवर्धन्तां वेदास्सन्ततिरेव च। श्रद्धा च नो माव्यगमद्बहुधेयञ्च नोऽस्त्वित्याशिषः प्रतिगृह्य स्वधावाचनीयान्सपवित्रान् कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चति ऊर्ज्जमित्युत्तानम्पात्रङ्कृत्वा यथाशक्ति दक्षिणान्दद्याद्ब्राह्मणेभ्यो विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा वाजेवाजेवतेति विसृज्यामांवाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्योपविशेत् ॥ ३ ॥

कर्कः ॥ उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति ॥ वैश्वदेवादन्नादुद्धृत्य घृतेनाक्तं, ततः पृच्छति अग्नौ करिष्य इत्यनेन मन्त्रेण। श्राद्धार्थं पृथक्पाकमिच्छन्त्यपरे। पिण्डदानेऽनुज्ञावचनात्। स्मृत्यन्तरेऽपि दर्शयति श्राद्धोत्तरकालं, ततो गृहबलिङ्कुर्यादिति। एतच्च पृथक् पाक एवोपपद्यते, यदि वैश्वदेवान्नेन श्राद्धमपि स्यात्। ततः पूर्वं गृहबलिना भवितव्यम्। तस्मात् पृथक्पाक इति, तदेतदपेशलम्। सर्वार्थस्य विद्यमानत्वात्। पृथक्पाकस्यावचनात्। तथा च स्मृतिः। पितृयज्ञन्तु निर्वृत्य विप्रश्चन्द्रक्षयेऽग्निमान्। पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकमिति। पितृयज्ञशब्देनोदकतर्पणादि पञ्चमहायज्ञाख्यङ्कर्मोच्यते। तदेकदेशवचनात्। तत्सम्बन्धित्वादितरेऽपि लक्ष्यन्ते। केचित्तु पितृयज्ञन्दार्शिकमभिवदन्ति। तदसत्। न हि पितृयज्ञः सः। किन्तर्हि पिण्डपितृयज्ञः सः। तस्मात् पितृयज्ञन्निर्वर्त्येति पञ्चमहायज्ञान् कृत्वेत्यर्थः। अतो वैश्वदेवादन्नात् श्राद्धमपि कर्त्तव्यम्। यस्त्वनुज्ञावचनं, सोऽदृष्टार्थोऽन्नसंस्कारः। तृप्तिप्रश्नवत्। यच्च श्राद्धोत्तरकालं गृहबलिर्न स वैश्वदेवः।

किन्तर्हि अन्य एव वास्तुदेवताभ्यो वैश्वदेवव्यतिरेकेणेति ॥ कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतशेषन्दत्वा पात्रमालभ्य जपति पृथिवी ते पात्रमिति ॥ कुरुष्वेति ब्राह्मणैरनुज्ञातः पिण्डपितृयज्ञवदावसथ्ये जुहोति । पिण्डपितृयज्ञवद्ग्रहणान्न कर्त्तव्यम् । पिण्डपितृयज्ञवदुपचार इत्युक्तत्वात्, तस्मात्परिस्तरणादि यथासम्भवेतिकर्त्तव्यताप्रसिद्ध्यर्थं द्रष्टव्यम् । हुतशेषन्दत्वा, विशेषानवगमात्सर्वेभ्यो देयम् । पात्रमालभ्य पृथिवी त इत्यमुम्मन्त्रञ्जपेत् । आलभ्य मन्त्रः । न मन्त्रान्ते आलम्भनम् । पात्रस्यैवोद्दिश्यमानत्वात् प्रतिपात्रमालम्भनम् ॥ वैष्णव्यर्चा यजुषा वाऽङ्गुष्ठमन्नेऽवगाह्यापहता इति तिलान्प्रकीर्योष्णꣳ स्विष्टमन्नन्दद्यात् ॥ नियताक्षरपादावसाना ऋगित्युच्यते । अनियताक्षरपादावसानं यजुः । तयोरन्यतरेण पात्रस्थितेऽन्ने अङ्गुष्ठावगाहनं कर्त्तव्यम् । अपहता इत्यनेन मन्त्रेण ब्राह्मणानामग्रतस्तिलान् प्रकिरेत् । रक्षोघ्नत्वात्, उदङ्मुखानाम् । अविशेषादितरेषामपीतिचेत् । न । स्वत एव रक्षोघ्नत्वात्तेषाम् । उष्णं स्विष्टमन्नं देयम् उष्णग्रहणान्नकर्त्तव्यं प्रतिषिद्धत्वादितरस्य । तस्माद्यत्पर्युषितमन्नाद्यन्तत्प्रतिषेधायेदमुच्यते । तच्चैतत् । यवगोधूमजं सर्वं पयसश्चैव विक्रिया ॥ तत्पर्युषितमप्याद्यं स्नेहाक्तञ्चैव यद्भवेत् ॥ अपरे त्वन्यथा वर्णयन्ति, यावदुष्णं भवेदन्नन्तावद्देयमिति ॥ शक्त्या वा ॥ स्विष्टाभावे शक्त्या दद्यात् ॥ अश्नत्सु जपेद्व्याहृतिपूर्वाङ्गायत्रीꣳ सप्रणवाꣳ सकृत्त्रिर्वा राक्षोघ्नीः पित्र्यमन्त्रान् पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि ॥ प्रणवेन महाव्याहृतिभिश्च त्रिर्जपेद्गायत्रीं सकृद्वा, कृणुष्व पाज इति राक्षोघ्नीः पञ्च, पित्र्यमन्त्रान् अग्नयेकव्यवाहनायेत्यादीन् । पुरुषसूक्तं सहस्रशीर्षा इति षोडशर्चम् । अप्रतिरथम् आशुः शिशान इति सप्तदश । अन्यानि च पवित्राणि जपेत् रुद्रप्रभृतीनीति ॥ तृप्तान् ज्ञात्वाऽन्नम्प्रकीर्य सकृत्सकृदपो दत्वा पूर्ववद्गायत्रीञ्जपित्वा मधुमतीर्मधुमध्विति च ॥ तृप्तान् ज्ञात्वा ब्राह्मणानामग्रतोऽन्नं प्रकिरेत् । सकृत्सकृदपो दद्यात् । वीप्सा ब्राह्मणापेक्षया । गायत्रीं सप्रणवां सव्याहृतिकां सकृत् त्रिर्वा जपित्वा । मधुमतीरिति मधुवाता इति तिस्र ऋच उच्यन्ते । मधु मध्विति च त्रिः । एतच्च केचित् द्विरुच्चारयन्ति, एतावदुपदेशात् । तदयुक्तम् । यतः प्रावर्गिकस्य मन्त्रस्यायमुपदेश इति । तस्मात् त्रिरुच्चारणम् ॥ तृप्ताः स्थेति पृच्छति ॥ ब्राह्मणान् पङ्क्तिमूर्धन्यं वा । केचित् तृप्तिप्रश्नस्य तृप्तिसंवेदनार्थत्वात्सर्वे प्रष्टव्या इति मन्यन्ते । तदन्याय्यम् । अदृष्टार्थत्वात् प्रश्नस्य ।

कथमदृष्टार्थता । तृप्तिसंवेदनस्य प्रयोजनाभावात् । अतृप्तेभ्यः पुनर्दीयत इति चेन्न । उन्मुक्तपात्रत्वात् । यच्च सकृत्सकृदपोदानं तत्पात्रोन्मोचनायैव । तस्मादनियम इत्यपरे । तस्मिन्पक्षे तृप्ताः स्थेति बहुवचनं पूजार्थन्द्रष्टव्यम् । अत्रोच्यते । सत्यपि धर्ममात्रत्वे बहुवचनान्तोपदेशात्सर्वे प्रष्टव्याः, अवगमात् । अवगम्यते हि मन्त्रोच्चारणबलात् बहुत्वम् । नचावगम्यमानोऽर्थः शक्योऽपनेतुम् । तस्मात्सर्वे प्रष्टव्याः । यत्तु पङ्क्तिमूर्धन्यं पृच्छतीति तदबहुवचनान्तेषु कृतार्थम् । अग्नौ करिष्य इत्येवमादौ चिन्तायाः प्रयोजनं सर्वेषां प्रति प्रश्नः ॥ **तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवनेज्य दद्यात्** ॥ तृप्ताः स्म इति ब्राह्मणैरनुज्ञातः शेषमन्नमनुज्ञाप्य शेषस्यान्नस्यानुज्ञां दापयित्वा सर्वमन्नमेकस्मिन्पात्रे उद्धरेत् । स चायं सर्वशब्दः शालिसूपापूपापेक्षया, न तु यावत्परिमाणं किञ्चित्सिद्धं तत्सर्वमिति । उच्छिष्टसमीप इति स देशो लक्ष्यते, नोच्छिष्टमेव प्रतिषिद्धत्वात्तस्य । दर्भेषु त्रींस्त्रीन् पिण्डानवनेज्य दद्यादिति दर्भग्रहणमिहोपमूलसकृदाच्छिन्नोपलक्षणार्थम् । पिण्डपितृयज्ञवदुपचार इति सूत्रितत्वात् । परिसङ्ख्यानार्थमितिचेन्न । उच्छिष्टसमीपोपदेशात् । त्रींस्त्रीन् पिण्डानिति वीप्सा मातामहविषया ॥ **आचान्तेष्वित्येके** ॥ उभयशास्त्रत्वाद्विकल्पः ॥ **आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकञ्च दद्यादित्येवमादि बहुदेयञ्च नोऽस्त्वित्येवमन्तं सूत्रम्** ॥ आचान्तेषु ब्राह्मणेषु तेभ्य उदकादिदानम् । तच्च पूर्वन्दैवे । ततोऽपसव्यं पित्र्ये । पित्र्ये ऽपि केचित्सव्यंनेच्छन्ति दानसंयोगात् । तन्न । पिण्डपितृयज्ञवदुपचार इति ह्युपदेशात् । अक्षय्योदकदानन्तु पित्र्य एव औचित्यात् । दैवस्य स्वत एव रक्षोघ्नत्वात् । अघोराः पितरः सन्त्वितीमं मन्त्रमुदाहरेत् । सन्त्विति प्रत्युक्ते गोत्रन्नो वर्धतामित्याह वर्धतामित्युक्ते दातारो नोऽभिवर्धन्तामिति ब्रूयात् ॥ **आशिषः प्रतिगृह्य स्वधावाचनीयान्त्सपवित्रान् कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति** ॥ स्वधावाचनीया नाम कुशाः, ते च सपवित्राः साग्रा भवन्तीत्यर्थः ॥ **वाच्यतामित्यनुज्ञातः पितृभ्य इति** ॥ इमम्मन्त्रमुदीरयेत् ॥ **अस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चत्यूर्जमिति** ॥ अस्तु स्वधेति ब्राह्मणैरुच्यमाने स्वधावाचनीयेषु कुशेष्वपो निषिञ्चेत् ऊर्जमितिमन्त्रेण ॥ **उत्तानं पात्रङ्कृत्वा यथाशक्ति दक्षिणान्दद्याद्ब्राह्मणेभ्यः** ॥ निगदव्याख्यातम् ॥ **विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा वाजे वाजे वतेति विसृज्य** ॥ वाजे

वाजे वत इत्यनेन मन्त्रेण विप्रान् विसर्जयेत् ॥ आमावाजस्येति ॥ अनेन अनुव्रजेत् ॥ प्रदक्षिणीकृत्य ॥ नमस्कृत्य च ॥ उपविशेत् ॥ ॥ ३ ॥ ॥ * ॥

गदाधरः ॥ उद्धृत्य घृताक्तमन्नम्पृच्छत्यग्नौ करिष्य इति । वैश्वदेवादन्नादुद्धृत्य घृताक्तमन्नं घृतप्लुतम्पात्रान्तरे कृत्वा ततः पृच्छति, अग्नौ करिष्य इत्यनेन मन्त्रेण। प्रश्नस्वरूपनिर्देशार्थ इतिकारः। अतश्च पर्यायान्तरेण प्रश्नाभावः। घृताक्तमिति निष्ठा भूतेऽर्थे। ततश्चाधिश्रितस्यैवाभिघारणम्। श्रुतिः॥ ताᳫं अपयति तस्मिन्नधिश्रितआज्यं प्रत्यानयत्यग्नौ वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवम्पितॄणामिति पिण्डपितृयज्ञे ह्रितूपन्यासात्। पित्र्यत्वस्यात्रापि तुल्यत्वात्। घृताक्तग्रहणं सूपशाकादिनिवृत्त्यर्थम्। तथा च विष्णुपुराणे। जुहुयाद्व्यञ्जनक्षारवर्जमिति॥ कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतशेषन्दत्वा पात्रमालभ्य जपति "पृथिवी ते पात्रन्द्यौरपिधानम्ब्राह्मणस्य मुखे अमृते अमृतञ्जुहोमि स्वाहेति ॥ ततः पङ्क्तिमूर्द्धन्येन सर्वैर्वा कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतशेषम्ब्राह्मणभाजनेषु दत्वा पात्रमालभ्य समन्तात्स्पृष्ट्वा पृथिवी तइति मन्त्रञ्जपेत्। पात्रमालभ्य जपः, न तु मन्त्रान्ते आलभेत, पात्रस्योद्दिश्यमानत्वात्प्रतिपात्रमालम्भनम्। पिण्डपितृयज्ञवदुपचार इत्यनेन पिण्डपितृयज्ञातिदेशश्चोक्तः, पुनः पिण्डपितृयज्ञग्रहणम्परिस्तरणादिपदार्थनिवृत्त्यर्थन्द्रष्टव्यम्। होममात्रस्यात्रातिदेशः। स चायमग्नौकरणहोमः साग्निनाऽऽवसथ्येऽग्नौ कर्त्तव्यः। तथा च याज्ञवल्क्यः। कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहङ्गृही। दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निष्विति। स्मार्तमत्र श्राद्धन्तदङ्गभूत अग्नौकरणहोम आवसथ्येऽग्नौ भवति। न च प्रकृतिविकृतिभावेनास्य श्रौतत्वम्। कार्यातिदेशात्। स्वरूपातिदेशे तु अवहननफलीकरणपूर्वकचर्वादिप्रवृत्तिरपि स्यात्। कार्यातिदेशे तु पुनरितिकर्त्तव्यतामात्रमेव प्राप्नुयात्। अतः स्मार्तत्वादावसथ्याग्नावेव होमः। आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहित, इति यन्मार्कण्डेयेनोक्तन्तत्सर्वाधानपक्षे ज्ञातव्यम्। आहृत्य दक्षिणाग्निन्तु होमार्थं वै प्रयत्नतः। अग्न्यर्थं लौकिकं वापि जुहुयात्कर्मसिद्धये, इति वायुपुराणीयमपि अर्धाधानपक्षे वावसथ्याहरणपक्षे वेदितव्यम्। अग्न्यभावे मनुराह। अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्। यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यत इति ॥ कात्यायनः ॥ पित्र्ये यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निकः। कृत्वा मन्त्रवदन्येषान्तूष्णीम्पात्रेषु निक्षिपेदिति। द्विजाभावे मत्स्यपुराणे। अग्न्यभावे तु विप्रस्य

पाणौ वाऽथ जलेऽपि वा । अजकर्णे ऽश्वकर्णे वा गोष्ठे वाऽथ शिवान्तिके इति । पाणिहोमपक्षे अनुज्ञावचने न स्तः प्रतिकृतित्वात् । हुतशेषदाने विप्रतिपत्तिः । हुतशेषानुल्लेखात्साधारण्याद्दैवे पित्र्ये च देयमिति कर्काचार्यमतम् । कल्पतरुहेमाद्रिमिताक्षराकाराणां मते पित्र्यएव । एतदुभयं समूलम् । शाठ्यायनिः । हुतशेषम्पूर्वं दैवे दत्वा पश्चात्पित्र्ये दद्यादिति । यमः । अग्नौकरणशेषन्तु पित्र्ये तु प्रतिपादयेत् । प्रतिपाद्य पितॄणान्तु न दद्याद्वैश्वदैविके इति । धर्मप्रदीपके । अग्न्यभावे तु विप्रस्य हस्ते हुत्वा तु दक्षिणे । शेषयेत्पितृविप्रार्थं पिण्डार्थं शेषयेत्तत इति । पात्रमालभ्य जपतीत्यत्र पात्रस्यान्नालम्भ इति केचित् । तदतीवमन्दम् । यथा "गार्हपत्यमुत्तरेणोदपात्रन्निधायालभते" इत्यत्र कर्काचार्यैः पात्रालम्भ उक्तस्तथाऽत्रापि पात्रालम्भ एव । ब्रह्मपुराणे विशेषः ॥ दक्षिणन्तुकरङ्कृत्वा वामोपरि निधापयेत् । दैवम्पात्रमथालभ्य पृथिवी ते पात्रमुच्चरन् ॥ दक्षिणोपरि वामञ्च कृत्वा पित्र्यपात्रस्यालम्भनमिति ॥ पृथिवी ते पात्रमित्यस्यार्थः ॥ हे अग्नौकरणशेष ते तव पात्रम् आधारः पृथिवी विश्वाधारभूता अपिधानं द्यौः आकाशं त्वाममृतं हुतशेषम्ब्राह्मणस्य मुखे जुहोमि । किं लक्षणे अमृते अभक्ष्यभक्षणादिभिरदूषितइत्यर्थः । ब्राह्मणस्य मुखे अग्निसदृशे त्वाममृतञ्जुहोमीति वाक्यार्थः । ब्राह्मणस्याग्निसदृशत्वमाहापस्तम्बः । पितरोऽत्र देवता ब्राह्मणस्त्वाहवनीयार्थ इति ॥ **वैष्णव्यर्चा यजुषा वाऽङ्गुष्ठमन्नेऽवगाह्यापहता इति तिलान्विकीर्य ॥** वाशब्दो विकल्पार्थः । नियताक्षरपादावसाना ऋक् । अनियताक्षरपादावसानं यजुरुच्यते । अत्र ऋग् इदं विष्णुः । विष्णो हव्यं रक्षस्वेति यजुः । इदं विष्णुरित्यन्ने द्विजाङ्गुष्ठन्निवेशयेदिति वचनात् तयोरन्यतरेण ब्राह्मणभाजनस्थिते अन्ने द्विजाङ्गुष्ठमधोमुखन्निवेश्यापहता इति मन्त्रेण ब्राह्मणानामग्रतो भूमावेव तिलान्प्रकिरेत् । रक्षोघ्नत्वादुदङ्मुखानामिति कर्कः । अविशेषादितरेषामपीति केचित् । तन्न । स्वत एव रक्षोघ्नत्वात्तेषाम् । परिवेषणमाह ॥ **उष्णꣳ स्विष्टमन्नन्दद्यात् ॥** यावदुष्णम्भवेदन्नन्तावद्देयम् । स्विष्टं यद् ब्राह्मणाय प्रेताय कर्त्रे वा रोचते । अन्नम्भक्ष्यभोज्यलेह्यचोष्यपेयात्मकम्पञ्चविधम् । यद्यप्यत्र सूत्रकृता सामान्येनोक्तमन्नन्दद्यादिति, तथापि स्मृत्यन्तराद्धविष्यं, व्रीहिशालियवगोधूममुद्गमाषमुन्यन्नकालशाकशुण्ठीमरिचहिङ्गुगुडशर्कराकर्पूरसैन्धवसम्भारपनसनारिकेलकदलीबदरगव्यपयोदधिघृतपायसमधुमांसप्रभृतीनि दद्यात् । सस्यङ्क्षेत्रगतम्प्राहुः सतुषन्धान्यमुच्यते । आमान्नं वितुषं ज्ञेयं पक्वमन्नमुदाहृत-

मिति परिभाषणात्केचिदत्र पक्वमेवान्नमित्याहुः। परिवेषणान्तर्भाभ्यामपि हस्ताभ्यामादाय कुर्यात्। तदुक्तम्मनुना। उभाभ्यामुपसङ्गृह्य स्वयमन्नस्य वर्द्धितमिति॥ विशेषमाह। कार्ष्णाजिनिः। अपसव्येन कर्तव्यम्पित्र्यङ्कृत्यमशेषतः। अन्नदानादृते सर्वमेवम्मातामहेष्वपीति। अपसव्येन यस्त्वन्नम्ब्राह्मणेभ्यः प्रयच्छति। विघ्नमश्नन्ति पितरस्ते च सर्वे द्विजोत्तमा इति। तदेतद्दानम्परिवेषणमेव॥ **शक्त्या वा॥** स्विष्टान्नाभावे यदन्नमेव शक्त्या दातुं शक्यते तद्देयमित्यर्थः। अस्मिन्समये अन्नसङ्कल्पः कार्यः। तत्रैवम्प्रयोगः। इदमन्नं यद्दत्तं यच्च दास्यमानं तृप्तिपर्यन्तन्तत्सर्वं विश्वेभ्यो देवेभ्यः स्वाहा। ततोऽमुकसगोत्रेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्योऽमुकामुकशर्मभ्यो वसुरुद्रादित्यस्वरूपेभ्यः इदमन्नं यद्दत्तं यच्च दास्यमानन्तृप्तिपर्यन्तं तत्सर्वन्तेभ्यः स्वधेति। मातामहानामप्येवं सङ्कल्पं कुर्यात्। यद्यप्यत्र ब्राह्मणहस्तेषूदकदानमाम्नातन्नास्ति, तथापि शाखान्तरसूत्रात्कर्तव्यम्। द्विजैश्च पर्युक्षणादिप्राणाहुत्यन्ताः सर्वेऽपि भोजननियमा विधेयाः। केवलम्भूमौ बलिहरणमेव न कार्यम्। तत्र बलिहरणे महादोषश्रवणात्। **अश्नत्सु जपेद्व्याहृतिपूर्वाङ्गायत्रीꣳ सप्रणवाꣳ सकृत्त्रिर्वा राक्षोघ्नीः पित्र्यमन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि॥** एकवारमिति सकृत्, वारत्रयमिति त्रिः। अत्र सङ्ख्याभ्यावृत्तिगणनेऽर्थे द्वित्रिचतुर्भ्यः सुच् इति सूत्रेण सुचोऽपवादत्वेन त्रीत्यस्याग्रे सुच् प्रत्ययः। एकस्य सकृच्चेति सूत्रेणैकस्य सकृदादेशः। सुच् प्रत्ययश्चोक्तार्थे। अश्नत्सु ब्राह्मणेषु व्याहृतिपूर्वाङ्गायत्रीं सप्रणवां सकृत्त्रिर्वा जपेत् संहितास्वरेण पठेत्। तत्रायङ्क्रमः। प्रणवम्प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम्। सावित्रीञ्चानुपूर्व्येण ततो वर्णान्समुच्चरेत्॥ राक्षोघ्नीः कृणुष्व पाज इत्याद्याः पञ्चर्चः। पित्र्यमन्त्रानुदीरतामवर इत्यादिकास्त्रयोदशर्चः। पुरुषसूक्तं सहस्रशीर्षेत्यादिकाः षोडशर्चः। अप्रतिरथम् आशुः शिशान इत्याद्याः सप्तदशर्चः द्वादशर्चा वा। अन्यानि रुद्रप्रभृतीनि। अग्नये कव्यवाहनाय स्वाहेत्यादीन्पित्र्यमन्त्रान् जपेत्। अत्र चव्यपदेशस्तानस्वरवाधनार्थः। मनुः। स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैवहीति। मत्स्यपुराणे विशेषः। ब्रह्मविष्ण्वर्करुद्राणां स्तोत्राणि विविधानि च। इन्द्रेशसोमसूक्तानि पावमानीश्च शक्तितः। बृहद्रथन्तरन्तद्वज्ज्येष्ठसाम सरौरवम्॥ मण्डलब्राह्मणन्तद्वत्प्रीतिकारि च यत्पुनः। विप्राणामात्मनश्चैव तत्सर्वं समुदीरयेत्। इन्द्रादिसूक्तानि च ऋग्वेदे प्रसिद्धानि। पुनन्तुमेत्याद्याः पावमान्यः। त्वामिद्धि हवामहे

इत्यस्यामृचि गीयते यत्तद् बृहत्साम। अभित्वाशूरनोनुम इति रथन्तरम्। मूर्द्धानन्दिव इति ज्येष्ठसाम। पुनानः सोमेति रौरवम्। ऋचं वाचमिति शान्तिकाध्यायः। यदेतन्मण्डलमित्यग्निरहस्ये मण्डलब्राह्मणम्प्रसिद्धम्। इयं पृथिवीति बृहदारण्यके मधुब्राह्मणम्। गरुडपुराणे। यो विष्णुहृदयम्मन्त्रं श्राद्धेषु नियतः पठेत्। पितरस्तर्पितास्तेन पयसा च घृतेन च॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्याम्पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्, इति विष्णुहृदयमन्त्रः। ओ श्रावयेति चत्वारि अक्षराणि, अस्तु श्रौषडिति चत्वारि, यजेति द्वे, ये यजामहे इति पञ्च, वौषडिति द्वे, एतैर्यो हूयते स यज्ञपुरुषो विष्णुर्मम प्रसीदत्वित्यर्थः। एतदनुसारि शतपथे वाक्यम्। तदेतदद्य ज्ञानस्यायातयामो श्रावयेत्यारभ्य ओश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार इति। उक्तजपासम्भवे मत्स्यपुराणे। अभावे सर्वविद्यानां गायत्रीजपमाचरेदिति। **तृप्तान् ज्ञात्वाऽन्नम्प्रकीर्य सकृत्सकृदपो दत्वा पूर्ववद् गायत्रीञ्जपित्वा मधुमतीर्मधुमध्विति च॥** तृप्तान्ब्राह्मणान् ज्ञात्वा ब्राह्मणानामग्रतोऽन्नं विकिरेदिति॥ मनुः॥ सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा। परिक्षिपेद् भुक्तवतामग्रतो विकिरन् भुवि॥ बृहस्पतिः। सोदकं विकिरेदन्नम्मन्त्रञ्चेमं समुच्चरेत्। अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिमिति॥ तत्रैवं सर्वमन्नमेकत्र पात्रे कृत्वोदकन्निषिच्याचामेत्। ब्राह्मणानामग्रतोऽन्नम्प्रकिरेदिति कर्काचार्याः॥ पङ्क्तिमूर्द्धन्यस्योत्तरदक्षिभागे अरत्निमात्रे विकिरन्दद्यादिति हेमाद्रिः। तीर्थश्राद्धे विकिराभावः। सकृत्सकृदिति वीप्सा ब्राह्मणापेक्षया, तेन वैश्वदेविकद्विजपूर्वकमेकैकस्य पाणौ तु उत्तरापोशनार्थं सकृत्सकृदुदकन्दद्यात्। पूर्ववदिति प्रणवेन व्याहृतिभिश्च सर्वां गायत्रीं सकृत्त्रिर्वा जपेत्। मधुमतीरिति मधुवाता इति तिस्र ऋच उच्यन्ते, मधुमध्वितिचेति च मधुमधुमध्वित्येवं त्रिरुच्चारणङ्कर्तव्यम्॥ **तृप्ताः स्थेति पृच्छति॥** तृप्ताः स्थ इत्येवं ब्राह्मणान्प्रति पृच्छति प्रश्नङ्करोति। अत्र बहुवचनात्सर्वे प्रष्टव्याः॥ **तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकत उद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन्पिण्डानवनेज्य दद्यात्।** ततस्तैर्द्विजैस्तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य उर्वरितस्यान्नस्यानुज्ञान्दापयित्वा सर्वमन्नं सर्वप्रकारं माषान्नवर्ज्जम्पिण्डपर्याप्तमेकस्मिन्पात्रे उद्धरेत्। दर्भेषु त्रींस्त्रीन्पि-

गडानिति दर्भग्रहणमुपमूलसकृदाच्छिन्नोपलक्षणार्थम् । त्रीँस्त्रीनिति वीप्सा माता-महाभिप्रायेण ॥ पिण्डपितृयज्ञवदुपचार इति सूत्रितत्वादत्र पिण्डपितृयज्ञवत्पि-ण्डदानम् । तेनोल्लिखत्यपहता इत्यपरेण वोलमुकम्परस्तात्करोतीत्यारभ्य वयस्यु-त्तरे यजमानलोमानि वेत्यन्तं लभ्यते । अत्राह याज्ञवल्क्यः । सर्वमन्नमुपादाय सतिलन्दक्षिणामुखः । उच्छिष्टसन्निधौ पिण्डान्दद्याद्वै पितृयज्ञवदिति ॥ अत्र पदार्थक्रमः ॥ उल्लेखनम् उदकालम्भः उल्मुकनिधानम् अवनेजनं सकृदाच्छिन्ना-स्तरणम् पिण्डदानम् । अत्र पितर इत्युक्तोदङ्ङातमनम् । आवृत्यजपः । पुनरव-नेजनम् । नीवीविसर्गः । नमो व इति षण्नमस्काराः । सूत्रदानम् । स्मृत्युक्तम्पूज-नम् । इति क्रमः ॥ आचान्तेष्वित्येके ॥ एके आचार्याः आचान्तेषु ब्राह्मणेषु पिण्डदानमिच्छन्ति ॥ आचान्तेषूदकम्पुष्पाण्यक्षतानक्षय्योदकन्दद्यात् ॥ ब्राह्मणेषु सत्सु तेभ्य उदकादिकञ्च दद्यात् । पुष्पाणि चाप्रतिषिद्धानि पद्मोत्प-लमल्लिकायूथिकाशतपत्रचम्पकादीनि गन्धरूपसम्पन्नान्यन्यान्यपि दद्यात् ॥ तत्राय-म्प्रयोग उक्तश्छन्दोगपरिशिष्टे । अथात्र भूमिमासिञ्चेत्प्रोक्षितमिति । शिवा आपः सन्त्विति युग्मानेवोदकेन च । सौमनस्यमस्त्विति पुष्पदानमनन्तरम् । अक्षतञ्चा-रिष्टञ्चास्त्वित्यक्षतान्प्रतिपादयेत् । अक्षय्योदकदानन्तु ह्यर्घदानवदिष्यते । षष्ठ्यैव-नियतङ्कुर्यान्न चतुर्थ्या कदाचन ॥ युग्मानिति वृद्धपरं प्रकरणात् । पित्राद्युल्लेखा-भावाद्धस्ते प्रक्षेपमात्रस्य विधानादिदञ्जलादित्रिकन्दैवे पित्र्ये च कार्यम् । यज्ञोपवी-तिना देयमिति शङ्खधराचार्यः । तथा शातातपोऽपि । ततः पुष्पाणि सव्येन उद-कानि पृथक् पृथगिति । इदञ्जलादिदानन्दैवे सव्येनेति, पित्र्ये त्वपसव्येनेति कर्का-चार्याः । हस्ते प्रतिपादितानामपां चिरधारणे प्रयोजनाभावाच्छुचौ देशे स्थापन-मेव । पुष्पाणान्त्वत्र ब्राह्मणा यजमानायाशिषम्प्रयच्छन्ति । मत्स्यपुराणे । शौचा-न्तेषु पुनर्दद्याज्जलपुष्पाक्षतोदकम् । दत्वाशीः प्रतिगृह्णीयाद् द्विजेभ्यः प्राङ्मुखो द्विजः ॥ अक्षय्योदकशब्देन दत्तान्नपानादेरानन्त्यप्रार्थनसम्बन्धि जलमभिधीयते । तच्च पितृ-ब्राह्मणेभ्य एवेति कर्कः । सर्वेभ्यो दद्यादिति स्मृत्यर्थसारे । अघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रन्नो वर्द्धतां वर्द्धतामित्युक्ते दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो माव्यगमद्बहुदेयञ्च नोऽस्त्विति । आशीःप्रार्थन-म्प्रपञ्चयति । तत्र यजमानः अघोराः पितरः सन्त्विति ब्रूयात् । ब्राह्मणाश्च सन्त्विति ब्रूयुः । तैस्तथोक्ते यजमानो गोत्रन्नो वर्द्धतामित्याह । ब्राह्मणैश्च वर्द्धतामित्युक्ते यजमानो दातारो नो ऽभिवर्द्धन्तामिति ब्रूयात्, द्विजैर्वर्द्धन्तामित्युक्ते कर्ता वेदा

वर्द्धन्तामिति ब्रूयात् ।. तैर्वर्द्धन्तामित्युक्ते यजमानः सन्ततिर्वर्द्धतामिति । वर्द्धतामिति ब्राह्मणाः । श्रद्धा च नो मा व्यगमदिति यजमानः, मागादिति ब्राह्मणाः । बहुदेयञ्च नोऽस्त्विति कर्ता । अस्त्विति ते ब्रूयुः । अत्र मनुराह । दक्षिणान्दिशमाकाङ्क्षन्याचेतेमान्वरान्पितॄनिति ॥ **आशिषः प्रतिगृह्य स्वधावाचनीयान्सपवित्रांन्कुशानांस्तीर्य स्वधां वाचयिष्यइति पृच्छति** ॥ उक्तप्रकारेणाशीर्ग्रहणङ्कृत्वा स्वधावाचनीयसञ्ज्ञकान्सपवित्रान्कुशानांस्तीर्य पिण्डसमीपे भूमौ स्तृत्वा स्वधां वाचयिष्यइति पङ्क्तिमूर्द्धन्यं सर्वान्वा पृच्छेत् । सपवित्रान्साग्रानित्यर्थः । न्युब्जपात्रोपरि स्थितपवित्राण्यर्घपवित्रैः सह समानीय पिण्डानाम्पश्चिमतो दक्षिणाग्राणि निधाय स्वधां वाचयिष्यइति पृच्छेदिति हेमाद्रिः । सकुशानि पवित्राणि पिण्डानामुपर्यास्तीर्य स्वधां वाचयिष्यइति पृच्छेदिति देवयाज्ञिकाः ॥ **वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामिति** । ततस्तैर्द्विजैर्वाच्यतामित्यनुज्ञातः पितृभ्य इत्यादि स्वधोच्यतामित्येवम्मन्त्रमुदाहरेत् ॥ **अस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चत्यूर्जमिति** । अस्तु स्वधेत्युच्यमाने सति स्वधावाचनीयेषूदकन्निषिञ्चत्यूर्जमित्यनेन मन्त्रेण । आसेचनप्रयोगानामङ्गाङ्गीभावः । अवसरनिर्देशकत्वाच्छानचः । अतो वृद्धिश्राद्धेऽपि भवति । मन्त्रश्चार्य समवेतार्थः । अतोऽस्य मातृश्राद्धे मातृभ्यः पितामहीभ्य इत्याद्यूहः सङ्ख्यासमवेतार्थः । अतश्चैकोद्दिष्टेनोहः । **उत्तानम्पात्रङ्कृत्वा यथाशक्ति दक्षिणान्दद्यात्** । शक्तिमनतिक्रम्येति यथाशक्ति । अत्र शातपथी श्रुतिः । स एष यज्ञो हतो न *ददक्षे । तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनन्दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नामेति ॥ स्मृतौ ॥ गोभूहिरण्यवासांसि कन्याभवनभूषणम् । दद्याद्यदिष्टं विप्राणामात्मनः पितुरेवचेति । अदक्षिणञ्च श्राद्धं न कुर्यात् । तथा च श्राद्धकल्पे । न कुर्याद्दक्षिणाहीनं दहेच्छ्राद्धमदक्षिणमिति । तथा च शतपथब्राह्मणे । तस्मान्नादक्षिणꣳ हविः स्यादिति ॥ **विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा वाजेवाजे वतेति विसृज्य** ॥ वाचयित्वेति कारितत्वादध्येषणा भवति 'विश्वेदेवाः प्रीयन्तामिति ब्रूहीति । दैवब्राह्मणाश्च विश्वेदेवाः प्रीयन्तामिति ब्रूयुः । ततो वाजे वाजे वत इति मन्त्रेण विप्रान्विसर्जयेत् । विसर्जनन्तु पितृपूर्वकम् । तथा च याज्ञवल्क्यः । वाजे वाजे इति प्रीतः पितृपूर्वं विसर्जयेदिति । निमन्त्रणादिपदा-

* न ददर्श फलं जनयितुं न शशाक इति सायणाचार्यभाष्ये ।

र्थजातन्देवपूर्वम्भवति । विसर्जनन्तु पितृपूर्वमिति मेधातिथिः । देवलोऽपि । पूर्वमुत्थापयेत्पितृन्वाच्यतामिति च ब्रुवन् । उत्थिताननुगच्छेत्तु तेभ्यः शेषञ्च संहरेत् । पश्चात्तु वैश्वदेविकान्विप्रानुत्थापयेत्तथा । एते हि पूर्वमासीनाः समुत्तिष्ठन्ति पश्चिमा इति ॥ **आमावाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्य नमस्कृत्योपविशेत्** ॥ आमावाजस्येति मन्त्रेणानुव्रज्यामु पश्चात् द्विजान्सीमान्तङ्गत्वा प्रदक्षिणीकृत्य स्वगृहम्प्रविशेत् ॥ ॥ * ॥ इति गदाधरभाष्ये तृतीयकण्डिका ॥ ३ ॥ * ॥

अथ प्रयोगपद्धतिः । तत्र कालाः । अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् । विषुवत्सूर्यसङ्क्रमो व्यतीपातो गजच्छाया ग्रहणयुगादिमन्वादयश्च । तथा विशिष्टे देशे गयादौ विशिष्टे काले च मृताहादौ द्रव्यब्राह्मणसम्पत्सु चात्मरुचिश्चेत्याद्याः कालाः ॥ अथ श्राद्धाधिकारिनिर्णयः ॥ प्रमीतयोः पित्रोर्मुख्यो गौणाश्च पुत्राः श्राद्धङ्कुर्युः । तदभावे दायहरः । पौत्रः पुत्रिकापुत्रो वा तदभावे सहोदराः तत्सन्ततिर्वा तदभावे पुरोहितः तदभावे भृत्याः सुहृदश्च कुर्युः । सर्वाभावे नरपतिस्तज्जातीयैः कारयेत् । नरपतिः सर्ववर्णानाम्बान्धव इति स्मरणात् । ब्राह्मविवाहोढा साध्वी चेत्पुत्राभावे पत्न्येवाधिकारिणी यदि क्रयक्रीता न भवति । क्रय क्रीता च या नारी न सा पत्नी विधीयते । न सा दैवे न सा पित्र्ये दासीन्ताङ्केवलां विदुः ॥ सर्वाभावे त्वस्या अध्यमन्त्रके श्राद्धेऽधिकारः । एक एव चेत्पुत्रस्तदाऽसावनुपनीतोऽपि कृतचौलश्चेदमन्त्रकं श्राद्धं कुर्यात् । अपुत्रायाः पतिर्दद्यात्सपुत्रायाश्च न क्वचित् । पित्रा श्राद्धन्न कर्तव्यम्पुत्राणाञ्च कदाचन ॥ भ्रात्रा चैव न कर्तव्यम्भ्रातृणाञ्च कनीयसाम् । अपि स्नेहेन कुर्याच्चेत्सपिण्डीकरणं विना ॥ गयायान्तु विशेषेण ज्यायानपि समाचरेत् । धनहारित्वादिनियमाभावे प्रीत्या यस्य कस्यापि वर्णस्य श्राद्धे कृते महत्फलमाह शातातपः । प्रीत्या श्राद्धन्तु कर्तव्यं सर्वेषां वर्णलिङ्गिनाम् । एवङ्कुर्वन्नरः सम्यङ्महतीं श्रियमाप्नुयात् ॥ ब्राह्मणो ह्यसवर्णस्य यः करोत्यौर्द्ध्वदेहिकम् । तद्वर्णत्वमवाप्नोति इह लोके परत्र च ॥ दौहित्रेण तु सपिण्डीकरणादिव्यतिरेकेण यदा यदा पितृश्राद्धं तदा तदा मातामहश्राद्धङ्कर्तव्यमेव । पितरो यत्र पूज्यन्ते तत्र मातामहा अपि । अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् । तत्पिण्डपितृयज्ञव्यतिरिक्तविषयम् । अन्वष्टकासु पूर्वं सुरातर्पणेन तथैव पश्चादन्वष्टक्यां त्रिपार्वणं सपिण्डीकरणम् ॥ यः पुनर्धनहारी दौहित्रस्तेन त्ववश्यन्नवश्राद्धाद्यपि कार्यमेव । क्षमाहे तु एकपार्वणमेव

साग्निकानामेकोद्दिष्टं वा । यो यत आददीत स तस्यैव श्राद्धं कुर्यादिति स्मरणात् । मातामहस्यावश्यश्राद्धमवश्यन्धनहारिणा दौहित्रेण कार्यम् । दौहित्रेणार्थनिष्कृत्यै कर्त्तव्यं विधिवत्सदा । आदेहपतनात्कुर्यात्तस्य पिण्डोदकक्रियाम् ॥ यस्तु केवलम्मातामहेन सम्बद्धः पुत्रिकापुत्रः स मातामहस्यैव नियमेन श्राद्धङ्कुर्यात् । पुत्रिकापुत्रश्राद्धे विशेषमाह मनुः ॥ मातुः प्रथमतः पिण्डन्निर्वपेत्पुत्रिकासुतः । द्वितीयन्तु पितुस्तस्यास्तृतीयमपि तत्पितुः ॥ द्व्यामुष्यायणे पुत्रिकापुत्रे उशनसोक्तो विशेषः ॥ मातामहन्तु मात्रादि पैतृकम्पितृपूर्वकम् । मातृतः पितृतो यस्मादधिकारोऽस्ति धर्मत इति ॥ क्षेत्रजे तु द्व्यामुष्यायणे देवलोक्तम् । द्व्यामुष्यायणका दद्युर्द्वाभ्याम्पिण्डोदकम्पृथगिति । द्वाभ्याम्पितृवर्गाभ्यामित्यर्थः । द्विपितुः पिण्डदानं स्यात्पिण्डे पिण्डे द्विनामता । षण्णामत्र त्रयः पिण्डा एकैकन्तु त्रयेऽहनि ॥ पोषकः प्रथमः ततो जनकः अत्र क्रमविशेषमाह । मरीचिः । सगोत्रो वाऽन्यगोत्रो वा यो भवेद्विधवासुतः । पिण्डश्राद्धविधानञ्च क्षेत्रिणे प्रागविनिर्वपेत् ॥ बीजिनेतु ततः पश्चात्क्षेत्री जीवति चेत्क्वचित् । बीजिने दद्युरादौ तु मृते पश्चात्प्रदीयत इति ॥ जीवत्पितृकस्यापि क्वचित्क्वचिच्छ्राद्धाधिकारः । तत्र मैत्रायणीयपरिशिष्टे विशेषो दर्शितः । उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मणआयाते षडेते जीवतः पितुः ॥ पुत्रस्य श्राद्धकाला इतिशेषः । जीवत्पितृकेण आश्विनप्रतिपदि मातामहश्राद्धम्फलातिशयप्राप्तये नियमेन कार्यम् । जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले । कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते इति ॥ अथ श्राद्धार्हब्राह्मणलक्षणम् ॥ तत्र महाभारते । विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व एव हि । सदाचारपराश्चैव विज्ञेयाः सर्वपावनाः । पाङ्क्त्येयांस्तु प्रवक्ष्यामि ज्ञेयास्ते पङ्क्तिपावनाः । तृणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् । ब्रह्मदेयानुसन्तानश्छन्दोगो ज्येष्ठसामगः ॥ मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः । ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा । वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत । अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः । सत्यवादी धर्मशीलः स्वकर्मनिरतश्च यः ॥ ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः । मखेषु च समन्त्रेषु भवन्त्यवभृथप्लुताः । अक्रोधना ह्यचपलाः क्षान्ता दान्ता जितेन्द्रियाः । सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत् इति । यथोक्तगुणाभावे किञ्चिद्धीनगुणाश्च वैश्वदेविकार्थमुपवेशनीयाः । पित्र्ये तु यथोक्तगुणा एव भोज्याः । गयायान्तु निर्गुणा अपि तत्रस्था एव द्विजा भोज्याः । यथोक्तद्विजाभावे मातामहमातुलस्वस्रीयश्वशुरदौहित्रजामातृऋत्विग्याज्यशिष्या अपि गुणवन्तश्चेच्छ्राद्धे भोजनीयाः ।

अथैकस्यापि ब्राह्मणस्यालाभे अनुकल्पान्तरमुक्तम्प्रभासखण्डे । अलाभे ब्राह्मणस्यैव कौशः कार्यो बटुः प्रिये । एवमप्याचरेच्छ्राद्धं षड्दैवत्यं समाहितः । विभक्तिङ्कारयेद्यस्तु पितृहा स प्रजायते । कौशः कुशमयो बटुः लघुमनुष्यप्रकृतिः तं बटुं ब्राह्मणत्वेन परिकल्प्य सर्वञ्छ्राद्धं समाचरेत् । विभक्तिः कर्मणश्छेदो लोप इति यावत्, तन्न कुर्यात्। तथा "पात्राभावेऽखिलङ्कृत्वा पितृयज्ञविधिन्नरः । निधाय वा दर्भबटूनासनेषु समाहितः ॥ प्रैषानुप्रैषसंयुक्तं विधानम्प्रतिपादयेत् । सर्वाभावे क्षिपेदग्नौ गवे दद्यादथाप्सुवा ॥ नैव प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषत" इति देवलः । प्रैषानुप्रैषसंयुक्तमिति श्राद्धं सम्पन्नमित्यादिप्रैषप्रतिवचने स्वयमेव वदेदित्यर्थः ॥ अथ नियमाः ॥ मनोवाक्कर्मभिरहिंसा निमन्त्रितब्राह्मणापरित्यागस्ताम्बूलतुरकर्माभ्यञ्जनदन्तधावनपरित्यागश्चेति कर्तृनियमाः । निमन्त्रणमभ्युपगम्यानपक्रमणमन्यत्राभोजनमेकत्रनिमन्त्रितस्यान्येषामन्नादेरप्यग्रहणम् । आहूतस्य कुतपकालाद्यनतिक्रमणम् । इति द्विजनियमाः । निमन्त्रणादुपरि श्राद्धान्नव्यतिरिक्तभोजनपुनर्भोजनासत्यवादिताशौचमत्वरितत्वंमृतौ स्वदारेष्वपि नियुक्तस्यापि मैथुनाकरणं विशेषतः शूद्रायाः परिहरणम् । अस्वाध्यायक्रोधक्रौर्यकलहद्यूतभारोद्वहनप्रतिग्रहप्रमादमदमोहलोभाहङ्कारकार्पण्यस्तेयवर्जनम् । इत्युभयनियमाः । अथ श्राद्धदिनात्प्राचीनदिनकृत्यम् । तत्र कर्ता स्वगृहे निरामिषं भुक्त्वा ब्राह्मणनिमन्त्रणम्प्रदोषान्ते करोति । विष्णुस्मरणम्प्राणायामत्रयङ्कृत्वा यज्ञोपवीती उदङ्मुखः प्राङ्मुखस्य द्विजस्य दक्षिणञ्जानूपस्पृश्य ॐ दैवे क्षणः क्रियतामिति वदेत् । ॐ तथेति प्रत्युक्तिः । प्राप्नोतु भवानित्युक्ते प्राप्नवानीति प्रत्युक्तिः । तत अक्रोधनैरित्यादि श्रावयेत् । एवम्मातामहविश्वेदेवसम्बन्धिनिमन्त्रणम् । ततः प्राचीनावीती दक्षिणाभिमुख उदङ्मुखद्विजस्य दक्षिणजानूपस्पृश्य ॐ अमुकगोत्रस्यामुकशर्म्मणोऽस्मत्पितुः सपत्नीकस्य श्राद्धे क्षणः क्रियतामित्यादि । एवमयम्पितुरयम्पितामहस्यायम्प्रपितामहस्येत्यादिनिर्द्धारणङ्कृत्वा मातामहद्विजान्निमन्त्रयेत् । यावत्सङ्ख्याश्च पितृद्विजास्तावत्सङ्ख्या एव मातामहद्विजास्तथैव निमन्त्रणीयाः । तत "अक्रोधनैः शौचपरैः सततम्ब्रह्मचारिभिः । भवितव्यम्भवद्भिश्च मया च श्राद्धकारिणा ॥ इति नियमाञ्छ्रावयेत् । सन्ध्यां च वैश्वदेविकम् ॥ इति श्राद्धदिनात्प्राचीनदिनकृत्यम् । पूर्वदिने निमन्त्रणासम्भवे श्राद्धदिने प्रातर्निमन्त्रणम् । अथ श्राद्धदिनकृत्यम् । तत्र दन्तधावनवर्जम्प्रातःकालिककर्म कृत्वा उद्वर्त्तनद्रव्यस्नानीयतिलामलककल्कांस्ताम्रपात्रे सम्भृतान्कृत्तम-

अनलेभ्यो निमन्त्रितद्विजेभ्यो देवपूर्वकम्प्रेष्यद्वारा दापयेत् । ततः पाकभूमेर्गोमयोपलेपादिसंस्कारकरणम् महानसे च । सचैलस्नातः सपत्नीको यजमानः स्वयम्पाकमारभेत । असम्भवे तु शुचिभिः स्नातैः सवर्णैर्वा कारयेत् । ततः श्राद्धसम्भारोपकल्पनम् । अथाह्नः षष्ठे मुहूर्ते नद्यादौ नित्यस्नानन्ततः कर्माङ्गस्नानम् । ततः श्राद्धार्थमुदकमानीय पत्न्या सह शुचिः शुक्लवासाः श्राद्धदेशमागत्योदकं स्थापयेत् । अथापराह्णकृत्यम् । तत्रागतान्द्विजान्दृष्ट्वा भवतां स्वागतमिति प्रत्येकम्ब्रूयात् । सुस्वागतमिति द्विजैर्वक्तव्यम् । ततस्तेभ्य उदकदानम् । मण्डलकरणम् । आचमनार्थञ्जलदानम् । तैश्चाचमनकरणम् । ततो यजमानस्य पादप्रक्षालनपूर्वकन्द्विराचमनम् । ब्राह्मणानामुपवेशनम् । अस्मिन्नवसरे दीपानां स्थापनम् । ततः कर्तोपविश्य "गङ्गायै नमः । गदाधराय नमः" इति वदेत् । पुण्डरीकाक्षं स्मृत्वा "देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ॥ इति त्रिः पठेत् । तत अद्येत्यादिकालज्ञानङ्कृत्वा, अमुकसगोत्राणामस्मत्पितृपितामहप्रपितामहानां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा मातामहादीनां सङ्कीर्तनङ्कृत्वा पार्वणद्वयविधिनाऽमुकनिमित्तं श्राद्धं करिष्य इति सङ्कल्पङ्कुर्यात् । ततो "निहन्मि सर्वं यदमेध्यमत्र निहन्मि सर्वानपि दानवासुरान् । यक्षाश्च रक्षांसि पिशाचगुह्यका हता मया यातुधानाश्च सर्वे" इति पठेत् । नीवीबन्धनम् । ततस्तिला रक्षन्त्वसुरान् दर्भा रक्षन्तु राक्षसान् । पङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः । इति द्वारि तिलकुशनिक्षेपः । अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् । तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः । ऊर्द्ध्वतस्त्वर्यमा रक्षेत्कव्यवाडनलोऽप्यधः ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः । सर्वतश्चाधिपस्तेषां यमो रक्षाङ्करोतु मे ॥ इति यथालिङ्गं दिशि दिशि तिलान्प्रकिरेत् । रक्षोभूतेति सर्वतः प्रकिरणम् । ततः कर्मार्थं जलाभिमन्त्रणं दर्भैरालोडयन् यद्देवा इतित्र्यृचेन । अत ऊर्द्ध्वञ्जलकार्यमनेन । दुष्टदृष्टिनिपातनादिदूषितः पाकः पूतो भवत्विति पाकप्रोक्षणम् । सव्यम् । पुरूरवार्द्रवसञ्ज्ञकानां विश्वेषान्देवानामिदमासनम् । हस्तप्रक्षालनम् । अपसव्यम् । गोत्राणाम्पितृपितामहप्रपितामहानाममुकामुकशर्म्मणामिदमासनम् । हस्तप्रक्षालनम् । एवम्मातामहादीनाम् । सव्यम् । पुरूरवार्द्रवसञ्ज्ञकान्विश्वान्देवानावाहयिष्ये, इति प्रश्नः । आवाहयेति प्रत्युक्तिः । दक्षिणं जान्वालभ्य विश्वेदेवास इत्यावाहनम् । यवविकिरणम् । विश्वेदेवाः शृणुतेममिति जपः । आगच्छन्त्वित्यपि जपेत् ।

अपसव्यम् । अमुकगोत्रान्पितॄनावाहयिष्ये, इति प्रश्नः । आवाहयेति० प्रत्युक्तिः । उशन्तस्त्वेत्यावाहनम् । तिलविकिरणम् । आयन्तु न इति जपः । एवम्मातामहादीनामावाहनम् । ततः सव्यङ्कृत्वा वैश्वदेविकं पात्रन्निधाय पवित्रान्तर्हिते शन्नोदेवीरिति जलमासिच्यापसव्यङ्कृत्वा पितृपात्राणि निधाय पवित्रान्तर्हितेषु शन्नोदेवीरिति जलासेकः । सव्यम् । यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः । निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतः । इति देवपात्रे यवप्रक्षेपः । यवोसि यवयेति मन्त्रेण वा यवप्रक्षेपः । तिलपक्षे तु तिलोसीति मन्त्रेण । तिलोसीति पितृपात्रेषु मन्त्रावृत्त्या तिलप्रक्षेपः । सर्वपात्रे चन्दनपुष्पप्रक्षेपो देवपितृधर्म्मेण । सव्यम् । वैश्वदेविकपवित्रदानम् । पूजनम् । यादिव्या इत्यर्घदानम् । एवं सर्वत्र । प्रथमे पात्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति पात्रन्युब्जीकरणम् । तदुपरि कुशनिधानम् । पुत्रकामश्चेत्संस्रववन्दनम् "आपः शिवा" इति । ततो गन्धादिदानम् । तत्रैवम् । सव्यम् । यथादत्तगन्धाद्यर्चनम्पुरूरवार्द्रवसञ्ज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वाहा । अपसव्यङ्कृत्वैवम्पितृभ्यो .दानम् । आचमनम्प्राणायामः । ब्राह्मणाग्रे भाजनानि निधाय उक्तप्रकारेण मण्डलानि कुर्यात् । अपसव्यम् । अन्नमुद्धृत्य "अग्नौकरिष्ये" इति प्रश्नः । कुरुष्वेति प्रत्युक्तिः । ॐ अग्नये कव्यवाहनाय स्वाहा । इदमग्नये कव्यवाहनाय नमम । ॐ सोमाय पितृमते स्वाहा । इदं सोमाय पितृमते न ममेति द्वयोस्त्यागौ । स्वयङ्कर्तृके त्यागाभाव इति हेमाद्रिपद्धतौ । हुतशेषम्पात्रे दत्वा पात्रमालभ्य जपति "पृथिवी त" इति प्रतिपात्रम्मन्त्रावृत्तिः । वैष्णव्यर्चा यजुषा वाऽन्नेऽङ्गुष्ठावगाहनम् । तिलविकिरणम् । परिवेषणम् । सङ्कल्पः पूर्वोक्तप्रकारेण । सकृत्सकृदुदकदानं विप्रहस्तेषु । ततोऽश्नत्सु जपो यथोक्तः । तृप्तान् ज्ञात्वोक्तप्रकारेणान्नप्रकिरणम् । आचमनम् । सकृत्सकृदुदकदानं विप्रहस्तेषु । पूर्ववद्गायत्रीजपः । मधुव्वाता० भवन्तु नः, मधु मधु मधु, इति जपेत् । तृप्ताः स्थेति प्रश्नः । तृप्ताः स्म, इति प्रत्युक्ते शेषमन्नमप्यस्तीति ब्रूयात् । इष्टैः सह भुज्यतामिति प्रतिवचनम् । हेमाद्रिणा कर्कमते पिण्डार्थमुपयुज्यतामिति प्रयोगो दर्शितः । सर्वमन्नमेकत उद्धृत्य उल्लेखनमपहता इति । साग्निकस्य वज्रेण । इतरस्य तु कुशमूलेन । जलस्पर्शः । अग्निमत उल्मुकनिधानम् प्रतिपार्वणम् । अमुकगोत्र पितरमुकशर्म्मन्नित्यवनेजनम् । एवम्पितामहप्रपितामहयोर्मातामहादीनाञ्च । सकृच्छिन्नास्तरणम् । अमुकगोत्र पितरमुकशर्म्मन्नेतत्तेऽन्नं स्वधेति पिण्डदानम् । इदममुकाय नममेत्येवमुभयत्र । सर्वत्र मातामहानामप्येवमेव विधेयम् । अत्र पितर इत्युक्त्वा उदङ्ङातमनम् ।

आवृस्यामीगदन्तेति जपः । पूर्ववदवनेजनम् । नीवीविसर्गः । नमोव इति षडञ्जलिकरणम् । एतद्व इति सूत्रदानम् । पञ्चाशद्वर्षादूर्द्ध्वं यजमानहृदयलोम्नां वा दानम् । पिण्डपूजनम् । चन्दनपुष्पधूपदीपनैवेद्यानि गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः स्वधेति । एभिः पिण्डदानैरस्मत्पितॄणामक्षय्या तृप्तिरस्तु । काले श्राद्धम्भवतु इति प्रार्थना ॥ आचमनम् । सुप्रोक्षितोऽयन्देशोऽस्त्विति जलेन भूमिं सिञ्चेत् । शिवा आपः सन्त्विति उदकदानम्ब्राह्मणेभ्यः । सौमनस्यमस्त्विति पुष्पदानम् । अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतदानम् । अमुकगोत्रस्य पितुरमुकशर्म्मणो दत्तं श्राद्धमुदकञ्चाक्षय्यमस्तु । एवम्पितामहप्रपितामहयोः । ततो द्विजानाम्प्रार्थना । येषामुद्दिष्टन्तेषामक्षय्यमस्तु । अस्त्विति प्रत्युक्तिः । अघोराः पितरः सन्त्विति प्रश्नः । सन्त्विति प्रत्युक्तिः । गोत्रन्नो वर्द्धतामिति प्रश्नः । वर्द्धतामिति प्रत्युक्तिः । दातारो नोऽभिवर्द्धन्तामिति प्रश्नः । वर्द्धन्तामिति प्रत्युक्तिः । वेदा वर्द्धन्तामिति प्रश्नः । वर्द्धन्तामिति प्रत्युक्तिः । सन्ततिर्वर्द्धतामिति प्रश्नः । वर्द्धतामिति प्रत्युक्तिः । श्रद्धा च नो माव्यगमत्, मागादिति प्रत्युक्तिः । बहुदेयञ्च नोऽस्तु, अस्त्विति प्रत्युक्तिः । पात्रोपरि स्थापितकुशानामभ्रमावास्तरणम् । ततः स्वधापितॄन्वाचयिष्ये इति प्रश्नः । वाच्यतामित्युक्ते । पितृभ्यः स्वधोच्यताम्पितामहेभ्यः स्वधोच्यताम्प्रपितामहेभ्यः स्वधोच्यताम्मातामहेभ्यः स्वधोच्यताम्प्रमातामहेभ्यः स्वधोच्यतां वृद्धप्रमातामहेभ्यः स्वधोच्यताम् इति मन्त्रम्पठेत् । अस्तु स्वधेति प्रत्युक्ते । आस्तृतकुशेषु ऊर्जमित्युदकासेकः । पात्रोत्तानकरणम् । ततः श्राद्धस्य प्रतिष्ठाभिवृद्ध्यर्थन्दक्षिणाम्मुखवासताम्बूलञ्च विश्वेभ्यो देवेभ्यः स्वाहा इदं वि० नमम । अस्य श्राद्धस्य प्रतिष्ठासिद्ध्यर्थन्दक्षिणाम्मुखवासताम्बूलञ्चामुकगोत्रेभ्य इत्यादि स्वधा नममेति त्यागः । विश्वेदेवाः प्रीयन्तामिति वदेत् । प्रीयन्तामिति प्रत्युक्तिः । विश्वेदेवाः शान्तिदाः पुष्टिदा वरदा भवन्तु । भवन्त्विति द्विजाः । अन्नञ्च नो बहु भवेत् । बहु भूयात् । अतिथींश्च लभेमहि, लभध्वम् । याचितारश्च नः सन्तु, सन्तु । मा च याचिष्म कञ्च न । मा याचेथाः । एता एवाशिषः सन्तु । इति प्रार्थना । ततः स्वयमेव तिलककरणम् । पिण्डानाम्प्रत्यवधानम् । सव्यम् । पिण्डावघ्राणम् । सकृदाच्छिन्नानामग्नौ प्रक्षेपः । पश्चादुलमुकस्य च । भोजनपात्राणि चालयित्वा सञ्चराभ्युक्षणम् । कालज्ञानङ्कृत्वा अमुकपितॄणाङ्कृतस्य श्राद्धविधेर्यन्न्यूनातिरिक्तन्तत्परिपूर्णमस्तु । अस्तु परिपूर्णमिति ब्राह्मणोक्तिः ॥ वाजे वाजे इति पितृपूर्वं विसर्जनम् । आमावाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्य नमस्कृत्य गृहप्रवेशः ॥ ॥ * ॥

अथ साग्निकनिरग्निकादीनां दर्शाष्टकादिश्राद्धे निमित्ततः पिण्डाभाव उच्यते ॥ तदाह कार्ष्णाजिनिः ॥ मौञ्जीबन्धाद्विवाहाच्च वर्षार्द्धं वर्षमेव वा । पिण्डान्सपिण्डा नो दद्युः सपिण्डीकरणादृते ॥ अत्र सपिण्डीकरणे पिण्डविधानात्तत्पूर्वेषामुत्क्रान्तप्रभृतीनां श्राद्धानामर्थात्पिण्डदानमनुज्ञातमिति । उद्वाहे कृतेऽपि महालयगयाश्राद्धमृताहेषु पिण्डान्दद्युः । तदुक्तम् । महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि । कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुत इति ॥ गयाशब्देन तीर्थान्युपलक्ष्यन्ते ॥ मृतेऽहनीति मातापित्रोस्तद्व्यतिरिक्तानामपि च मृताहेऽनुमासिकेषु च ॥ सङ्ग्रहेऽपि । विवाहोपनयादूर्द्ध्वं वर्षार्द्धं वर्षमेव वा । न कुर्यात्पिण्डनिर्वापं न दद्यात्करणानि च ॥ करणान्यावाहनार्घादीनि । विवाहादिनिमित्तेनोक्तकालपर्यन्तममावास्याष्टकासु साङ्कल्पिकं श्राद्धं कुर्यात् । अतिबलात्पिण्डपितृयज्ञस्तु भवत्येव ॥ अथ सांवत्सरिके विशेषः । तत्र विभक्ताश्चेत्सर्वे नो चेज्ज्येष्ठपुत्र एव । मातृसांवत्सरिके यथोचित ऊहः कार्यः । यत्र च मात्रा स्वामिचित्यारोहणङ्कृतन्तत्रैकमेव पाकङ्कृत्वा पितृश्राद्धं पृथक् कृत्वैकबर्हिषि षट् पिण्डान्दद्यात् । विप्रपङ्क्तौ सुवासिनीश्चाधिकां भोजयेदिति श्राद्धभास्करे । एकदिनेऽनेकश्राद्धप्रसक्तौ पूर्वं पितुः पश्चात्पितृव्यादीनां श्राद्धङ्कार्यम् । मृताहे ग्रहणं चेदामेन हेम्ना वा आब्दिकङ्कार्यम् । मृताहे आशौचादिप्रतिबन्धे तदन्ते कर्तव्यम् । मातृपितृक्षयाहे श्राद्धकर्तुः स्त्री स्त्रीकर्तृके वा श्राद्धे सा रजस्वला चेत्पञ्चमेऽहनि श्राद्धङ्कुर्य्यात् । अथ महालये विशेषः । तत्रोद्देश्या उच्यन्ते । पितृव्यभ्रातृपुत्रपितृष्वसृमातुलमातृष्वसृभार्य्यापितृव्यपुत्रभ्रातृपुत्रभगिनीदुहितृभागिनेयाचार्यश्वशुरश्वश्रूपाध्यायगुरुसखिद्रव्यदशिष्यादय इति । सन्न्यासविषये वायुपुराणे विशेषो दर्शितः । सन्न्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि । महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु ॥ अथ भाद्रपदापरपक्षभरणीश्राद्धे विशेषः । तदुक्तं मात्स्ये । भरणी पितृपक्षे तु महती परिकीर्तिता । तस्यां श्राद्धङ्कृतं येन स गयाश्राद्धकृद्भवेत् ॥ तत्र सपत्नीकपितृपितामहप्रपितामहान्सपत्नीकमातामहादींश्चोद्दिश्य साङ्कल्पिकं श्राद्धङ्कुर्यात् । भविष्यपुराणे । अग्नौकरणमर्घञ्चावाहनञ्चावनेजनम् । पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्तते ॥ पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते । स्वधावाचनलोपोऽस्ति विकिरस्तु न लुप्यते ॥ अक्षय्यदक्षिणास्वस्तिसौमनस्यं यथास्थितमिति ॥ चतुर्दश्यां पित्रादित्रयमध्ये एकस्य द्वयोर्वा विषशस्त्राद्युपघातैर्मृतयोः पितृव्यादेर्वा तथाविधस्यैकोद्दिष्टविधिना श्राद्ध-

कुर्यात् । इदञ्चैकोद्दिष्टं सदैवम् । तथाच सङ्ग्रहे । प्रेतपक्षे चतुर्दश्यामेकोद्दिष्ट-विधानतः । दैवयुक्तन्तु यच्छ्राद्धं पितृणामक्षयं भवेदिति । अथ तीर्थश्राद्धे विशेषः । तच्च षट्पुरुषोद्देशेन । तत्र दिग्बन्धनावाहनार्घद्विजाङ्गुष्ठनिवेशनतृप्तिप्रश्नविकिरा न कर्तव्याः । ब्राह्मणपरीक्षा च न कार्या । न च दृष्टिदोषादि-विचारः । षट्पुरुषपिण्डदानानन्तरङ्किञ्चिद्दूरे हविःशेषेण मातृपितामहीप्रपितामहीभ्यः पिण्डदानमात्रम् । तदनन्तरं मात्रादिपिण्डपूर्वतः कुशेषु ज्ञातिवर्गमुद्दिश्यैको बृहत्पिण्डो दातव्यः । पिण्डानान्तीर्थसलिले प्रक्षेपः ॥ अथ नित्यश्राद्धे विशेषः । सङ्कल्पः । पुष्पाक्षतादिभिरासनादिदीपान्तोपचारैर्ब्राह्मणपूजनम् । मण्डलङ्कृत्वा भाजनानि निधाय परिवेषणम् । पात्रालम्भादिब्राह्मणभोजनान्तङ्कृत्वा किञ्चिद्दद्यात् । नात्र कर्तृभोक्तृनियमाः । भोज्याद्यशक्तावन्नमुद्धृत्य स्वशक्तितः षोढा विभज्य पितृनुद्दिश्य त्यजेदिति नित्यश्राद्धम् ॥ इति श्री त्रिरग्निचित्सम्राट्स्थपतिश्रीमन्महायाज्ञिकवामनात्मजदीक्षितगदाधरविरचितकातीयश्राद्धसूत्रपद्धतौ पार्वणश्राद्धविधिः ॥ ॥ * ॥ ॥ * ॥

मूलम् । अथैकोद्दिष्टमेकोऽर्घ एकं पवित्रमेकः पिण्डो नावाहनन्नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः । सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे ॥ ४ ॥

कर्कः ॥ अथैकोद्दिष्टम् ॥ व्याख्यास्यत इति सूत्रशेषः । तच्चैकमेवोद्दिश्य क्रियत इत्यन्वर्थसञ्ज्ञैषा । एकोऽर्घः ॥ एक एवार्घः स्यात् । एकार्घश्रवणात् पात्रमेकमिति गम्यते । अतः प्रथमशब्दानुपपत्तेः पितृभ्यः स्थानमसीत्यस्यानुपपन्नत्वात् संस्रवबहुत्वाभावाच्च न पात्रन्युब्जता ॥ एकं पवित्रमेकः पिण्डः ॥ एकदेवताकत्वात् । पवित्रन्तु शास्त्रात् ॥ नावाहनं नाग्नौकरणन्नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे ॥ इतरशब्देन ब्राह्मणा अभिधीयन्ते । शेषं निगदव्याख्यातम् । तच्चैतददैवं स्यात् । स्मृत्यन्तरात् । अदैवम्भोजयेच्छ्राद्धमिति स्मृतेः । तथा च एकादश्यामयुग्मान् ब्राह्मणान् भोजयेदित्ययुग्मता प्राप्तैव पुनरयुग्मताग्रहणाददैवमिति गम्यते । तत्र यावत्सपिण्डीकरणात्प्राक् श्राद्धं तत्सर्वमेकोद्दिष्टम्, ऊर्द्ध्वन्तु

पार्वणश्राद्धमन्यत्राभ्युदयात्। स्मृत्यन्तरात् "प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम्। तत्र पार्वणवत्सर्वमन्यत्राभ्युदयादृत" इति। तथाऽपरम्। सहपिण्डक्रियायान्तु कृतायामस्य धर्मतः। अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैरिति। अनयैवेति प्रकृतत्वात् सपिण्डक्रिययोच्यते। तथा च हारीतः। सहपिण्डे कृते प्रेते पृथक्त्वन्नोपपद्यते। पृथक्त्वे तु कृते तस्य पुनः कार्या सपिण्डता॥ तथोशनाश्च। अर्वाक् संवत्सराद् वृद्धः पूर्णे संवत्सरेऽपि वा। ये सपिण्डीकृताः प्रेता न तेषां हि पृथक्क्रिया॥ ४॥ ॥ * ॥. ॥ * ॥ ॥ * ॥

**गदाधरः॥** सर्वश्राद्धप्रकृतिभूतम्पार्वणमुक्त्वाऽधुना विकृतिभूतमेकोद्दिष्टमारभ्यते। **अथैकोद्दिष्टम्।** अथ पार्वणानन्तरमेकोद्दिष्टं व्याख्यास्यते। अथान्वर्थसञ्ज्ञा चैषा। एकमुद्दिश्य यत्क्रियते तदेकोद्दिष्टमिति॥ **एकोऽर्घ एकम्पवित्रमेकः पिण्डः॥** अस्मिन्नेकोद्दिष्टे एकोऽर्घः एकम्पवित्रमेकः पिण्डश्च स्यात्। अर्घस्यैकत्वश्रवणात्पात्रमप्येकमिति ज्ञायते। अतः प्रथमशब्दस्यानुपपत्तेः पितृभ्यः स्थानमसीत्यस्यानुपपन्नत्वात्संस्रवस्य बहुत्वाभावाच्चात्र पात्रन्युब्जीकरणाभावः। **नावाहनन्नाग्नौकरणन्नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः। सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे।** स्पष्टमेतत्। अत्राग्नौकरणनिषेधादेव पात्रालम्भनिषेधो हुतशेषदानानन्तरन्तस्य विहितत्वात्। अमृतञ्जुहोमीति मन्त्रलिङ्गाद्धुतशेषस्यैव परामर्शात्। हुतशेषाभावे पात्रालम्भाभाव इति निश्चीयते। इति हलायुधभाष्ये॥

इतिश्रीगदाधरकृते कातीयसूत्रभाष्ये चतुर्थी कण्डिका॥

अथ प्रयोगः। निमन्त्रणम्। ततो मध्याह्नस्नानम्। ततः कर्म्माङ्गस्नानम्। द्विजेभ्य उदकदानम्। मण्डलकरणम्। द्विजैराचमनकरणम्। पादप्रक्षालनम्। ब्राह्मणस्योपवेशनम्। दीपस्थापनम्। देवताभ्यश्चेति पाठः। सङ्कल्पः। ततो निहन्मि सर्वमिति पाठः। नीवीबन्धनम्। तिला रक्षन्त्वित्यारभ्य दिशि दिशि प्रकिरणान्तम्। जलाभिमन्त्रणम्। पाकप्रोक्षणम्। आसनदानम्। हस्तप्रक्षालनम्। नावाहनम्। नावकिरणम्। जपः। एकस्यार्घस्य पूरणम्। दानम्। न पात्रन्युब्जीकरणम्। न संस्रवदानम्। ततो गन्धादिदानम्। नाग्नौकरणम्। पात्रालम्भो न भवतीति हलायुधमतम्। अन्येषां मते तु भवत्येव। अङ्गुष्ठस्यान्ने ऽवगाहनम्। तिलविकिरणम्। परिवेषणम्। सङ्कल्पः। उदकदानम्। जपः। अन्नप्रकिरणम्। आचमनम्। उदकदानम्। जपो यथोक्तः।

स्वदितमिति तृप्तिप्रश्नः । सुस्वदितमिति ब्राह्मणा ब्रूयुः । शेषान्नस्यानुज्ञापनादि पिण्डपूजान्तञ्च पूर्ववत् । एकः पिण्डो देयः । ततः सुप्रोक्षितायक्षतदानान्तम् । अक्षय्योदकदानम् । उपतिष्टतामित्यक्षय्यस्थाने । प्रार्थनादि उदकासेकान्तम् । दक्षिणादानम् । न विश्वेदेवाः प्रीयन्तामिति प्रैषः । प्रार्थनापि न । तिलकम् । पिण्डप्रत्यवधानम् । सव्यम् । अवघ्राणम् । अग्निमत उल्मुकसकृदाच्छिन्नयोरग्नौ प्रक्षेपः । पात्रचालनम् । सञ्चराभ्युक्षणम् । ततोऽग्य पूर्वोक्षरितेत्यादि । अभिरम्यतामिति विसर्जनम् । अभिरताः स्म इति प्रत्युक्तिः । अनुगमनम् । गृहप्रवेशः ॥ इति नवकण्डिकागदाधरभाष्ये एकोद्दिष्टपद्धतिः ॥ अथैकोद्दिष्टप्रसङ्गात्क्रियापद्धतिर्लिख्यते । तत्र सायमाहुत्यां हुतायां यजमानस्य मरणशङ्का चेत्तदैव प्रातराहुतिर्दातव्या । जीवेत्पुनः काले प्रातराहुतिर्नैव होतव्या । पौर्णमासेष्ट्यनन्तरम्प्राग्दर्शाद्यदा यजमानस्य मरणशङ्का स्यात्तदैव पिण्डपितृयज्ञवर्जिताममावास्येष्टिङ्कुर्यात् । तत्पर्यन्तम्पक्षहोमः । आह्रियमाणे हविषि चेन्म्रियेत तदा हविषो दक्षिणाग्नौ प्रक्षेपः । ग्रहणप्रभृतिप्रागघविरासादनान्मरणञ्चेद्गार्हपत्ये हविषान्दहनम् । आसादनोत्तरकालमाहवनीये । एवं वैश्वदेवपर्वणि कृते यजमानस्य मरणशङ्कायामवशिष्टपर्वणां समापनङ्कार्यम् । सकलेष्ट्यसम्भवे वाऽऽज्यं संस्कृत्य पुरोनुवाक्यायाज्याभ्यां स्वस्वहविषा यागः कार्यः । तदसम्भवे च केवलेनाज्येन चतुर्गृहीतेन प्रधानदेवतायागमात्रङ्कुर्यात् । तस्याप्यसम्भवे प्रतिदैवतं पूर्णाहुतिञ्जुहुयात् । अग्नये स्वाहा विष्णवे स्वाहा इन्द्राय स्वाहेति । असन्नयतस्तु अग्नये विष्णवे इन्द्राग्निभ्यामिति ॥ एवं स्मार्तम्पक्षादि सकलङ्कर्म ज्ञेयम् । चरुहोमासम्भवे देवतानामाज्याहुतिमात्रं वा । यद्यमावास्यापर्यन्तं यजमानो जीवति तदाऽमावास्यायान्दक्षिणाग्निमुद्धृत्य पिण्डपितृयज्ञः कार्यो नाग्न्यन्वाधानम् । न ब्रह्मासनम् । न चामावास्येष्टिः । कृतत्वात् । सर्वङ्कर्म मरणान्तम्भवति । कर्तुरसम्भवात् । हविःप्रतिपत्तिविधानाच्च । अग्निहोत्रहोमेऽप्याहृते हविषि दक्षिणाग्नौ ग्रहणादिप्रागासादनाद्गार्हपत्ये दहनम् । आसादनाद्याहवनीये, एवमेव पशुयागसोमयागादावारब्धेऽन्तरा मरणशङ्कायां यथासम्भवं समापनङ्कार्यम् । मृते पुत्रादिः स्नातः कृतापसव्यः सकृत्सकृत्परिसमूहनादिसंस्कारान्कुर्यात् । गार्हपत्यादाहवनीयदक्षिणाग्न्योर्विहरणम् । तिस्र एव स्थालीरेष्टवै इत्यध्वर्युराह ॥ गार्हपत्याहवनीयदक्षिणाग्निषु तिसृणां गोमयशबलवतीनाम्मृन्मयीनामुखानामधिश्रयणम् । अत्र सर्वङ्कर्मापसव्येन दक्षिणामुखेन कर्तव्यम् । सभ्यावसथ्ययोरुखाधिश्रयणन्न कुर्यात् । तौ प्रत्यक्षावेव स्थाल्योर्मध्ये निधाय नीयेते सर्वासु स्थालीषु चिह्नकरणम् ।

अथ मरणस्थाने एकोद्दिष्टविधिना श्राद्धम् ॥ तत्र सङ्कल्पः । मरणस्थाने एकोद्दिष्टश्राद्धमहङ्करिष्ये । उपहारप्रोक्षणम् । आचमनम् । आमान्नसङ्कल्पः । पिण्डदानम् । आवाहनार्घार्चनपात्रालम्भनावगाहनविकिरावनेजनरेखाप्रत्यवनेजनगन्धाद्यर्चनाक्षय्योदकदानाशीःस्वधावाचनीयनिषेकाभावः । सव्येन दक्षिणादानम् । दक्षिणाकाले माषान्नजलसंयुक्तकुम्भदानम् । इति मरणस्थाने एकोद्दिष्टविधिना श्राद्धम् ॥ ततो मृतस्थाने शवनाम्ना पिण्डदानम् । अमुकगोत्र अमुकशव इति प्रयोगः । सजलमाषान्नकुम्भदानम् । ततः पूर्ववदेकोद्दिष्टविधिना द्वितीयन्द्वारदेशे श्राद्धम् । श्राद्धान्ते तत्रैव पान्थनाम्ना पिण्डदानम् । पान्थ एतत्ते इति प्रयोगः । माषान्नजलसंयुक्तकुम्भदानम् । सन्तापजानग्नीनादायानमि शरीरमारोप्य दक्षिणागमनम् । यमगाथाङ्गायन्तो यमसूक्तञ्च जपन्त इत्येके आहुः । अहरहर्नीयमानो गामश्वम्पुरुषं पशुम् । वैवस्वतो न तृप्यति सुराया इव दुर्मतिः । इति यमगाथा । अपेतो यन्तु पणय इत्ययमध्यायो यमसूक्तम् । ततश्चत्वरे प्रेतनाम्ना पिण्डदानम् । माषान्नजलयुक्तघटदानम् । ग्रामश्मशानयोरर्द्धमार्गे नीते तत्र पूर्ववदेकोद्दिष्टविधिना श्राद्धम् । अमुकप्रेतस्य दाहार्थं श्मशानं नीयमानस्य अर्द्धमार्गे विश्रामस्थाने श्राद्धमहङ्करिष्ये, इति सङ्कल्पः । श्राद्धान्ते भूतनाम्ना पिण्डदानम् । अमुकभूत एष ते पिण्डः । माषान्नजलसंयुक्तकुम्भदानम् । समे बहुलतृणे देशे क्षीरिण्याद्या उद्धृत्य वितानसाधनम् । गार्हपत्याहवनीयदक्षिणाग्निषु सकृत्सकृत्संस्कारकरणम् । तत्र गार्हपत्यादीनां स्थापनम् । सभ्यावसथ्ययोश्चितेरुत्तरतः सप्रमु प्रक्रमेषु स्थापनम् । ततो गार्हपत्याहवनीययोर्मध्ये काष्ठैश्चितिं सञ्चिनुयात् । ततः प्रेतस्य केशश्मश्रुनखलोम्नां छेदनम् । केशादीनान्निखननम् । प्राग्ग्रीवमुत्तरलोमं कृष्णाजिनं चितायामास्तीर्य तस्मिन् यजमानं प्राक्शिरसमादधाति । ततः प्रेतस्य करे प्रेतनाम्ना पिण्डदानम् ॥ अमुकप्रेत एतत्तइति ॥ माषान्नजलयुक्तकुम्भदानम् । ततः प्रेतस्याज्येनाभ्यञ्जनम् । मुखे दक्षिणोत्तरनासिकाचक्षुःश्रोत्रेषु हिरण्यशकलप्रासनम् । अतो चितिचयनात्प्राक् हिरण्यशकलप्रासनमाम्नातम् । सूत्रे तु शाखान्तरादयङ्क्रमोऽवसितः । चितिचयनात्पूर्वं वा कर्तव्यम् । प्रेतस्य वस्त्रैकदेशं सञ्छयनार्थङ्गृहीत्वा सुगुप्तन्निदधाति । सर्वाणि पात्राणि प्रागग्राण्युत्तानानि वक्ष्यमाणविधिना प्रेतशरीरे निदधाति । जुहूं घृतेन पूरयित्वा दक्षिणे हस्ते सादयति । सव्ये पाणौ रिक्तामुपभृतम् । हृदये ध्रुवां रिक्ताम् । दक्षिणनासिकायां वैकङ्कतं स्रुवम् । कर्णयोः प्राशि-

अहरणे । शिरसि रिक्तं प्रणीताप्रणयनचमसम् । कपालानि वा शिरसि, अप्सु वा प्रक्षेपः कपालानाम् । पार्श्वयोः शूर्पे, दक्षिणपार्श्वे ऐष्टिकम् उत्तरपार्श्वे प्रतिप्रस्थातृकर्तृकवरुणप्रघासिकमैष्टिकम् । अकृतवरुणप्रघासस्य ऐष्टिकमेव द्विधा कृत्वा पार्श्वयोरेकैकं खण्डमासादयेत् । उदरे पृषदाज्यवतीमिडापात्रीम् । शिश्नसमीपे शम्याम् । अण्डयोः समीपे अरणी । तत्समीपे अधोमुखमुलूखलं मुसलञ्च । उपवेषाभिशृतावदानपुरोडाशपात्रीपूर्णपात्रषडवत्तकूर्चप्रमुखाणि सर्वाणि पात्राणि ऊर्वोर्मध्ये आसादयेत् । स्मार्तपात्राण्यप्यरणीसहितानि वरुणप्रघासिकानि च तत्रैवासादयेत् । मृन्मयाश्ममयानामप्सुप्रक्षेपः । लोहमयानाञ्च ब्राह्मणाय दानमप्सु प्रक्षेपो वा । त्रेताग्निभिश्चितेरादीपनम् । तत्रैवम् । अग्निचितिपर्यन्तन्तृणैराच्छादनङ्कृत्वा ततस्तान्प्रदीपयेत् । आहवनीयगार्हपत्यदक्षिणाग्न्युत्पन्नज्वालया चितेरादीपनं यथा भवति तथा विधेयम् । पुत्रो वा भ्राता वाऽन्यो वा ब्राह्मण आहुतिञ्जुहुयात् । ब्राह्मण एव क्षत्रियवैश्ययोराहुतिञ्जुहुयात् । न पुत्रो भ्राता वा । गार्हपत्ये आज्यसंस्कारः । अग्निहोत्रहवण्यां सकृद्गृहीत्वा आहवनीये समित्पूर्वकञ्जुहोति । तत्र मन्त्रः । अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहा इत्यनेन मन्त्रेण होमः । ॐ इदमग्नये नममेति त्यागः । असौ स्थाने प्रेतस्य प्रथमान्तन्नामग्रहणम् । अस्य मन्त्रस्य स्त्रियामप्यूहः । ततोऽग्निहोत्रहवणीं मुखे प्रागग्रामासादयेत् । खादिरं स्रुवं सव्यनासिकायाम् । स्फ्यन्दक्षिणहस्ते । आज्यस्थाल्या ऊर्वोरन्तरे प्रक्षेपः । पात्रत्वाविशेषात् । मृन्मयी चेदप्सु प्रासनम् ॥ अथ प्रसङ्गादावसथ्यसम्बन्धिपात्रप्रतिपत्तिरुच्यते ॥ उक्तञ्च । आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः । अनाहिताग्निरेकेन लौकिकेनेतरे जनाः ॥ अथ पुत्रादिराप्लुत्य कुर्याद्दारुचयम्बहु । भूप्रदेशे शुचौ युक्ते पश्चाच्चित्यादिलक्षणम् । तत्रोत्तानन्निपात्यैनन्दक्षिणाशिरसम्मुखे । हिरण्यं न्यस्य शिरसि प्रणीताचमसन्तथा । शूर्पे तत्पार्श्वयोरेकञ्छिद्द्विधा पूर्ववन्न्यसेत् । अश्रणाकर्मसम्बन्धि द्वितीयम्पिण्डयज्ञियम् । अण्डयोररणी तद्वत्प्रोक्षणीपात्रमादितः । पात्राणि चान्तरे ऊर्वोर्मृन्मयान्यम्भसि क्षिपेत् । अथाद्यंसजात्वक्तो दद्याद्दक्षिणतः शनैः । पूर्ववज्जुहुयाद्वह्नौ समिद्वर्जं स्रुवेण सः ॥ दक्षिणायां स्रुवन्ददान्नसि स्फ्यं दक्षिणे करे । समिधो वा ततो वह्निं शेषं स्यादाहिताग्निवत् ॥ उखाधिश्रयणादूर्वोरन्तरे पात्रप्रक्षेपान्तं सर्वमाहिताग्निवत् । केवलोपासनाग्निचितौ मृतं दक्षिणाशिरसं निदध्यान्न प्राक्शिरसमिति विशेषः ॥ इत्यावसथ्यसम्बन्धिपात्राणां प्रतिपत्तिः ॥ अथ सूतिकामरणे विशेषः ॥ सूतिकायां मृतायां कुम्भे उदकङ्कृत्वा

तत्र पञ्चगव्यम्प्रक्षिप्य आपोहिष्ठा इदमाप इत्यादिपुण्यर्ग्भिरभिमन्त्र्य,ब्राह्मणानुज्ञया पञ्चदश प्राजापत्यान्कृत्वा तेन कुम्भोदकेन शतकृत्वस्तां स्नापयित्वा वस्त्रान्तरेण सर्वां वेष्टयित्वा दाहः कार्यः ॥ रजस्वलामरणेऽप्येवम् ॥ उदक्या सूतकी वा यं स्पृशति तस्याप्येष एव विधिः । दाहे जाते किञ्चित्परिशेषणीयम् । निःशेषस्तु न दग्धव्य इति वचनात् ॥ अथ स्मार्तमुदककर्मोच्यते ॥ नद्याद्युदकसमीपे गमनम् । समीपे स्थितं योनिसम्बन्धिशालकं वा उदकङ्करिष्यामह इति मन्त्रेणोदकं याचयेयुस्सपिण्डादयः । यदि शतवर्षादर्वाक् प्रेतो भवेत् तदा कुरुध्वमिति वचनमित्युक्ते सप्तपुरुषसम्बन्धिनः सपिण्डाः दशपुरुषसम्बन्धिनः समानोदकाश्चैकग्रामनिवासे यावत्स्मृतं जलम्प्रविशन्त्येकवस्त्राः । अशिखाः प्राचीनावीतिनः सन्तः । ततः सव्यपाणेरनामिकयाङ्गुल्या जलम् अपनः शोशुचदघमित्येतावता मन्त्रेणापनोद्य दक्षिणाभिमुखास्तूष्णीं निमज्जन्ति। कर्कादिभाष्यकाराणां मतेऽपनोदने मन्त्रः । दैवयाज्ञिकादिमते निमज्जने । ततः प्रेतमुद्दिश्यैकैकमञ्जलिं सकृद्भूमौ प्रक्षिपन्ति । अमुकसगोत्रामुकशर्मन्प्रेत एतत्ते उदकमित्यनेन मन्त्रेण । तत उदकादुत्तीर्य शुचौ देशे शाद्वलवत्युपविष्टान्सपिण्डादीनन्ये सुहृद इतिहासपुराणादिकथाभिः संसारस्यानित्यतान्दर्शयन्तो वदेयुः । शाद्वलं हरिततृणमस्ति यस्मिन्निति शाद्वलवान् तस्मिन् शाद्वलवति भूमौ उपविष्टानित्यर्थः। रोदनं न कर्तव्यम् । तदुक्तम् । श्लेष्माश्रु बान्धवैर्मुक्तम्प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः इति । ततः पश्चादनवलोकयन्तः पङ्क्तिव्यवस्थानेन कनिष्ठानग्रतः कृत्वा ग्राममागच्छन्ति। गृहद्वारसमीपे आगत्य सर्वे त्रीणि त्रीणि निम्बपत्राणि दन्तैरवखण्ड्याचम्योदकमग्निं गोमयं गौरसर्षपांस्तिलमित्येतानि प्रत्येकं स्पृष्ट्वा पादेन पाषाणमाक्रम्य गृहं प्रविशन्ति। ततः प्रभृति ब्रह्मचारिणोऽधःशायिनो न किञ्चन कर्म कुर्वन्ति । न कारयन्ति । क्रीत्वा लब्ध्वा वा दिवा प्राश्नीयुः । अमांसं पिण्डन्दत्वा ततो भोजनम् । भोजनकाले भोज्यादन्नाद्भक्तमुष्टिञ्च प्रेतोद्देशेन भूमौ निःक्षिपेत् । अमुकसगोत्रामुकप्रेत भक्तमुष्टिरुपतिष्ठतामिति । यावत्प्रत्यहमेकैकमवयवपूरकम्पिण्डम्प्रेताय दद्यात् । तत्र विधिः । स्नानङ्कृत्वाऽहते आर्द्रे वाससी परिधाय पिण्डपितृयज्ञवत्तूष्णीम्पिण्डदानम् । तूष्णीम्प्राणायामः । आचमनम् । देशकालौ स्मृत्वाऽमुकसगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थं क्षुत्तृषानिवृत्त्यर्थं शिरोनिष्पत्त्यर्थं च पिण्डदानङ्कुम्भभोजनदानमुदकदानञ्चाहङ्करिष्ये, इति सङ्कल्पः । अवनेजनम् । अमुकसगोत्रामुकप्रेतावनेनिक्ष्वेति । दर्भास्तरणम् । पिण्डदानम् । अमुकसगोत्रामुक

प्रेतैष ते शिरःपूरकपिण्डो मया दत्त इति। पूर्ववत्पुनरवनेजनम्। अनुपलेपनपुष्पधूपदीपशीतलतोयकुम्भोर्णातन्तुदानम्पिण्डे स्मृत्यन्तरोक्तमपि कुर्यात्। ततः पिण्डसमीपे भूमौ एकाञ्जलितोयदानम्। अमुकसगोत्रामुकप्रेत एष ते तोयाञ्जलिरुपतिष्ठताम्। इदन्तोयपात्रं ते उपतिष्ठताम्। अमुकसगोत्रस्यामुकप्रेतस्यानेन प्रेतत्वनिवृत्तिरस्तु। क्षुत्तृषानिवृत्तिरस्तु। शिरोनिष्पत्तिरस्तु। पिण्डमुदके प्रक्षिप्य स्नात्वा नवश्राद्धं कुर्यात्। ततस्तूष्णीम्पूर्ववत्कर्म युग्मा विप्राः। तूष्णीन्निमन्त्रणादि। पादप्रक्षालनम्। आचमनम्। उपवेशनम्। तूष्णीम्प्राणायामः। द्विराचमनम्। देशकालौ स्मृत्वाऽमुकसगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थमेकोद्दिष्टविधिना प्रथमदिवसनिमित्तं नवश्राद्धमहङ्करिष्ये। उपहारप्रोक्षणम्। तिलदर्भविकिरणम्। आचमनम्। आमान्नसङ्कल्पः। इदमामान्नन्ते उपतिष्ठतु। तिलविकिरणम्। दक्षिणाग्रदर्भास्तरणम्। अमुकसगोत्रामुकप्रेतैष ते पिण्ड इति पिण्डद्वयं दद्यात्। अवनेजनप्रत्यवनेजने न स्तः। प्रत्येकं गोत्रोच्चारणादि सूत्रदानम्। न पूजनम्। आचम०। आमान्नसं०। अक्षय्योदकदानम्। अमुकसगोत्रस्यामुकप्रेतस्य दत्तमुपतिष्ठताम्। दक्षिणादानम्। पिण्डोद्धरणम्। कृतस्य नवश्राद्धविधेर्यन्न्यूनं यदतिरिक्तन्तत्सर्वमित्यादि। पिण्डयोरुदके प्रक्षेपः॥ एत एव पदार्था अत्र भवन्ति नान्ये॥ पूर्वन्नवश्राद्धं वा पश्चात्पिण्डदानम्। गर्ते तैलकल्कोष्णोदकानां प्रेतोद्देशेन प्रक्षेपः। अमुकसगोत्रामुकप्रेतात्र जलेन स्नाहीत्यादि। अथ यस्मिन्नहोरात्रे स मृतो भवति तस्य वा तस्मिन्नेकस्मिन्मृन्मये पात्रे उदकं द्वितीये क्षीरङ्कृत्वा यष्ट्यादिकमवलम्ब्याकाशे धारयेत्। अमुकसगोत्रामुकप्रेतात्र स्नाहि पिबेदमिति मन्त्रेण॥ इति प्रथमदिनकृत्यम्॥ अथ द्वितीयदिने प्रेतस्य कर्णाक्षिनासिकानिष्पत्त्यर्थं पिण्डदानम्। कुम्भभोजनदानम्। द्वावञ्जली द्वे तोयपात्रे। अथ उदकाञ्जलय एव वा देया न पात्रे॥ इति द्वितीयदिनकृत्यम्॥ तृतीये गलांसभुजवक्षोनिष्पत्त्यर्थं पिण्डदानम्। त्रयोऽञ्जलयः। त्रीणि तोयपात्राणि। अथ वा पञ्चोदकाञ्जलय एव। प्रथमदिवसवन्नवश्राद्धम्॥ इति तृतीयदिनकृत्यम्॥ अथ चतुर्थेऽहनि सञ्चयननिमित्तमेकोद्दिष्टश्राद्धम्। तच्च प्रथमदिनवत्। अत्रैक एव पिण्डः। श्मशानवासिदेवतानां बलिहरणम्। पुष्पधूपदीपनैवेद्यानि सम्भृत्य ॐ क्रव्यादमुखेभ्यो देवेभ्यो नम इति मन्त्रेणार्घादिना पूजां कुर्यात्। ततः क्रव्यादमुखेभ्यो देवेभ्यो बलिदानम्। तत्र मन्त्रः। देवा येऽस्मिन् श्मशाने स्युर्भगवन्तः सनातनाः। तेऽस्मत्सकाशाद् गृह्णन्तु बलिमष्टाङ्गमक्षयम्॥ प्रेतस्यास्य शुभांल्लोकान्प्रयच्छन्त्वपि शाश्वतान्। अस्माक-

मायुरारोग्यं सुखञ्च श्रियमुत्तमामिति ॥ एवं बलिन्दत्वा विसर्जयेत् । पलाशवृन्तेनास्थीनि प्रकटानि कृत्वा अङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रासनम् तत्रशमीशैवालकर्दमानां च प्रासनम्। ततो घृतेनाभ्यज्य सर्वसुरभिभिश्चन्दनागुरुकर्पूरकेसरकस्तूरिकाभिर्मिश्रणम् । दक्षिणपूर्वायतां कर्षूं खात्वा तत्र कुशास्तरणम् । हरिद्रालापितवस्त्रखण्डमास्तृत्य तस्मिन्वस्त्रे वाञ्चिवपामि इत्यनेन मन्त्रेणास्थिप्रक्षेपः । ॐ आत्वा मनसानार्तेन वाचा ब्रह्मणा त्रय्या विद्यया पृथिव्यामक्षिकायामपाᳬ रसे निवपाम्यसावित्यनेन मन्त्रेण वा । असौस्थाने प्रेतनामोद्देशः । पितृमेधं चिकीर्षतः कुम्भे अस्थिसञ्चयनं कर्तव्यम् । अस्मिन्पक्षे कुशास्तरणं हरिद्रालापितवस्त्रास्तरणं कुम्भे एव कर्तव्यम् । अस्थिसंस्कारत्वात् । क्वचिद्भूप्रदेशे कुम्भनिधानन्तूष्णीम् । कुम्भमध्येऽस्थिप्रक्षेपे मन्त्रो भवत्येव ॥ इत्यस्थिसञ्चयनम् ॥ चिताभूमिं गोमयेनोपलिप्य तत्र तेनैव पूर्वोक्तबलिमन्त्रेण बलिन्दद्यात् ॥ ततश्चतुर्थदिवससम्बन्धि पिण्डदानम् ॥ नाभिलिङ्गगुदनिष्पत्त्यर्थं कुम्भभोजनदानम् । जलाञ्जलयश्चत्वारः । चत्वारि जलपात्राणि च । अथ वा सप्ताञ्जलय एव । इति चतुर्थदिनकृत्यम् । पञ्चमेऽहनि जानुजङ्घापादनिष्पत्त्यर्थं पिण्डदानम् । कुम्भो जलपूरितः, पञ्च जलाञ्जलयः पञ्च पात्राणि च, नवाञ्जलय एव वा। ततो नवश्राद्धम्प्रथमदिनवत् । इति पञ्चमदिनकृत्यम् । षष्ठे सर्वमर्मनिष्पत्त्यर्थम्पिण्डदानम् । कुम्भदानम्, षट् जलाञ्जलयः षट् तोयपात्राणि । अथ एकादशाञ्जलय एव वा । इति षष्ठदिनकृत्यम् । सप्तमे ऽहनि नाडिकानिष्पत्त्यर्थम्पिण्डदानम् । कुम्भभोजनदानम् । सप्ताञ्जलयः सप्त पात्राणि, त्रयोदशाञ्जलय एव वा । प्रथमदिनवन्नवश्राद्धम् । इति सप्तमदिनकृत्यम् । अष्टमेऽहनि लोमदन्तनिष्पत्त्यर्थं पिण्डदानम् । कुम्भभोजनदानम् । अष्टाञ्जलयः अष्टौ पात्राणि । पञ्चदशाञ्जलय एव वा ॥ इत्यष्टमदिनकृत्यम् । नवमेऽहनि वीर्यनिष्पत्त्यर्थं पिण्डदानम् । कुम्भभोजनदानम् । नवाञ्जलयो नवपात्राणि, सप्तदशाञ्जलय एव वा । ततो नवश्राद्धम्प्रथमदिनवत् । इति नवमदिनकृत्यम् । दशमेऽहनि शरीरपूरणार्थम्पिण्डदानम् । कुम्भभोजनदानम् । दशाञ्जलयो दशपात्राणि, एकोनविंशतिर्जलाञ्जलयो वा । अथ वा दशाहमध्ये प्रत्यहन्दशाञ्जलय एव देयाः न पात्राणि । अत्र पिण्डत्रयदानम् । एकन्तत्सखिभ्यो द्वितीयम्प्रेताय तृतीयं यमाय । तत्र देशकालौ स्मृत्वा प्रेतस्य प्रेतत्वनिवृत्त्यर्थम्पिण्डदानमहङ्करिष्ये । प्रेतसखिभ्यः अवनेनिग्ध्वम् । गोत्र प्रेत अवनेनिक्ष्व यम अवनेनिक्ष्व दर्भास्तरणम् । अवनेजनक्रमेण पिण्डदानम् प्रत्यवनेजनञ्च ।

पिण्डानामुदके प्रक्षेपः । ततः सूतकनिवृत्त्यर्थं सर्वे केशश्मश्रुवपनङ्कारयेयुः नखलोमनिकृन्तनञ्च ततः सर्वेषां सचैलस्नानम् ॥ इति दशाहसम्बन्धि कर्म समाप्तम् ॥ दशाहमध्ये दर्शपाते दर्शदिनएव सर्वन्दैशाहिकं कर्म समापनीयम्, न त्रिरात्रादर्वागिति केचित् । पित्रोस्तु यावदाशौचं दशाहे एवेति मदनपारिजातकारः । अन्येषान्तु मातृपितृव्यतिरिक्तानां प्रथमंदिनप्रभृतिदर्शपाते सर्वं समापनीयमेव । एतञ्च प्रेतनिर्हरणादिकं यतिव्यतिरिक्तानां प्रथमत्रयाणामाश्रमाणाङ्कुर्यात् । तथा च स्मृतिः । त्रयाणामाश्रमाणाञ्च कुर्याद्दाहादिकाः क्रियाः । यतेः किञ्चिन्न कर्तव्यन्न चान्येषाङ्करोति स इति । तथा । एकोद्दिष्टञ्जलम्पिण्डमाशौचम्प्रेतसत्क्रियाम् । न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे । अहन्येकादशे प्राप्ते पार्वणन्तु विधीयत इति । ब्रह्मचारीत्वाचार्योपाध्यायमातृपितृव्यतिरिक्तानां निर्हरणादिकं न कुर्यात् । यथाह याज्ञवल्क्यः । आदिष्टी नोदकङ्कुर्यादाव्रतस्य समापनात् । समाप्ते तूदकन्दत्वा त्रिरात्रमशुचिर्भवेत् । इति । आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती । सूतकान्नञ्च नाश्नीयान्न च तैः सह संवसेत् इति । यदि च मोहात्करोति तदा ब्रह्मचर्यव्रतात्प्रच्यवते । पुनरुपनयनेन शुद्ध्यतीति । सपिण्डीकरणान्तानि श्राद्धानि लौकिकाग्निना कार्याणि । तदुक्तम् "सपिण्डीकरणान्तानि प्रेतश्राद्धानि यानि वै । तानि स्युर्लौकिके वह्नावित्याह चाश्वलायनः । अथैकादशाहविधिः । तत्र साग्नेर्दाहदिनादारभ्यैकादशाहे निरग्निकस्य तु मरणदिनादारभ्यैकादशाहे कर्ता विधिवत्स्नात्वा षोडशोपचारैर्विष्णोः पूजनन्तर्पणञ्च कुर्यात् । तत्र समन्त्रकप्राणायामत्रयं विधाय देशकालौ सङ्कीर्त्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थं श्रीविष्णोः षोडशभिरुपचारैः पूजनपूर्वकन्तर्पणमहङ्करिष्ये । तत्र सर्वौषधितुलसीदुग्धमिश्रमञ्जलिङ्कृत्वा दक्षिणाभिमुखो यज्ञोपवीती ऋजुदर्भैर्देवतीर्थेन हस्तेनैव तर्पणङ्कुर्यान्न शङ्खेन । सहस्रशीर्षा पुरुषः । इतिषोडशभिः प्रत्यृचं तर्पणम् । अनादिनिधनो देवः शङ्खचक्रगदाधरः । अक्षय्यपुण्डरीकाक्ष प्रेतमोक्षप्रदो भव ॥ पापहा महाविष्णुस्तृप्यतु । गोविन्दस्तृप्यतु । नारायणस्तृ० । युञ्जते मनः । इदं विष्णुः । इरावती० । देवश्रुतौ देवेषु० । विष्णोर्नुकं० । दिवोवा० । प्रतत् । विष्णोरराटम् । इत्यष्टौ । अदित्यै० । दिविविष्णुः । अग्नेस्तनूः । रक्षोहणं० । रक्षोहणोवो० । अत्यन्याम् । विष्णोः कर्माणि । तद्विष्णोः । वाचस्पतये । उपयामगृहीतोस्यादित्येभ्यस्त्वा । विष्णोः क्रमोसि । तद्विप्रासः । त्रीणिपदा ॥ अनेन विष्णुतर्पणेन प्रेतत्वनिवृत्तिरस्तु । इतिपुराणोक्तं विष्णुतर्पणम् ॥ अथ वृषोत्सर्गः । तत्र देशकालौ

स्मृत्वा प्रेतस्य प्रेतत्वनिवृत्त्यर्थमेकादशाहश्राद्धादिकर्तृयोग्यताप्राप्त्यर्थं च वृषोत्सर्गङ्करिष्ये, इति सङ्कल्पः । ततो वस्त्रचन्दनपुष्पताम्बूलादिना होतृब्रह्माणौ वृणुयात् । कर्कमते तु ब्रह्मवरणमात्रम् । होमस्य स्वकर्तृकत्वात् । अस्माकन्तु पुराणे दृष्टत्वात् उभयवरणमत्र । ततः स्वयं पञ्चभूसंस्कारान्कृत्वा आवसथ्याग्नेः स्थापनम् । ततोऽष्टानां कलशानां स्थापनम् । ततः प्रतिष्ठा । इमे कलशाः सुप्रतिष्ठिता भवन्तु । होतृब्रह्मप्रणीतानामासनदानम् । ब्रह्मोपवेशनम् । प्रणीतापात्रमध्ये पिष्टादिना व्यवधानङ्कृत्वा मूलदेशे पय इतरत्र जलम्प्रक्षिप्य प्रणयनम् अग्नेरुत्तरतो निधानम् परिस्तरणम् अग्नेरुत्तरतः पश्चाद्वा पात्रासादनम् । तद्यथा । पवित्रच्छेदनानि पवित्रे द्वे । प्रोक्षणीपात्रम् । आज्यस्थाली । सम्मार्गकुशाः । उपयमनकुशाः । समिधस्तिस्रः । स्रुवः । आज्यम् । तण्डुलाः । पौष्णश्चरुः पिष्टमयः । तस्य च अदन्तानुपदेशात्सिद्ध एवोपादीयते । होतुर्वस्त्रयुग्मं सुवर्णकांस्यादिदक्षिणा च । ब्रह्मणः पूर्णपात्रं वरो वा दक्षिणा । इति पात्रासादनम् । चरुस्थालीमेक्षणयोरुपकल्पनम् । पवित्रकरणम् । प्रोक्षणीसंस्कारः । ततो यथाऽऽसादितानाम्पात्राणां प्रोक्षणम् । असञ्चरे प्रोक्षणीनान्निधानम् । आज्यस्थाल्यामाज्यनिर्वापः । चरुस्थाल्याम्प्रणीतोदकम्पय आसिच्य सपवित्रायां तण्डुलावापः । ब्रह्मण आज्याधिश्रयणम् । स्वयमेव चरोरधिश्रयणम् । उभयोः पर्यग्नीकरणम् । स्रुवप्रतपनम् । स्रुवं संमृज्य पुनः प्रतपनम् । प्रणीतोदकेनाभ्युक्ष्य देशे निधानम् । आज्योद्वासनम् । उत्पूयावेक्षणम् । प्रोक्षण्युत्पवनम् । उपयमनकुशादानम् । समिधोऽभ्याधानम् । प्रोक्षण्युदकेन पर्युक्षणम् । तत इहरतिरितिषडाहुतीर्जुहुयात् ॥ ॐ इहरतिः स्वाहा ॐ इह रमध्वं स्वाहा ॐ इहधृतिः स्वाहा ॐ इह स्वधृतिः स्वाहा । एतेषामिदं पशुभ्यः इति त्यागः । इहरतिः पशुदेवत्य इति सर्वानुक्रमण्यामुक्तत्वात् । ॐ उपसृजन्धरुणम्मात्रे धरुणो मातरं धयन्स्वाहा । इदमग्नये । ॐ रायस्पोषमस्मासुदीधरत् स्वाहा । इदमग्नये । तत आघारावाज्यभागौ । ॐ प्रजापतये स्वाहा । ॐ इन्द्राय स्वाहा । ॐ अग्नये स्वाहा । ॐ सोमाय स्वाहा । ततः पायसचरोर्होमः । ॐ अग्नये स्वाहा ॐ रुद्राय स्वाहा ॐ शर्वाय स्वाहा ॐ पशुपतये स्वाहा ॐ उग्राय स्वाहा ॐ अशनये स्वाहा ॐ भवाय स्वाहा ॐ महादेवाय स्वाहा ॐ ईशानाय स्वाहा । यथा दैवतं त्यागाः । ततः पिष्टचरुहोमः । ॐ पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजान्सनोतु नः स्वाहा । इत्येकामाहुतिञ्जुहुयात् । इदम्पूष्णे० । ततः पायसपिष्टचरुभ्यां स्विष्टकृत् । ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते० । ततो भूराद्या नवाहुतयः । ॐ भूः स्वाहा ॐ भुवः

स्वाहा ॐ स्वः स्वाहा ॐ त्वन्नो अग्ने० ॐ सत्वन्नो अग्ने० ॐ अयाश्चाग्ने० ॐ ये ते शतं० ॐ उदुत्तमम्० ॐ भवतन्न० । ॐ प्रजापतये स्वाहा । संस्रवप्राशनम् । आ० पवित्राभ्याम्मार्जनम् । अग्नौ पवित्रप्रतिपत्तिः । ब्रह्मणे पूर्णपात्रवरयोरन्यतरस्य दक्षिणात्वेन दानम् । प्रणीताविमोकः । ततोऽश्वत्थपत्रयुक्तकलशे रुद्रमावाह्य गन्धमाल्यादिभिः सम्पूज्य हस्तेन कलशं स्पृशन् रुद्राध्यायं जपेत् । ततः पुरुषसूक्तम् । कुष्माण्डीसञ्ज्ञिकम् । यद्देवादेवहेडनमिति तिस्र ऋचः । षडङ्गरुद्रजपो वा । गरुडपुराणवचनात् । ततो वृषवत्सतरीणां स्नापनम् । अलङ्करणम् । चक्रत्रिशूलकरणम् । अङ्कनम् । वृषस्य कर्णे जपः । वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः । वृणे हितमहं भक्त्या स मा रक्षतु सर्वतः ॥ ततो गृहीतपुष्पाञ्जलिर्वृषं त्रिः प्रदक्षिणीकृत्य नमस्कुर्यात् । ततो वृषवत्सतरीणां वस्त्रेण संश्लेषः । अयं हि वो मया दत्तः सर्वासां पतिरुत्तमः । तुभ्यं चैता मया दत्ताः पत्न्यः सर्वा मनोरमाः ॥ ततश्चतुःकृत्वोऽग्निम्प्रदक्षिणीकृत्य वत्सतरीणामग्निप्रदक्षिणाश्चतस्रः कारयित्वा पुच्छे पुरुषसूक्तेन प्रेतनाम्ना च तर्पणङ्कार्यम् । तत उत्सर्गः । आद्येत्यादिदेशकालौ स्मृत्वा एतं वृषं रुद्रदैवतं यथाशक्त्यलङ्कृतं गन्धाद्यर्चितमेवंविधवत्सतरीसहितममुकगोत्रस्यामुकप्रेतस्य प्रेतत्वमुक्तयेऽहमुत्सृजामि । एनं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण । मा नः साप्त जनुषा सुभगारायस्पोषेण समिषा मदेमेति सव्येन पाणिना वृषपुच्छङ्गृहीत्वा दक्षिणेन कुशतिलसहिता अप आदाय अमुकगोत्रायामुकप्रेताय एष एव मया दत्तस्सन्तारयितुं सर्वदा इत्युच्चार्य तिलहिरण्यसहितमुदकम्भूमौ निक्षिपेत् । ततो वत्सतरीमध्यस्थितस्य वृषस्य मयोभूरभिमा वाहिस्वाहेत्यादि स्वर्णसूर्यः स्वाहेत्यन्तेनानुवाकशेषेणाभिमन्त्रणम् । ततो दक्षिणस्कन्धेन वृषप्रेरणम् । यथेष्टपथं पर्यटेति । ततः शक्त्यनुसारेण पायसेन ब्राह्मणानाम्भोजनम् । सहिरण्यस्य रुद्रकुम्भस्य धेनोश्च होत्रे प्रदानम् ॥ इति वृषोत्सर्गः । ततस्तन्त्रेण चत्वारि श्राद्धानि । आद्यन्नवश्राद्धम्प्रथमदिनवत् । तदुक्तङ्गरुडपुराणे स्मृतौ च । प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमेपि वा । नवमैकादशे चैव नवश्राद्धानि कारयेत् इति । पूर्वदिवसमारभ्य न कृतञ्चेदेकादशेह्नि कुर्यात् । नवश्राद्धानामन्त्यमासिकानामाद्यं स्वतन्त्रमेकोद्दिष्टमेवेति तत्र स्वतन्त्रैकोद्दिष्टे क्रियमाणे देशकालकर्त्रैक्यात्तन्त्रेणानुष्ठानसिद्धिः । पृथगनुष्ठानपक्षे त्वादौ स्वतन्त्रैकोद्दिष्टन्ततो नवश्राद्धन्ततो मासिकमिति स्मृत्यर्थसारे । तत्रैकादशाहे आद्यमासिकश्राद्धे एकादशब्राह्मणानामामन्त्रणम् । पूर्वेद्युः स्नात्वा विप्रेषु प्रेतनियोजनम् । गतोऽसिदिव्यलोके

त्वं कृतान्तविहितात्पथः। मनसा वायुभूतेन विप्रे त्वाऽहन्नियोजये॥ पूजयिष्यामि भोगेन एवं विप्रे निवेदयेत्। अस्तमिते विप्रनिवेशनम्। पाद्यन्दत्वा नमस्कृत्य तैलेन पादौ प्रक्षालयेत्। उदिते विप्रस्य केशश्मश्रुनखच्छेदङ्कारयित्वा स्नानाभ्यञ्जनञ्च दद्यात्। ततो भूमिभागग्रहणम्। महास्थण्डिलस्य करणम्। नद्यादौ सचैलं स्नात्वा तीर्थानि मनसा ध्यात्वा आत्मनोऽभ्युक्षणम्। एवं शुद्धिङ्कृत्वा ब्राह्मणानामावाहनम्। आगतन्दृष्ट्वा स्वागतकरणम्। अर्घ्यपाद्यदानम्। आसनोपकल्पनम्। आसने उपवेशनम्। छत्रोपानहदानम्। तिलोपचारकरणम्। नामगोत्रमुदाहृत्य प्रेताय तदनन्तरम्। शीघ्रमावाहयेद्विप्रे दर्भहस्तोऽथ भूतले॥ तत्र मन्त्रः। इहलोकम्परित्यज्य गतोऽसि परमाङ्गतिम्। मनसा वायुरूपेण विप्रे त्वां योजयाम्यहम्। एवमावाह्य तं गन्धपुष्पधूपैः समर्चयेत्। ततो वस्त्राभरणदानम्। पक्वान्नदानम्। अष्टादशपदार्थवर्जितं सकलं श्राद्धम्। वासोहिरण्यदाम्युपानच्छत्रोदकुम्भानां गुणवते ब्राह्मणाय दानम्। ततः स्नानम्। तत एकादशभिर्ब्राह्मणै रुद्रश्राद्धम्। ततः स्नानम्। विष्णुपूजनम्। प्रेतोद्देशेन त्रयोदशकुम्भदानम्। त्रयोदशपददानम्। भाजनानि सतिलानि त्रयोदश देयानि। मुद्रिकावस्त्रयुग्मच्छत्रोपानहदानम्। अश्वरथगजमहिषीशय्यादानम्। गोभूतिलहिरण्यादिदानम्। ताम्बूलपूगदानम्। एकादशाहादारभ्याब्दं यावत्सान्नघटदानम्। देवालये पाषाणे वा उदकदानम्। ऋणधेनुदानम्। ततो वैश्वदेवः॥ इति क्रियापद्धतिः॥ इति नवकण्डिकागदाधरभाष्ये एकोद्दिष्टप्रकरणम्॥ ॥*॥ ॥*॥ ॥*॥

मूलम्॥ ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य। प्रेतपात्रं पितृपात्रेष्वासिञ्चति, ये समाना इति द्वाभ्याम्। एतेनैव पिण्डो व्याख्यातः। अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यात्॥ ॥५॥ ॥*॥ ॥*॥ ॥*॥

कर्कः॥ ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य॥ संवत्सरे पूर्णे सपिण्डीकरणङ्कर्तव्यम्। पूर्णग्रहणादूर्द्ध्वं नास्त्येव न प्राक्कर्तव्यम्। आहिताग्निना तु प्रागमावास्यायाः कर्तव्यम्। पिण्डपितृयज्ञाधिकारात्। अधिकारः

प्रेतपितृकत्वात्, प्रेतेभ्यो ददातीति वचनात्। पितृप्रभृति ददातीति वचनात्। सपिण्डीकरणं कार्यं पूर्वमेव। असपिण्डीकृतानां दानाभावाच्च। कथमभाव इति चेत्। सपिण्डीकरणमित्यन्वर्थसञ्ज्ञयैवायमर्थोऽवगम्यते। तस्मात्प्रागपि वत्सरात्सपिण्डीकरणमस्त्येव। तथाचान्यार्थदर्शनम्। अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत्। तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विज इति। अन्नोदककुम्भविधिपरे वाक्ये अर्वाक् संवत्सरात्सपिण्डीकरणं दर्शयति। तथा च गृह्यकारः। पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात्पुत्रवांश्चेदिति। उक्तन्यायेनानाहिताग्निनाऽपि चाभ्युदयिकं कुर्वता इदं पूर्वमेव कर्तव्यमिति। तच्चैतत् पुत्रवतः स्यात्, पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात्पुत्रवांश्चेदिति वचनात्। अपुत्रस्य प्रेतस्य पितृगणेन सह समानपिण्डतैव नोपपद्यते। तथाच स्मरन्ति। वर्षे वर्षे तु कर्तव्या बान्धवैरुदकक्रिया। अदैवम्भोजयेच्छ्राद्धं पिण्डमेकन्तु निर्वपेत्। इत्यपुत्रस्य प्रेतस्य प्रतिसंवत्सरं बान्धवैः कर्तव्यमेकोद्दिष्टं स्मरन्ति। अतोऽपि न सपिण्डीकरणमपुत्रस्य, चत्वारि पात्राणि पूरयित्वेति चतुर्ग्रहणात् त्रिभ्य एव दानं न षड्भ्योऽपि। तत्र च त्रीणि पितॄणामेकं प्रेतस्य भवति॥ प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्याम्॥ येसमाना इति मन्त्रद्वयेन प्रेतपात्रात् पितृपात्रेषु उदकमासिञ्चतीति॥ एतेनैव पिण्डो व्याख्यातः॥ पिण्डेऽयमेव न्याय इति॥ अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यात्॥ निगदमेतत्॥५॥

गदाधरः॥ सपिण्डीकरणमाह॥ ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य॥ संवत्सरे पूर्णे सपिण्डीकरणङ्कार्यम्। अथवा त्रिपक्षे द्वादशाहे वा वृद्धिप्राप्तौ वा कुर्यात्। इति चत्वारः पक्षादर्शितास्तत्रेयं व्यवस्था। द्वादशाहे पितुः सपिण्डीकरणमग्निमता कार्यम्। सपिण्डीकरणं विना पिण्डपितृयज्ञस्यासिद्धिः। साग्निकस्तु यदा कर्ता प्रेतो वाऽप्यग्निमान्भवेत्। द्वादशाहे तदा कार्यं सपिण्डीकरणम्पितुरिति वचनात्। निरग्निकस्तु त्रिपक्षे वृद्धिप्राप्तौ संवत्सरे वा कुर्यात्। यदा प्राक्संवत्सरात्सपिण्डीकरणन्तदा षोडशश्राद्धानि कृत्वा सपिण्डीकरणङ्कार्यम् उत सपिण्डीकरणङ्कृत्वा स्वकाले तानीति संशयः। उभयथा वचनदर्शनात्। श्राद्धानि षोडशादत्वा नतु कुर्यात्सपिण्डनम्। श्राद्धानि षोडशापाद्य विदधीत सपिण्डनमिति॥ षोडशश्राद्धानि च। द्वादशाहे त्रिपक्षे च

षण्मासे मासि चाब्दिके । श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिरितिदर्शितानि ॥ तथा, यस्यापि वत्सरादर्वाक् सपिण्डीकरणं भवेत् । मासिकञ्चोदकुम्भञ्च देयन्तस्यापि वत्सरमिति । तत्र सपिण्डीकरणङ्कृत्वा स्वकाले तानि कर्तव्यानीति प्रथमः कल्पः । अप्राप्तकालत्वेन प्रागनधिकारात् । यदपि वचनं षोडशश्राद्धानि कृत्वैव सपिण्डीकरणं संवत्सरात्प्रागपि कर्तव्यमिति सोऽयमापत्कल्पः । यदा त्वापत्कालेन प्राक् स चेत्सपिण्डीकरणात् प्रेतश्राद्धानि करोति तदैकोद्दिष्टविधानेन कुर्यात् । यदा तु मुख्यकल्पेन स्वकालएव तानि करोति तदाऽऽब्दिकं यो यथा करोति पार्वणमेकोद्दिष्टं वा तथा मासिकानि कुर्यात् । सपिण्डीकरणादर्वाक् कुर्वञ्छ्राद्धानि षोडश । एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥ सपिण्डीकरणादूर्द्ध्वं यदा कुर्यात्तदा पुनः । प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि, इति स्मरणात् ॥ चत्वारि पात्राणि पूरयित्वेति चतुर्ग्रहणात्त्रिभ्यः प्रेतस्य पितृपितामहप्रपितामहेभ्य एव दानम् । नच षड्भ्योऽपि । तत्र च त्रीणि पात्राणि पितॄणाम् एकम्प्रेतस्य भवति ॥ प्रेतपात्रम्पितृपात्रेष्वासिञ्चति येसमाना इति द्वाभ्याम् ॥ प्रेतसम्बन्धि पात्रङ्गृहीत्वा पितृपितामहप्रपितामहपात्रेषु ये समाना इति द्वाभ्याम्मन्त्राभ्यामासिञ्चति प्रत्यासेकम्मन्त्रौ भवतः । आसेकप्रकारो ब्रह्मपुराणे ॥ चतुर्थ्यमर्घपात्रेभ्य एकं वामेन पाणिना । गृहीत्वा दक्षिणेनैव पाणिना सतिलोदकम् ॥ संसृजेच्च तथाऽन्येषु येसमाना इति स्मरन् । प्रेतम्प्रेतस्य हस्तेषु चतुर्भागजलं क्षिपेत् ॥ ततः पितामहादेस्तु तन्मन्त्रैश्च पृथक् पृथक् इति । वाजसनेयिभिस्तु पूर्वम्पितृभ्यो देयम् पश्चात्प्रेताय दानम् ॥ एतेनैव पिण्डो व्याख्यातः ॥ यथा प्रेतार्घपात्रस्थं जलं येसमाना इति द्वाभ्याम्मन्त्राभ्याम्पात्रत्रये स्थापितम् एवमेव प्रेतपिण्डमपि त्रेधा कृत्वा पिण्डत्रये निदध्यादित्यर्थः । तत्प्रकारश्च ब्रह्मपुराणे ॥ दत्वा पिण्डमथाष्टाङ्गन्ध्यात्वा तञ्च सुभास्वरम् । सुवर्णरौप्यदर्भैस्तु तस्मिन्पिण्डन्ततस्त्रिधा । कृत्वा पितामहादिभ्यः पितृभ्यः प्रेतमर्पयेत् । तथा, सुवर्तुलांस्ततस्तांस्तु पिण्डान्कृत्वा प्रपूजयेत् । अर्घैः पुष्पैस्तथा धूपैर्दीपैर्माल्यानुलेपनैरिति ॥ एतच्च प्रेतश्राद्धसहितं सपिण्डीकरणं संविभक्तधनेषु बहुषु भ्रातृषु सत्स्वपि एकेनैव कृतेनालं न सर्वैः कर्तव्यम् ॥ नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । एकेनैव तु कार्याणि संविभक्तधनेष्वपीति स्मरणात् । मातुः पिण्डदानादौ गोत्रे विप्रतिपत्तिः ॥ भर्तृगोत्रेण पितृगोत्रेण वा देयम् । उभयथा वचनदर्शनात् । मातुः सपिण्डीकरणे विरुद्धानि वाक्यानि दृश्यन्ते । तत्रापि पितामह्यादिभिः सह सपिण्डीक-

रणं स्मृतमिति । तथा भर्त्राऽपि भार्यायाः स्वमात्रादिभिः सह सपिण्डीकरणङ्कर्तव्यमिति ॥ पैठीनसिराह । अपुत्रायाम्मृतायान्तु पतिः कुर्यात्सपिण्डताम् । श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणम्भवेदिति । पत्या सह सपिण्डीकरणं यम आह । पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः । सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैरिति । उशनसा तु मातामहेन सह सपिण्डीकरणमुक्तम् । पितुः पितामहे यद्वत्पूर्णे संवत्सरे सुतैः ॥ मातुर्मातामहे तद्वदेषा कार्या सपिण्डतेति । एवं विधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्ता स्वमात्रैव सापिण्ड्यङ्कुर्यात् । अत्राचारादनुष्ठानम् ॥ अत ऊर्ध्वम्प्रेतायान्नन्दद्याद्यस्मिन्नहनि प्रेतः स्यात् ॥ अतः सपिण्डीकरणादूर्द्ध्वम्प्रेतायान्नन्दद्याद्यस्मिन्नहनि यस्यान्तिथौ प्रेतः स्यादित्यर्थः । यद्यप्यत्र प्रेतायेत्येकवचननिर्देशस्तथाऽपि स्मृत्यन्तरात्त्रिभ्यो देयम् । मासश्चात्र चान्द्रो ग्राह्यः । यथा परमेष्ठी । आब्दिके पितृकार्ये च चान्द्रोमासः प्रशस्यते । विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृत इति ॥

इति नवकण्डिकाभाष्ये पञ्चमी कण्डिका ॥ ५ ॥ * ॥ ॥ * ॥ ॥ * ॥

अथ प्रयोगः ॥ द्वादशाहे विधिवत्स्नात्वा विष्णुं सम्पूज्य ऊनमासिकमेकोद्दिष्टङ्कुर्यात् । ततः स्नानम् प्रेतोद्देशेन सान्नानां सजलानां द्वादशघटानां दानम् । एकावर्द्धनी पक्वान्नजलपूरिता विष्णवे देया । एको धर्मराजाय घटो देयः । एकश्चित्रगुप्ताय । ततो मासिकानि चतुर्दशश्राद्धान्येकतन्त्रेण । तत्र क्रमः । द्वितीयमासे त्रिपक्षे तृतीयमासे चतुर्थमासे पञ्चममासे षष्ठे ऊनषष्ठे सप्तमे अष्टमे नवमे दशमे एकादशे द्वादशे ऊनाब्दे चेति प्रेतैकोद्दिष्टवत्कार्याणि । ततः स्नात्वा सपिण्डीकरणङ्कुर्यात् । तत्र पूर्वं वैश्वदेवश्राद्धम् । देवपादप्रक्षालनम् । ततः पार्वणम् प्रेतस्य पितृपितामहप्रपितामहानाम् । तदर्थन्त्रयाणाम्पादप्रक्षालनम् । तत्र सर्वम्पार्वणे पार्वणवत् एकोद्दिष्टे एकोद्दिष्टवत्, अत्राद्य मासे पक्षे तिथौ अमुकगोत्रस्यामुकप्रेतस्य वसुरुद्रादित्यलोकप्राप्त्यर्थम्प्रेतत्वनिवृत्त्यर्थं च अमुकगोत्रस्यामुकप्रेतस्य अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां वैश्वदेवपूर्वकं सैकोद्दिष्टम्पार्वणविधिना सपिण्डीकरणश्राद्धं युष्मदनुज्ञयाऽहङ्करिष्ये । आसनम् । आवाहनम् । विश्वेषान्देवानां पितॄणाम्प्रेतस्य चार्घपात्राणि पूरयित्वाऽभ्यर्च्य विश्वेभ्योदेवेभ्योऽर्घन्दत्वा ततः प्रेताय जलम्, प्रेतपात्रे जलचतुर्थभागेनार्घन्दत्वाऽवशिष्टमर्घपात्रस्थितञ्जलं पित्रादिपात्रेषु विभज्य तृतीयांशन्निनयेत् । तत्र प्रेतपात्रं पितृपात्रेषु संयोजयिष्यइति पृष्ट्वासंयोजयेत्यनुज्ञातोऽर्घं संयोजयेत् । एवम्पिण्डयोजनेऽप्यनुज्ञाप्रार्थनम् ।

तत्रेदं येसमाना इतिमन्त्रद्वयम्पठित्वा अमुकगोत्रस्यामुकप्रेतस्यार्घः अमुकगोत्रस्य प्रेतस्य पितुरमुकशर्मणोऽर्घेण सह संयुज्यताम्, वसुलोकप्राप्तिरस्त्विति वदेत्। एवम्पितामहपात्रे प्रपितामहपात्रे च। ततस्तेभ्योऽर्घन्दद्यात्। पार्वणे नियमेन विकिरः। पिण्डदाने, पूर्वम्पार्वणसम्बन्धिनः पिण्डान्निरूप्य पश्चात्प्रेतपिण्डन्त्रेधा विभज्य तत आद्यम्भागमादाय येसमाना इति मन्त्रद्वयम्पठित्वा अमुकगोत्रस्यामुकप्रेतस्य पिण्डः अमुकगोत्रस्य प्रेतस्य पितुरमुकशर्मणः पिण्डेन सह संयुज्यतामित्युक्त्वा प्रथमं पिण्डं संयोज्य प्रथमम्पिण्डं वर्तुलं कुर्यात्। ततो वसुलोकप्राप्तिरस्त्विति वदेत्। एवमितराभ्याम्पिण्डाभ्यां संयोजनम्। अनन्तरं रुद्रलोकप्राप्तिरस्तु। आदित्यलोकप्राप्तिरस्तु। इति यथाक्रमं वदेत्। अत ऊर्द्धमत्र पितर इति जपादि। पूजनानन्तरम्पिण्डानभिमृश्येदं वदेत्। एष वोऽनुगतः प्रेतः पितरस्तन्दधामि वः। शिवमस्त्विति शेषाणां जायताञ्चिरजीविनाम्। समानीव आकूतिः समानाहृदयानि वः। समानमस्तुवो मनो यथावः सुसहासती। अत ऊर्ध्वम्प्रेतशब्दो नोच्चार्योऽक्षय्यादिषु। श्राद्धं समाप्य मोक्षधेनुसङ्कल्पः॥ इतिनवकण्डिकागदाधरभाष्ये सपिण्डीकरणप्रयोगः॥ ॥*॥ ॥*॥ ॥*॥

मूलम्॥ आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमन्त्रवर्जं जप ऋजवो दर्भा यवैस्तिलार्थाः सम्पन्नमिति तृप्तिप्रश्नः सुसम्पन्नमितीतरे ब्रूयुर्दधिबदराक्षतमिश्राः पिण्डा नान्दीमुखान् पितॄनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान् पितॄन्वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति न स्वधां प्रयुञ्जीत युग्मानाशयेदत्र॥ ॥६॥ ॥*॥ ॥*॥ ॥*॥

कर्कः॥ आभ्युदयिके प्रदक्षिणमुपचार इति॥ पुत्रजन्मादावभ्युदये यच्छ्राद्धं तदाभ्युदयिकमुच्यते। तत्र प्रदक्षिणमुपचारः प्रदक्षिणग्रहणात् यज्ञोपवीतिना प्राक्संस्थमुदक्संस्थं वा प्राङ्मुखेन वा कर्तव्यतादि भवेत्॥ पूर्वाह्णे॥ ना पराह्णे॥ पित्र्यमन्त्रवर्जं जपः॥ स चायमश्नत्सु यः पितृमन्त्रजपः स प्रतिषिध्यते।

नत्वायन्तुन इत्ययम्। पित्र्यमन्त्र इति संज्ञाशब्दत्वात्। अस्य च अपाकाहनार्थत्वात् ॥ ऋजवो दर्भाः॥ पित्र्ये द्विगुणाः प्राप्नुवन्ति ते च प्रतिषिध्यन्ते ऋजवः प्रत्येतव्याः ॥ यवैस्तिलार्थाः॥ यस्तिलार्थः स सर्वो यवैः कर्तव्यः। तदत्र द्रव्याभिधायकत्वात् तन्मन्त्रो यवोसीति यथार्थमूहितव्यः ॥ सम्पन्नमिति तृप्तिप्रश्नः ॥ तृप्ताः स्थेत्यस्य स्थाने सम्पन्नमित्ययं प्रश्नो भवति॥ दधिबदराक्षतमिश्राः पिण्डाः ॥ दधिबदराक्षतमिश्रेणान्नेन पिण्डा देयाः॥ नान्दीमुखान् पितृनावाहयिष्यइति पृच्छत्यावाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने ॥ अक्षय्योदकस्थाने नान्दीमुखाः पितरः प्रीयन्तामिति प्रयोगो भवति॥ नान्दीमुखान् पितृन्वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥ नान्दीमुखान् पितृन् वाचयिष्य इति पृच्छति वाच्यतामिति ब्राह्मणैरनुज्ञातो नान्दीमुखाः पितर इतीमं मन्त्रमुदाहरेत् ॥ न स्वधां प्रयुञ्जीत ॥ स्वधोदाहरणप्रतिषेधात्, तत्सारूप्यात् नान्दीमुखान् पितृन् वाचयिष्य इति तत्स्थाने प्रयोगः कर्तव्यः। तत्र केचित्स्वधोदाहरणप्रतिषेधात् अस्तु स्वधेत्युच्यमान इति चोपदेशात्कुशेष्वपां निषेकं नेच्छन्ति। तदयुक्तम् । मन्त्रनिषेकयोरशेषशेषित्वाभावात्। तस्मात्तस्मिन् काले निषेक इति ॥ युग्मानाशयेदत्र ॥ आभ्युदयिके युग्मानाशयेदिति ॥ ॥ ६ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

गदाधरः॥ वृद्धिश्राद्धमाह ॥ आभ्युदयिके प्रदक्षिणमुपचारः ॥ पुत्रजन्मविवाहादौ अभ्युदये यच्छ्राद्धन्तदाभ्युदयिकशब्देनोच्यते । तत्र प्रदक्षिणमुपचारः। प्रदक्षिणग्रहणेन यज्ञोपवीतिना प्राक्संस्थमुदक्संस्थं वा प्राङ्मुखेन वा कार्यमिति लभ्यते ॥ शातातपः, अनिष्ट्वा पितृयज्ञेन वैदिकं किञ्चिदाचरेत् । तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥ अकृत्वा मातृयागन्तु वैदिकं यः समाचरेत् । तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातर इति । मातृगणस्तु भविष्यपुराणे निरूपितः ॥ गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ धृतिः पुष्टिस्तथा तुष्टिरात्म-(नःकुल) देवतया सहेति ॥ विष्णुपुराणे, कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः । शुभकर्मणि बालानां चूडाकर्मादिके तथा ॥ सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखान्पितृगणादौ तर्पयेत्प्रयतो गृहीति ॥ जाबालिः। यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।

पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥ मातृश्राद्धन्तु पूर्वं स्यात्पितॄणान्तदनन्तरम् । ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतमिति ॥' वैदिककर्मसु प्रतिप्रयोगं श्राद्धावृत्तिप्रसक्तावाह कात्यायनः । असकृद्यानि कर्माणि क्रियेरन्कर्मकारिभिः । प्रतिप्रयोगन्नैताः स्युर्मातरः श्राद्धमेवचेति ॥ सत्यपि वैदिककर्मत्वेऽष्टकादिषु न श्राद्धङ्कर्तव्यमित्याह । कात्यायनः । नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यन्ती जातकर्मप्रोषितागतकर्मसु ॥ पूर्वाह्णे । एतदाभ्युदयिकम्पूर्वाह्णे भवति नापराह्णे । पुत्रजन्मादौ तु तत्कालएव ॥ पित्र्यमन्त्रवर्जञ्जपः ॥ अयष्वाग्नेत्सु यो जपः स निषिध्यते नत्वायन्तु न इत्ययम् । उदीरतामिति त्रयोदशर्चम्पित्र्यमिति पित्र्यमन्त्रसंज्ञा तस्यैव श्रवणात् ॥ ऋजवो दर्भाः ॥ अत्र ऋजवो दर्भा भवन्ति न द्विगुणाः ॥ यवैस्तिलार्थाः ॥ अत्र तिलार्थाः सर्वे यवैः कार्याः ॥ तदत्र मन्त्रेऽपि यवोऽसीत्यूहः कार्यो मुख्यद्रव्याभिधायकत्वात् ॥ सम्पन्नमिति तृप्तिप्रश्नः ॥ तृप्ताः स्थेति पृच्छतीत्यत्र तृप्ताः स्थेत्यस्य स्थाने सम्पन्नमित्ययम्प्रश्नो भवति । तथाच छन्दोगपरिशिष्टे । सम्पन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते । सुसम्पन्नमिति प्रोक्ते शेषमन्नन्निवेदयेत् इति ॥ सुसम्पन्नमितीतरे ब्रूयुर्दधिबदराक्षतमिश्राः पिण्डाः ॥ दध्ना बदरीफलैरक्षतैश्च मिश्राः पिण्डा अत्र देयाः ॥ नान्दीमुखान्पितॄनावाहयिष्यइति पृच्छति ॥ क्व पितॄनावाहयिष्यइत्यस्य स्थाने नान्दीमुखान्पितॄनावाहयिष्यइत्ययम्प्रश्नो भवति ॥ आवाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने ॥ प्रयोगो भवतीति शेषः ॥ नान्दीमुखान्पितॄन्वाचयिष्यइति पृच्छति ॥ पितॄन्वाचयिष्यइत्यस्य स्थाने इत्यर्थः ॥ वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥ इति द्विजैर्वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितर इत्यादिप्रीयन्तामित्यन्तम्पठेत् ॥ न स्वधाम्प्रयुञ्जीत ॥ स्वधोच्चारणन्न कुर्य्यादित्यर्थः ॥ युग्मानाशयेदत्र ॥ अत्रास्मिन्नाभ्युदयिके युग्मान्ब्राह्मणान्भोजयेत् ॥ इति नवकण्डिकागदाधरभाष्ये षष्ठी कण्डिका ॥ ६ ॥

अथ प्रयोगः ॥ तत्र पूर्वन्देशकालौ स्मृत्वा अमुकनिमित्तम्मातृपूजापूर्वकं वसोर्द्धारापूर्वकञ्च नान्दीश्राद्धमहङ्करिष्यइति सङ्कल्पः । ततः क्षालितैः शुक्लतण्डुलैः पीठस्योपरि गौर्यादिषोडशमातॄः स्थापयेत् । तद्यथा ॐ भूर्भुवः स्वः गणपतिं स्थापयामि एवङ्गौरीं स्थापयामि पद्माम्, शचीम्, मेधाम्, सावित्रीम्, विजयाम्, जयाम्,

देवसेनाम्, स्वधाम्, स्वाहाम्, मातृः, लोकमातृः, धृतिम्, पुष्टिम्, तुष्टिम्, आत्मनः कुलदेवतां, स्थापयामि । तत आसाम्मनोजूतिरिति प्रतिष्ठापनञ्च । ततः पूजा, गणपतिसहितषोडशमातृभ्यो नमः गन्धं समर्पयामि । पुष्पं धूपं नैवेद्यं ताम्बूलं दक्षिणाः । गणपतिसहितानां षोडशमातृणां पूजनविधेर्यन्न्यूनं यदतिरिक्तन्तत्परिपूर्णमस्तु ॥ इति मातृपूजनम् ॥ अथ वसोर्द्धारापूजनम् ॥ द्रवीभूतङ् घृतङ्गृहीत्वा कुड्यादिषु वसोः पवित्रमसीति धाराः पञ्च सप्त वा उदक्संस्थाः कुर्यात् ॥ मनोजूतिरिति प्रतिष्ठापूर्वकं वसोर्द्धारादेवताभ्यो नम इति पञ्चोपचारैः पूजयेत् ॥ इति वसोर्द्धाराकरणम् ॥ अथ नान्दीश्राद्धम् ॥ तच्च यथाकुलदेशाचारेण सपिण्डकमपिण्डकं वा कार्यम् । तदुक्तम्भविष्यपुराणे, पिण्डनिर्वपणङ्कुर्यान्न वा कुर्याद्विचक्षणः । वृद्धिश्राद्धे कुलाचारो देशकालाद्यवेक्ष्य हि ॥ अपिण्डकेऽग्नौकरणादीनामपि निषेधः । तथाहि, अग्नौकरणमर्घञ्चावाहनञ्चावनेजनम् । पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्तते ॥ पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते । स्वधावाचनलोपोऽस्ति विकिरस्तु न लुप्यते ॥ अक्षय्यदक्षिणा स्वस्ति सौमनस्यं यथास्थितमिति । तच्च सपिण्डकमाभ्युदयिकं लिख्यते ॥ आचमनम् प्राणायामः वैश्वदेवार्थे मात्राद्यर्थे पित्राद्यर्थे सपत्नीकमातामहाद्यर्थे च द्वौ द्वौ विप्रौ युग्माः शक्तितो भोज्याः ॥ अमूला ऋजवो दर्भाः । यज्ञोपवीती प्राङ्मुखो दद्यात् । तिलार्थे यवाः । नान्दीमुखाः सत्यवसुसंज्ञका विश्वेदेवा एतद्वः पाद्यम्पादावनेजनं पादप्रक्षालनम् एषोऽर्घः इदमत्र चन्दनम्पुष्पञ्च । अमुकगोत्राः मातृपितामहीप्रपितामह्यः नान्दीमुख्यः एतद्वः पाद्यम् पादावनेजनम्पादप्रक्षालनम् एष वोऽर्घः इदमत्र चन्दनम्पुष्पम् । अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः युग्मरूपाः एतद्वः पाद्यम्पादावनेजनम् पादप्रक्षालनम् एषवोऽर्घः इदमत्र चन्दनम्पुष्पम् । अमुकगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः नान्दीमुखा युग्मरूपा एतद्वः पाद्यम् पादावनेजनम् पादप्रक्षालनम् एष वो ऽर्घः इ० । तत आचमनन्दिग्बन्धनम् । अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् । तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः । ऊर्ध्वतस्त्वर्यमा रक्षेत्कव्यवाडनलोऽप्यधः ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः । सर्वतश्चाधिपस्तेषां यमो रक्षाङ्करोतु मे ॥ तिला रक्षन्त्वसुरान्दर्भा रक्षन्तु राक्षसान् । पङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः ॥ निहन्मि सर्वं यदमेध्यवदित्यादि सर्वं इत्यन्तेन मन्त्रेण नीवीबन्धनम् । श्राद्धभूमौ गयामित्यारभ्य गयायै नमः इत्यन्तम्पठेत् । ततः कर्मार्थञ्जलाभिमन्त्रणं यद्देवा इति तिसृभिर्ऋग्भिः । ततः पाकप्रोक्षणम् ।

दुष्टदृष्ट्यादिशूद्रसम्पर्कदोषाः पाकादीनां पवित्रताऽस्त्विति । देशकालशाकपात्रद्रव्य-श्राद्धसम्पदस्तु । अद्येत्यादि देशकालौ स्मृत्वा अमुकगोत्राणाम्मातृपितामहीप्रपितामहीनान्नान्दीमुखीनान्तथाऽमुकगोत्राणां पितृपितामहप्रपितामहानां नान्दीमुखानां युग्मरूपाणां तथाऽमुकगोत्राणाम् मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानां युग्मरूपाणां पार्वणमन्त्रविधिना आभ्युदयिकं श्राद्धमहङ्करिष्ये । सत्यवसुसंज्ञकानां विश्वेषान्देवानामिदमासनम् । हस्तप्रक्षालनम् । उपग्रहविष्टः । गोत्राणाम्मातृपितामहीप्रपितामहीनां नान्दीमुखीनामिदमासनम् । हस्तप्रक्षालनमुपग्रहविष्टः । गोत्राणाम्पितृपितामहप्रपितामहानां नान्दीमुखानामिदमासनम् । हस्तप्रक्षालनमुपग्रहविष्टः । गोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानान्नान्दीमुखानामित्यादि । सत्यवसुसञ्ज्ञकान्विश्वान्देवानावाहयिष्ये । आवाहयेत्यनुज्ञातो "विश्वेदेवास" इत्यावाहयेत् । ततो यवैरवकीर्य "विश्वेदेवाः शृणुतेममिति जपेत् ॥ आगच्छन्तु० भवन्तु ते इति पठेत् । गोत्राः मातृपितामहीप्रपितामहीः नान्दीमुखीः आवाहयिष्ये । आवाहयेत्यनुज्ञात "उशन्तस्त्वेत्यनया आवाहयेत् । ततो यवैरवकीर्य "आयन्तुन इति जपेत् । गोत्रान्पितृपितामहप्रपितामहान् नान्दीमुखानावाहयिष्ये । आवाहयेत्यनुज्ञात "उशन्तस्त्वेत्यावाहयेत् । यवैरवकीर्य "आयन्तुन" इति जपेत् । गोत्रान्मातामहप्रमातामहवृद्धप्रमातामहान्सपत्नीकान्नान्दीमुखानावाहयिष्ये । आवाहयेत्यनुज्ञात आवाहनावकिरणजपाः पूर्ववत् । ततोऽर्घपूरणम् "शन्नोदेवीरित्यनेन" । ततो यवावपनम् । यवोऽसि सोमदैवत्य इति । इदमत्र चन्दनम्पुष्पञ्च । अर्घङ्गृहीत्वा "यादिव्या" इतिमन्त्रेण सत्यवसुसंज्ञका विश्वेदेवा एष वोऽर्घ इति दद्यात् ॥ या दिव्या इति पठित्वा अमुकगोत्रा मातृपितामहीप्रपितामह्य एष वोऽर्घ इति । एवं सर्वत्र । प्रथमे पात्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जम्पात्रङ्करोति । ततो गन्धपुष्पधूपदीपवाससाञ्च प्रदानम् । सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वाहेति दत्वा । गोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नन्दीमुखीभ्यो यथादत्तङ्गन्धाद्यर्चनम् । गोत्रेभ्यः पितृप्रितामहप्रपितामहेभ्यो नान्दीमुखेभ्यो यथादत्तं गन्धाद्यर्चनम् । गोत्रेभ्यो मातामहप्र०भ्यो नान्दी०भ्यो यथाद० । आचमनम् । उद्धृत्य घृताक्तमन्नम्पृच्छत्यग्नौ करिष्यइति । कुरुष्वेत्यनुज्ञातस्ततो मेक्षणेनाहुती जुहोति । अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहेति ॥ निरग्निकस्तु विप्रपाणौ जले वा कुर्यात् । हुतशेषन्दत्वा पात्रमालभ्य जपति "पृथिवी ते पात्रं० स्वाहेति ॥ इदं विष्णुर्वि० सुरे इत्यङ्गुष्ठमन्नेऽवगाह्य "अपहता" इति यवान्विकीर्य । एवं सर्वत्र ॥ उष्णं० स्वि-

ष्टमन्नं दद्याच्छक्त्या वा ॥ ततः पित्र्यमन्त्रवर्जं जपः । अन्नप्रकिरणम् । आचमनम् । सकृत्सकृद्ब्राह्मणेभ्य उदकदानम् । ततः सप्रणवां गायत्रीं मधुव्वाता इति त्र्यृचं च पठेत् । ब्राह्मणाः सम्पन्नमिति तृप्तिप्रश्नः । सुसम्पन्न मिति प्रतिवचनम् । शेषमन्नमप्यस्ति । इष्टैः सह भुज्यताम् । अपहता इत्युच्छिष्टसमीपे उल्लेखनम् । उदकोपस्पर्शनम् । साग्निकस्योल्मुकनिधानम् । अवनेजनम् । सकृदाच्छिन्नास्तरणम् । पिण्डदानम् । दधिबदराक्षतमिश्रं यथोक्तम् । अत्रपितर इत्युक्त्वोदङ्मुख आस्ते, आतमनात् । आवृत्त्यामीमदन्तेति जपः । ततोऽवनेजनम् । नीवीविसर्गः । नमोव इतिषडञ्जलिकरणं घोरशेषवर्जम् । एतद्व इति सूत्रदानम् । पिण्डानामभ्यर्चनादिनैवेद्यान्तम् । आचमनम् । ततः सुप्रोक्षितादि ऊर्ज्जमित्युदकनिषेकान्तम् । नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्योदकदानम् । तत ऊर्ज्जमित्युदकनिषेकान्तं स्वधावाचनवर्जम् पात्रोत्तानकरणम् । ततो दक्षिणादानादिगृहप्रवेशनान्तम् ॥

इति नवकण्डिकागदाधरभाष्ये आभ्युदयिकश्राद्धप्रयोगः ॥ ६ ॥

मूलम् ॥ अथ तृप्तिर्ग्राम्याभिरोषधीभिर्मासं तृप्तिस्तदभाव आरण्याभिर्मूलफलैरोषधीभिर्वा सहान्नेनोत्तरास्तर्पयन्ति छागोस्त्रमेषानालभ्य क्रीत्वा लब्ध्वा वा न स्वयंमृतानाहृत्य पचेन्मासद्वयन्तु मत्स्यैर्मासत्रयन्तु हारिणेन चतुरऔरभ्रेण पञ्च शाकुनेन षट् छागेन सप्त कौर्मेणाष्टौ वाराहेण नव मेषमांसेन दश माहिषेणैकादश पार्षतेन संवत्सरन्तु गव्येन पयसा पायसेन वा वार्ध्रीणसमांसेन द्वादशवर्षाणि ॥ ७ ॥

कर्कः ॥ अथ तृप्तिर्ग्राम्याभिरित्येवमादि अमावास्यायामित्येवमन्तं सूत्रं निगदव्याख्यातमिति ॥ इति कर्कोपाध्यायकृतं श्राद्धविधिभाष्यं समाप्तम् ॥

गदाधरः । अथ तृप्तिः ॥ उच्यतइति शेषः ॥ ग्राम्याभिरोषधीभिर्मासं तृप्तिः ॥ पितॄणामिति शेषः । ताश्च यवव्रीहिमाषतिलाद्याः । मनुः । तिलैर्व्रीहियवैर्माषैरद्भिर्मूलैः फलेन वा । दत्तेन मासम्प्रीयन्ते विधिवत्पितरो नृणामिति ॥ तदभावे आरण्याभिः ॥ मासन्तृप्तिरिति वर्तते । ग्राम्याणामभावे आरण्याभिः श्यामाकनीवाराद्याभिः ॥ मूलफलैरोषधीभिर्वा ॥ स्पष्टमेतत् ॥ सहान्नेनोत्तरास्तर्पयन्ति ॥ उत्तरा अग्रेवक्ष्यमाणाः पदार्थाः शाखादयः सर्वे अन्नेन मूलफलौषधीभिः सह दत्तास्तर्पयन्तीत्यर्थः ।

नतु केवलाः ॥ छागोस्रमेषानालभ्य क्रीत्वा लब्ध्वा वा न स्वयम्मृतानाहृत्य पचेत् ॥ छागो*स्रमेषाणाम्मध्येऽन्यतममन्येन हतं क्रयेण गृहीत्वा अथ लब्धं वाऽऽनीय पितॄंस्तर्पयेत् नतु स्वयं मृतानामाहरणम् ॥ मासद्वयन्तु मत्स्यैर्मासत्रयन्तु हारिणेन चतुर औरभ्रेण पञ्च शाकुनेन षट् छागेन सप्त कौर्मेणाष्टौ वाराहेण नव मेषमांसेन दश माहिषेणैकादश पार्षतेन संवत्सरन्तु गव्येन पयसा पायसेन वा वार्ध्रीणसमांसेन द्वादशवर्षाणि ॥ पाठीनादयो मत्स्याः हरिणादयो मृगाः उरभ्र आरण्यो मेषः शकुनिः पक्षी सोऽप्यनिषिद्धो ग्राह्यः, मेषश्चित्रमृगः वार्ध्रीणसो निगमोक्तः । त्रिपिबन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणसन्तु तम्प्राहुर्याज्ञिकाः श्राद्धकर्मणि ॥ त्रिपिबमित्युदकपानसमये मुखं कर्णद्वयञ्चोदकमध्ये पततीति त्रिपिबः ॥ इति नवकण्डिकागदाधरभाष्ये सप्तमी कण्डिका ॥ ॥ ७ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

मूलम् ॥ अथाक्षय्यतृप्तिः खड्गमांसङ्कालशाकं लोहछागमांसम्मधु महाशल्को वर्षासु मघाश्राद्धे हस्तिच्छायायाञ्च, मन्त्राध्यायिनः पूताः शाखाध्यायी षडङ्गविज्ज्येष्ठसामगो गायत्रीसारमात्रोऽपि पञ्चाग्निः स्नातकस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णो द्रोणपाठको ब्राह्मोढापुत्रो वागीश्वरो याज्ञिकश्च नियोज्या अभावेऽप्येकं वेदविदम्पङ्क्तिमूर्धनि नियुञ्ज्यात्, आसहस्रात्पङ्क्तिम्पुनातीति वचनात् ॥ ८ ॥

गदाधरः । अथाक्षय्यतृप्तिः ॥ उच्यतइति शेषः । किमक्षय्यकृद्द्रव्यमित्यत आह ॥ खड्गमांसं कालशाकं लोहच्छागमांसम् ॥ ललाटे शृङ्गवान्पशुः खड्गः । रक्तच्छागो लोहच्छागः । मधु । महाशल्कः ॥ मत्स्यविशेषः ॥ वर्षासु मघाश्राद्धे हस्तिच्छायायां च ॥ श्राद्धन्तृप्तिकरमिति शेषः ॥ मन्त्राध्यायिनः पूताः शाखाध्यायी षडङ्गविज्ज्येष्ठसामगो गायत्रीसारमात्रोपि पञ्चाग्निः स्नातकस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णो द्रोणपाठको ब्राह्मोढापुत्रो वागीश्वरो याज्ञिकश्च नियोज्याः ॥ एते मन्त्राध्यायीमुख्या याज्ञिकान्तास्ते सर्वे पङ्क्तिपा-

* छागाश्चकरः, उस्रस्तूपरः, स च शृङ्गहीनश्छागादिः, इति श्राद्धकाशिकायाम् । उस्रा वर्तामिति मन्त्रव्याख्यानावसरे "हे उस्रा अनड्वाहो" इति महीधरव्याख्याः । अनड्वाहो युक्तम्मादेवमिति, छागास्रमेषाः पश्वभिधानाद्यथालिङ्गमिति च कात्यायनसूत्रम् । नाहितानिङ्गनाम्ना गौरितीति च तट्टीका ।

वना: श्राद्धे नियोज्याः। एतेषान्नियोजनेन पितॄणामक्षय्यतृप्तिरित्यर्थः। मन्त्राध्यायिनः संहिताध्यायिनः। पूता आचरणेन पूताः। षडङ्गवित् शिक्षाकल्पादीनामर्थतो ग्रन्थतश्च वेत्ता। ज्येष्ठसाम्नः सन्ततगाता ज्येष्ठसामगः। अथ ज्येष्ठसाम छन्दोगानां व्रतं साम च तद्योगाज्ज्येष्ठसामगः। गार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्याग्निमान् पञ्चाग्निः। त्रिणाचिकेतः यजुर्वेदभागस्तद्व्रतञ्च तदुभयं योऽधीते यश्च करोति सोऽपि तद्योगात्त्रिणाचिकेतः। त्रिमधुः ऋग्वेदैकदेशः तदधीते तद्व्रतञ्चरति यः स त्रिमधुः॥ त्रिसुपर्णी अध्वर्युवेदभागस्यार्थतो ग्रन्थस्याध्येता। द्रोणपाठको धर्मशास्त्रपाठकः। ब्राह्मोढापुत्रो ब्राह्मविवाहपरिणीतापुत्रः। वागीश्वरो विद्वान्॥ अभावेऽप्येकं वेदविदम्पङ्क्तिमूर्द्धनि नियुञ्ज्यादासहस्रात्पङ्क्तिम्पुनातीति वचनात्॥

इति नवकण्डिकागदाधरभाष्ये अष्टमी कण्डिका॥ ॥ ८॥ ॥ * ॥

मूलम्॥ अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि द्वितीयायाᳬ स्त्रीजन्म श्वास्तृतीयायाञ्चतुर्थ्यां क्षुद्रपशवः पुत्राः पञ्चम्यां द्यूतर्द्धिः षष्ठ्यां कृषिः सप्तम्यां वाणिज्यमष्टम्यामेकशफं नवम्यां दशम्यां गावः परिचारका एकादश्यां धनधान्यानि द्वादश्यां कुप्यᳬ हिरण्यं ज्ञातिश्रैष्ठ्यञ्च त्रयोदश्यां युवानस्तत्र म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायाᳬ सर्वमित्यमावास्यायाᳬ सर्वमिति॥ ॥ ९॥ ॥ * ॥

गदाधरः॥ अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि द्वितीयायाᳬ स्त्रीजन्म श्वास्तृतीयायां चतुर्थ्यां क्षुद्रपशवः पुत्राः पञ्चम्यां द्यूतर्द्धिः षष्ठ्यां कृषिः सप्तम्यां वाणिज्यमष्टम्यामेकशफं नवम्यान्दशम्याङ्गावः परिचारका एकादश्यां धनधान्यानि द्वादश्यां कुप्यᳬ हिरण्यं ज्ञातिश्रैष्ठ्यं च त्रयोदश्यां युवानस्तत्र म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायाᳬ सर्वममावास्यायाᳬ सर्वमिति॥ प्रतिपदादयश्च कृष्णपक्षजाः। स्त्रीजन्म कन्योदयः। क्षुद्रपशव अजादयः। कृषिः कृषिफलम्। वाणिज्यं वाणिज्यफलम्। परिचारका दासादयः। कुप्यं सुवर्णरूप्यव्यतिरिक्तन्ताम्रादि। यूनां मृतानां त्रयोदश्यां श्राद्धन्देयम्। शस्त्रहतस्येति जलादिद्वात्रिंशद्दुर्मरणेन मृतानामुपलक्षणम्। प्रतिपदादितिथिष्वभिहितानि यानि फलानि तेषु स्वीयमनसोऽभीष्टान्सर्वान्कामानमावास्यायां श्राद्धदः

प्राप्नोति। अत्र यद्यपि सर्वकामप्राप्तिरविशेषेण कथिता, तथापि न युगपत्सर्वकामनाप्राप्तिः, अपितु अमावास्यायामनुष्ठितेन श्राद्धेनैकेनैककामनाप्राप्तिः। एवममावास्यान्तरमनुष्ठितेनान्येन श्राद्धेनान्यः काम इति ॥ इति श्री त्रिरग्निचित्सम्राट्स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते कातीयश्राद्धसूत्रभाष्ये नवमी कण्डिका ॥ ९ ॥ ॥ * ॥ ॥ * ॥

## ॥ भोजनसूत्रम् ॥

मूलम् ॥ वन्दे श्रीदक्षिणामूर्त्तिं सच्चिदानन्दविग्रहम् ॥ सर्वार्थानाम्प्रदातारं शिवादेहार्धधारिणम् ॥ १ ॥ अथातः श्रुतिस्मृतीरनुसृत्य भोजनविधिं व्याख्यास्यामः ॥ आचान्तो धृतोत्तरीयवस्त्रो धृतश्रीखण्डगन्धपुण्ड्रो भोजनशालामागत्य गोमयेनोपलिप्य शुचौ देशे विहितपीठाधिष्ठितो नित्यम्प्राङ्मुखो न दक्षिणामुखो न प्रत्यङ्मुखो न विदिङ्मुखः। श्रीकामश्चेत्प्रत्यङ्मुखः सत्यकामश्चेदुदङ्मुखो यशस्कामश्चेद्दक्षिणामुखो जीवन्मातृकवर्जं हस्तपादास्येषु पञ्चस्वार्द्रो नीवारचूर्णैर्गोमृदा भस्मनोदकेन वा मण्डलङ्कुर्यात्। चतुष्कोणं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य मण्डलाकृति वैश्यस्याभ्युक्षणं शूद्रस्य, यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति । एवम्मण्डलभस्मैतत्सर्वभूतानि रक्षत्विति तत्र भूमौ निहितपात्रेऽन्ने परिविष्टे पितुन्नुस्तोषमित्यनेन स्तुत्वा मानस्तोके नमोवः किरिकेभ्यो नमः शम्भवायेत्यभिमन्त्र्य प्रोक्षयेत्, सत्यन्त्वर्त्तेन परिषिञ्चामीति प्रातर्ऋतन्त्वा सत्येन परिषिञ्चामीति सायम्। तेजोऽसि शुक्रमस्यमृतमसीति यजुषाऽन्नमभिमृश्याग्निरस्मीत्यात्मानमग्निन्ध्यात्वा भूपतये भुवनपतये भूतानाम्पतय इति चित्राय चित्रगुप्ताय सर्वेभ्यो भूतेभ्यो नम इति दिवा प्रणवादिकैः

स्वाहानमोन्तैर्मन्त्रैः प्रतिमन्त्रं बलीन् हरेत्, अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ॥ त्वम्ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं विष्णोः परमम्पदम् । अमृतोपस्तरणमसि स्वाहेति विष्णुमन्त्रमभिध्यायन्नाचम्यान्नममृतं ध्यायन् मौनी हस्तचापल्यादिरहितो मुखे पञ्च प्राणाहुतीर्जुहोति ॥ १ ॥ प्राणाय स्वाहा ऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति क्रमं याज्ञवल्क्योऽमन्यत उदानाय स्वाहेति शौनकबौधायनौ । याज्ञवल्क्योदितक्रमो वाजसनेयिनाम् । दन्तैर्नोपस्पृशेत् । जिह्वया ग्रसेदङ्गुष्ठप्रदेशिनीमध्यमाभिः प्रथमामङ्गुष्ठमध्यमानामिकाभिर्द्वितीयामङ्गुष्ठानामिकाकनिष्ठिकाभिस्तृतीयां कनिष्ठिकातर्जन्यङ्गुष्ठैश्चतुर्थीं सर्वाभिरङ्गुलीभिः साङ्गुष्ठाभिः पञ्चमीम् । अङ्गुष्ठानामिकाग्राह्यान्नेनैता आहुतय इति हारीतव्याख्यातारः । सर्वाभिरेता इति बौधायनः । मौनन्त्यक्त्वा प्राग्द्रवरूपमश्नीयान्मध्ये कठिनमन्ते पुनर्द्रवाशी स्यान्मधुरम्पूर्वं लवणाम्लौ मध्ये कटुतिक्तादिकान् पश्चाद्यथासुखम्भुञ्जीत भुञ्जानो वामहस्तेनान्नन्न स्पृशेन्न पादौ न शिरो न वस्ति न पराभोजनं स्पृशेदेवं यथारुचिभुक्त्वा भुक्तशेषमन्नमादाय "मद्भुक्तोच्छिष्टशेषं ये भुञ्जते पितरोऽधमाः । तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु, इति पितृतीर्थेन दत्वाऽमृतापिधानमसि स्वाहेति हस्तगृहीतानामपामर्धं पीत्वाऽर्धम्भूमौ निक्षिपेत् । रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् । अर्थिनां सर्वभूतानामक्षय्यमुपतिष्ठत्विति, तस्माद्देशादपसृत्य गण्डूषशलाकादिभिस्तर्जनीवर्जमास्यं शोधयेत् ॥ २ ॥ न भार्यादर्शनेऽश्नीयान्न भार्यया सह न सन्ध्ययोर्न मध्याह्ने नार्धरात्रे नायज्ञोपवीती नाऽऽर्द्रशिरा नार्द्रवासा

नैकवासा न शयानो न ताम्रभाजने न भिन्ने न राजतसौवर्णशङ्खस्फाटिककांस्यभाजनवर्जं न लौहे न मृन्मये न सन्धिसंस्थिते न भुवि न पाणौ न सर्वभोजी स्यात्किञ्चिद्भोज्यं परित्यजेदन्यत्र घृतपायसदधिसक्तुपललमधुभ्यः, साध्वाचान्तो दक्षिणपादाङ्गुष्ठे पाणिं निःस्रावयेदङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठञ्च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुगिति श्वात्राः पीता इति नाभिमालभेत, अमृता इत्यतः प्रागगस्त्यं वैनतेयञ्च शनिञ्च वडवानलम् ॥ आहारपरिणामार्थं स्मरेद्भीमञ्च पञ्चममित्युदरमालभ्य. "शर्यातिञ्च सुकन्याञ्च च्यवनं शक्रमश्विनौ । भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न हीयत" इति स्मृत्वा मुखशुद्धिङ्कुर्यान्नमो भगवते वाजसनेयाय याज्ञवल्क्याय नमो भगवते वाजसनेयाय याज्ञवल्क्याय ॥ ॥ ३ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

॥ अथ श्रीयोगीश्वरद्वादशनामानि ॥

वन्देऽहम्मङ्गलात्मानम्भास्वन्तं वेदविग्रहम् ॥
याज्ञवल्क्यम्मुनिश्रेष्ठञ्जिष्णुं हरिहरप्रभम् ॥ १ ॥
जितेन्द्रियञ्जितक्रोधं सदा ध्यानपरायणम् ॥
आनन्दनिलयं वन्दे योगानन्दम्मुनीश्वरम् ॥ २ ॥
एवं द्वादश नामानि त्रिसन्ध्यं यः पठेन्नरः ॥
योगीश्वरप्रसादेन विद्यावान्धनवान् भवेत् ॥ ३ ॥



# शुद्धिपत्रम् ।

| अशुद्धम् | शोधनम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| यज्ञीय | यज्ञिय | ६ | २१ |
| मात्रस्तत्र | मात्रं तत्र | ८ | १८ |
| यद्दक्ता | यद्वक्तो | १० | ८ |
| जनीयङ्क | जनीङ्क | ,, | २० |
| प्रवित्राभ्या | पवित्राभ्या | ११ | २० |
| संम्राट् | सम्राट् | १२ | ९ |
| कांण्डिका | कण्डिका | ,, | १० |
| रूक्ते | रुक्ते | २७ | १९ |
| परित्याजा | परित्याज्या | ३० | १० |
| पृथीवी | पृथिवी | ३८ | १५ |
| पश्चातात् | पश्चात्तात् | ३९ | १६ |
| यजमानम् | यजमानः | ,, | २१ |
| वुध्या. | बुद्ध्या | ४१ | ४ |
| स्वतीति, | स्वस्तीति | ४६ | १७ |
| विशेषं | विशेषः | ४९ | ५ |
| वृत्यर्थ | वृत्त्यर्थ | ५२ | ५ |
| मुक्त्वा | रुक्त्वा | ५३ | २७ |
| कारयितत्वं | कारयितृत्वं | ९० | ७ |
| अद्याधिकरणे | आद्याधिकरणे | ,, | २५ |
| पुत्रादिमुखं | पुत्रादिमुख- | ९६ | १४ |
| पुरस्थिता | पुरःस्थिता | ,, | १५ |
| इहापुत्र | इहामुत्र | १२८ | ११ |
| वृद्धा | वृद्धाः | १३० | ४ |
| ब्रह्मचर्यो | ब्रह्मचर्यो | १३१ | १७ |
| यान्यन्तरा | यान्यान्तरा | ,, | २४ |
| निवृत्यर्थम् | निवृत्त्यर्थम् | १३२ | २९ |
| परीदय | परीदयः | १३४ | ३ |
| रुदाहृत | रुदाहृतः | ,, | ९ |
| ततोऽर्घ्यः | ततोऽर्घ्यः | १४० | १२ |
| चित्यै | चित्त्यै | १४३ | १ |
| सिध्यर्थ | सिद्ध्यर्थ | १४८ | ५ |
| शिरस्थ | शिरःस्थ | १५१ | ५ |
| चेति | वेति | १६७ | २८ |
| मध्यावृत्या | मध्यावृत्त्या | १७७ | २४ |
| ,, | ,, | ,, | २६ |
| तृचेन | त्र्यृचेन | १७९ | ११ |
| रभ्युन्नित | रभ्युन्नति | २०९ | १९ |
| ब्रा..णा | ब्राह्मणा | २१२ | ६ |
| त्वमीडा | त्वमिडा | ,, | २५ |
| वाह्मणे | ब्रह्मणे | २१९ | २१ |
| नाड्यां | नाड्या | २२० | ३ |
| रात्रोसो | रात्रासो | २६० | २७ |
| सामर्थ्याल्लेधा, | सामर्थ्याद्द्वेधा | २७९ | २९ |
| प्रसिध्या | प्रसिद्ध्या | २९१ | २४ |
| मन्त्रेणं | तन्त्रेण | ३१४ | १८ |
| मन्त्रिभ्या | मन्त्रीभ्या | ३४१ | १२ |
| ,, | ,, | ,, | १६ |
| पत्निको | पात्निको | ३७७ | १२ |
| हरित | हारीत | ३९८ | १७ |
| अकृप | अकृपृ | ४०१ | २ |
| प्रजापरिति | प्रजापतिरिति | ४२२ | १० |
| गृह्यम् | गृह्णम् | ४२४ | २० |
| विलिखने | विलिखिते | ४३० | २३ |
| आगात्स्वाहा, | आगाःस्वाहा | ४६१ | ३ |
| ततच्छिन्नन्ति, | ततश्छिनत्ति | ४६४ | ८ |
| वर्त्तन | वर्त्तते | ४७३ | १५ |
| भिमुखं | भिमुखं | ,, | ३० |
| निवृत्यर्थः | निवृत्त्यर्थः | ४९५ | २३ |
| पाऽभ्यत्र | पाऽभ्यव | ५०४ | २० |
| प्रतिमि | प्रमि | ,, | २५ |

## शुद्धिपत्रम् ।

| अशुद्धस्य | शोधनम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| उत्थानात् | औत्थानात् | ५१३ | २४ |
| पात्रयोभदेन, | पात्रयोर्भेदेन | ५१६ | २२ |
| वृत्ति | वृत्त | ,, | २८ |
| पदुक्तम्प्रता, | यदुक्तम्प्रेता | ५२८ | २६ |
| समाधको | ससाधको | ५३४ | १२ |
| ग्रष्ट्र | ग्रन्थ | ५५० | ७ |
| पित्रयच | पित्र्येच | ५८६ | १३ |
| पितभ्यः | पितृभ्यः | ६१२ | १५ |
| काष्ठै | काष्ठै | ६१७ | १६ |
| लोमं | लोम | ,, | २० |
| पर्श्वयोः | पार्श्वयोः | ६१८ | २ |
| अनुपलेपन, | अनुलेपन | ६२० | १ |
| देकाशे | देकादशे | ६२४ | २५ |
| प्रेतपत्रा | प्रेतपात्र | ६२७ | १३ |
| पिण्डत्रत्रये, | पिण्डत्रये | ,, | २१ |

